यदित्थं प्रज्ञापितोऽसौ कृतवांस्तदाह—

एवं से विजयघोसे, जयघोसस्स अंतिए ।
अणगारस्स निक्खंतो, धम्मं सुचा अणुत्तरं ( सोचा ण केवलं पा० ) ॥ ९९० ॥

एवमुक्तप्रकारेण जयघोषस्यानगारस्यान्तिके–समीपे निष्कान्तः–प्रव्रजितः धर्ममहिंसादि श्रुत्वा ॥ ४४ ॥ ९९० ॥

सम्प्रत्यध्ययनार्थमुपसंहरन्ननयोर्निष्क्रमणफलमाह—

खवित्ता पुव्वकम्माइं, संजमेण तवेण य । जयघोसविजयघोसा, सिद्धिं पत्ता अणुत्तरं ॥ ९९१ ॥ तिबेमि ॥

॥ जन्नइज्जं ॥ २५ ॥

स्पष्टा ॥ ४५ ॥ ९९१ ॥

इति यज्ञीयाध्ययनावचूरिः ॥

॥ इति श्रीउत्तराध्ययने पञ्चविंशतितमस्य यज्ञीयाध्ययनस्य अवचूरिः समाप्ता ॥

## ॥ अथ षड्विंशतितम सामाचार्यध्ययनम् ॥

अनन्तराध्ययने ब्रह्मगुणा उक्तास्तद्वांश्च यतिरेव स्यात्, तेन चावश्य सामाचारी विधेया सा अस्मिन्नुच्यते—

सामायारिं पवक्खामि, सव्वदुक्खविमुक्खणिं । जं चरित्ताण निग्गन्था (प्र० करला), तिण्णा ससारसागर ॥९९२॥

अस्य सामाचारीनामा, सामाचारी—यतिजनकर्त्तव्यतारूपा प्रवक्ष्यामि सर्वदु खविमोक्षणीं—अशेषशारीरमानसासातविमुक्तिहेतु, अत एव या चरित्वा—आसेव्य णमिति वाक्यालङ्कारे, निर्ग्रन्थास्तीर्णा उपलक्षणत्वात् तरन्ति च तरिष्यन्ति ससारसागर—भवसमुद्रम् ॥ १ ॥ ९९२ ॥

दशधा सामाचारी नाम

यथाप्रतिज्ञातमाह—

पढमा आवस्सिया नाम, बिइया य निसीहिया । आपुच्छणा य तइया, चउत्थी पडिपुच्छणा ॥९९३॥

पचमा छदणा नाम, इच्छाकारो अ छट्ठओ । सत्तमो मिच्छकारो य, तहकारो य अट्ठमो ॥ ९९४ ॥

अब्भुट्ठाण नवमा, दसमा उवसपया । एसा दसगा साहूण, सामायारी पवेइया ॥ ९९५ ॥

गाथा ३ स्पष्ट, नवर व्रतग्रहणादारभ्य कारण विना गुरवग्रहे आशातनादिदोपसम्भवात् न स्थेय, किंतु ?, गुर्वनग्रहात् निर्गन्तव्य, निर्गमन च नावश्यकीं विनेति प्राक् सोक्ता, निर्गत्य च यत्रास्पदे स्थेय तत्र निषेधिकीपूर्वकमेव प्रवेश्यमिति तदनु

सा, तत्राऽपि तिष्ठतो भिक्षाटनाद्यभिप्रायोत्पत्तौ गुरुपृच्छापूर्वकमेव तत्साधनमित्यनन्तरमाप्रच्छना, प्रच्छनायामपि गुरुनियुक्तत्वेन पुनः प्रवृत्तिकाले क्वचित् पृष्टव्या एव गुरव इति प्रतिप्रच्छना, कृत्वाऽपि गुर्वनुज्ञया भिक्षाटनादिकं नात्मम्भरिणैव भाव्यमिति तदनु छन्दना–प्राग्गृहीतद्रव्यजातेन शेषयतिनिमन्त्रणात्मिका, तस्यामपि प्रयोज्य एवेच्छाकार इति, तदनु सः, अयं चात्यन्तपापभीरुणैव तत्त्वतः क्रियते तेन च कथञ्चिदतिचारसम्भवे आत्मा निन्द्य इति तदनु मिथ्याकारः, कृतेऽपि च तस्मिन् बृहद्दोषसम्भवे आलोचना ग्राह्या, तत्र यदादिशन्ति गुरवस्तत्तथेति मन्तव्यमिति तथाकारः, तथेति प्रतिपद्य च सर्वकृत्येषु उद्यमवता भाव्यमिति तदनु तद्रूपमभ्युत्थानं, उद्यमवता च ज्ञानाद्यर्थं गच्छान्तरसङ्क्रमोऽपि कार्यः तत्र चोपसम्पद्गृहीतव्येति तदनु उपसम्पदुक्ता, उपसंहारमाह–एषा पूर्वोक्ता दशाङ्गा–इच्छादिदशावयवा सामाचारी प्रवेदिता–तीर्थकरादिभिरुक्ता ॥ २–४ ॥ ॥ ९९३–९९५ ॥

तामेव प्रत्यवयवं विषयप्रदर्शनपूर्वकं विधेयतया वक्तुमाह—

गमणे आवस्सियं कुज्जा, ठाणे कुज्जा निसीहियं । आपुच्छणा सयंकरणे, परकरणे पडिपुच्छणा ॥ ९९६ ॥

गमने–तथाविधा लम्बनतो वहिर्निस्सरणे, आवश्यकेषु–अशेषावश्यकर्त्तव्यव्यापारेषु सत्सु भवा आवश्यकी तां कुर्यात्, स्थाने–उपाश्रये प्रविशन्निति शेषः कां ? निषेधे–पापानुष्ठानेभ्य आत्मनो व्यावर्त्तने भवा नैषेधिकी तां, आङिति सर्वकृत्याभिव्याप्त्या प्रच्छना–इदमहं कुर्यां नवेत्येवंरूपा स्वयमित्यात्मनः करणं–विविक्षितस्य कस्यचित्कार्यस्य स्वयं करणं तत्र, परकरणे–अन्यस्य कार्यविधानेषु प्रतिप्रच्छना, गुरुनियुक्तोऽपि हि पुनः प्रवृत्तिकाले प्रतिपृच्छत्येव गुरुं, स हि कार्यान्तरमप्यादिशेत् सिद्धं



दशधा-सामाचारी-क्रमप्रयोजनं आवश्यकादिचतुर्णां स्वरूपं च

त्रा तदन्यत स्यादिति, उभयत्र वा स्वकरणपरकरणे उपलक्षणमित्युच्छ्वासनि श्वासौ त्यक्त्वा सर्वकार्येष्वपि स्वपरसम्बन्धिष्वादौ गुरूणा प्रच्छन आप्रच्छनेत्युच्यते, तथा स्वपरसत्के सर्वकृत्ये गुरुनियुक्तेन पुन प्रवृत्तिकाले यद्गुरुप्रच्छन सा प्रतिप्रच्छा ॥ ५ ॥ ९९६ ॥

छदणा दव्वजाएण, इच्छकारो अ सारणे । मिच्छाकारो अ निंदाए, तहक्कारो पडिस्सुए ॥ ९९७ ॥

तथा छन्दना–शेपयतिनिमन्त्रणात्मिका, विधेयेति शेप , द्रव्यजातेन–अशनादिद्रव्यविशेपेण, प्राग्गृहीतेनेति गम्य, इच्छा–स्वाभिप्रायस्तया करण तत् कार्यनिर्वर्त्तनमिच्छाकार , सारणे इत्यौचित्यत आत्मन परस्य वा कृत्य प्रति प्रवर्त्तने, तत्रात्मसारणे यथा इच्छाकारेण युष्मच्चिकीपित कार्यमिदमह करोमीति, परसारणे च मम पात्रलेपनादि इच्छाकारेण कुरुतेति, तथा मिथ्ये त्यलीक तत्करण मिथ्याकारो–मिथ्येदमिति प्रतीति , स चात्मनो निन्दाया वितथाचरणे 'धिगिद मया कृत'मिति रूपाया, तथाकार–इदमित्थमेवेत्यभ्युपगम , प्रतिश्रुते–प्रतिश्रवणे वाचनादीना गुरो पार्श्वात् ॥ ६ ॥ ९९७ ॥

अब्भुट्ठाण गुरुपूया,अच्छणे उवसपया ।

एव दुपचसजुत्ता ( एसा दसगा साहूण पा० ), सामायारी पवेइया ॥ ९९८ ॥

अभीत्याभिमुख्येनोत्थानम्–उद्यमनमभ्युत्थानं, तच्च गुरुपूजाया, सा च गौरवार्हाणामाचार्यनालग्लानादीना यथोचिताहार भेपजादिसम्पादन, इह च सामान्योक्तावप्यभ्युत्थान निमन्त्रणारूपमेव ग्राह्य, अच्छणेत्ति–आसने प्रक्रमादाचार्यान्तरादिपार्श्वा वस्थाने उप–सामीप्येन सम्पदन–गमन उपसम्पत्, इयन्त काल भवदन्तिके मया वसितव्यमित्येवरूपा, सा च ज्ञानार्थ

छदणाता उपसपदा–यावद् विवरण

ओघसामाचारीस्वरूपम्

तादिभेदेन त्रिधा, एवमुक्तप्रकारेण क्रियात्रयसंयुक्ता–दशसङ्ख्यायुक्तेत्यर्थः सामाचारी प्रवेदिता–कथिता, तीर्थङ्करादिभिरिति शेषः ॥ ७ ॥ ९९८ ॥

इत्थं दशविधां सामाचारीमुक्त्वा ओघसामाचारीं विवक्षुरिदमाह—

पुव्विल्लंमि चउब्भागे, आइच्चंमि समुट्ठिए। भंडयं पडिलेहित्ता, वंदित्ता य तओ गुरुं ॥ ९९९ ॥

पुच्छिज्जा पंजलिउडो, किं कायव्वं मए इहं?। इच्छं निओइउं भंते!, वेयावच्चे व सज्झाए ॥ १००० ॥

वेयावच्चे निउत्तेणं, कायव्वमगिलायओ। सज्झाए वा निउत्तेणं, सव्वदुक्खविमुक्खणे ॥ १००१ ॥

गाथाः ३, पूर्वस्मिन्–पूर्वदिक्सम्बन्धिनि किञ्चिदूननभश्चतुर्भागे आदित्ये समुत्थिते–प्राप्ते, पादोनपौरुष्यामित्यर्थः, भाण्डकं–पतद्ग्रहाद्युपकरणं प्रतिलेख्य चक्षुषा निरीक्ष्य उपलक्षणात् प्रमृज्य च, वन्दित्वा च–नमस्कृत्य ततः–प्रतिलेखनानन्तरं गुर्वाचार्यादिकमित्याह–पृच्छेत् प्रक्रमात् गुरुमेव कृतप्राञ्जलिः, यथा किं कर्तव्यं मया?, इह–अस्मिन् समये इति गम्यं, इच्छामि नियोजयितुं, युष्माभिरात्मानमिति शेषः, भदन्त! वैयावृत्त्ये–ग्लानादिव्यापारे चशब्दो भिन्नक्रमः ततः स्वाध्याये वा, इह च पात्रप्रतिलेखनानन्तरं गुरुं पृच्छेदिति यदुक्तं तत्प्रायस्तदैव कस्यचिद्वैयावृत्त्यविधानसम्भवात्, एवं च पृष्ट यत्कुर्यात् तदाह–वैयावृत्त्यं अग्लान्यैव–शरीरश्रममविचिन्त्य, स्वाध्याये वा नियुक्तेन सर्वदुःखविमोक्षणे, सकलतपःप्रधानत्वात् अस्य, स्वाध्यायोऽग्लान्यैव कर्तव्य इति प्रक्रमः ॥ ८–१० ॥ ९९९–१००१ ॥

दिवसस्स चउरो भागे, कुज्जा भिक्खू वियक्खणो। तओ उत्तरगुणे कुज्जा, दिणभागेसु चउसुवि ॥ १००२ ॥

पढम पोरिसिं सज्झाय, वीय झाण झियायई । तइयाए भिक्खायरिय, पुणो चउत्थीइ सज्झाय ॥ १००३ ॥

चतुरो भागान् कुर्यात्, बुद्ध्या चतुर्भागकरणानन्तर उत्तरगुणान्–स्वाध्यायादीन् कालोचितान् कुर्यात् ॥ ११ ॥ १००२ ॥

क दिनभागे कमुत्तरगुण कुर्यादित्याह—

प्रथमा पौरुषीं स्वाध्याय–वाचनादिक, कुर्यादितीहोत्तरत्र चानुवर्त्तते, द्वितीया प्रक्रमात्पौरुषीं ध्यान–अर्थविषय एव चित्तादि व्यापारण ध्यावेत्–अनेकार्थत्वात् धातूना कुर्यात्, इह च प्रतिलेखनाकालस्याल्पत्वेनाविवक्षितत्वात्, उभयत्र 'कालाध्वनो र्व्याप्ता'विति द्वितीया, तृतीयाया भिक्षाचर्या, पुनश्चतुर्थ्यां स्वाध्याय, उपलक्षणत्वात् तृतीयाया भोजनवहिर्गमनादीनि, चतुर्थ्यां तु प्रतिलेखनास्थण्डिलप्रत्युपेक्षणादीनि च गृह्यन्ते, इत्थमुक्तिश्च कालापेक्षयैव कृष्यादेरिव सर्वानुष्ठानस्य सफलत्वादिति ॥ १२ ॥ १००३ ॥

सम्प्रति पौरुषीपरिज्ञानार्थमाह—

आसाढे मासे दुपया, पोसे मासे चउप्पया । चित्तासोएसु मासेसु, तिपया हवइ पोरसी ॥ १००४ ॥

अगुल सत्तरत्तेण, पक्खेण य दुअगुल । वड्ढए हायए वावि मासेण चउरगुल ॥ १००५ ॥

गाथाद्वय, स्पष्ट, नवर सप्तरात्रेणेति–दिनाविनाभावित्वात् रात्रीणा सप्ताहोरात्रेण, सार्द्धेनेति शेष, वर्द्धते दक्षिणायने हीयते उत्तरायणे, पक्षेण द्व्यङ्गुल्वृद्ध्यभिधानात्, अन्यच्च–केषुचिन्मासेषु दिनचतुर्दशकेनापि पक्ष सम्भवति तत्र च सप्तरात्रेणाप्य ङ्गुलवृद्धिहान्या न कश्चित् विरोध ॥ १३–१४ ॥ १००४–१००५ ॥

दिवसचतु र्भागकर्तव्य पौरुषीपरि ज्ञानञ्च

केषु मासेषु पुनरेवं पक्ष इत्याह—

आसाढबहुलपक्खे, भद्दवए कत्तिए य पोसे य । फग्गुणवइसाहेसु य, नायव्वा ओमरत्ता उ ॥ १००६ ॥

सुगमा, नवरं बहुलपक्षे इति भाद्रपदादिष्वपि प्रत्येकं योज्यते, तत आषाढबहुलपक्षे अवमा—न्यूना एकेनेति शेषः, अहोरात्राः, एवं चैकदिनापहारे दिनचतुर्दशकेनैव कृष्णपक्षे आषाढादिष्वित्यर्थः ॥ १५ ॥ १००६ ॥

इह प्रथमपौरुष्यामुपलक्षणद्वारेण प्रतिलेखनाया अपि विधेयत्वमुक्तं, पादोनैव चासौ तत्कालत्वेन प्राग् दर्शितेति तत्परिज्ञानोपायमाह—

जिट्ठामूले आसाढसावणे छहिं अंगुलेहिं पडिलेहा । अट्ठहिं बिइयतियंमी तइए दस अट्ठहिं चउत्थे ॥ १००७ ॥

ज्येष्ठमूले इति ज्येष्ठे आषाढश्रावणे इति च षड्भिरङ्गुलैः, प्रागुद्दिष्टपौरुषीमाने प्रक्षिप्तैरिति चेहोत्तरत्र च गम्यं, प्रतिलेखेति प्रतिलेखनाकालः, एवं तावदेकस्मिंस्त्रिके, तथा अष्टभिः अङ्गुलैरिति सर्वत्रानुवर्त्त्यते, द्वितीयत्रिके भाद्रपदाश्वयुक्कार्त्तिकलक्षणे, तृतीये प्रक्रमात् त्रिके मार्गशीर्षपौषमाघात्मनि प्रतिलेखनाकालः ॥ १६ ॥ १००७ ॥

इत्थं दिनकृत्यमभिधाय रात्रेः कृत्यमाह—

रत्तिंपि चउरो भाए, भिक्खू कुज्जा वियक्खणो । तओ उत्तरगुणे कुज्जा, राई भो(भा)गेसु चउसुवि ॥ १००८ ॥

पढम पोरिसि सज्झायं, बीयं झाणं झियायई । तइयाए निद्दमुक्खं तु, चउत्थी भुज्जो वि सज्झायं ॥ १००९ ॥

गाथा २, स्पष्टं, नवरं रात्रिमपि, न केवलं दिनमित्यपेरर्थः ॥ १७ ॥ १००८ ॥

द्वितीया पौरुषीं ध्यान–सूक्ष्मसूत्रार्थलक्षण ध्यायेत्–चिन्तयेत्, तृतीयाया निद्रामोक्ष पूर्व निरुद्धायामुत्कलना निद्रामोक्षः, स्वाप इत्यर्थ, त कुर्यादिति सर्वत्र प्रक्रम, वृषभापेक्ष चैतत्, सामस्त्येन तु प्रथमचरमप्रहरजागरणमेव, तथा चागम'–'सव्वेवि पढमजामे दुन्नि उवसहाण आइमा जामा। तइओ होइ गुरूण चउत्थओ होइ सव्वेसि ॥ १ ॥' ॥ १८ ॥ १००९ ॥

सम्प्रति रात्रिचतुर्भागपरिज्ञानोपाय दर्शयन् समस्तयतिकृत्यमाह—

ज नेई जया रत्ति, नक्खत्त तमि नहचउब्भाए। सपत्ते विरमिज्जा, सज्झाय पओसकालम्मि ॥ १०१० ॥

तम्मेव य नक्खत्ते गयण चउभागसावसेसमि। वेरत्तियपि काल पडिलेहित्ता मुणी कुज्जा ॥ १०११ ॥

यन्नयति–प्रापयति समाप्तिमिति गम्य, यदा रात्रिं नक्षत्र तस्मिन्नभश्चतुर्भागे सम्प्राप्ते विरमेत–निवर्त्तेत स्वाध्यायात्, प्रदोष काले रात्रिमुखे प्रारब्धादिति शेष, तस्मिन्नेव नक्षत्रे प्रक्रमात्प्राप्ते केत्याह–गगने, कीदृशे? चतुर्भागेन गम्येन सावशेष–सोद्धरित चतुर्भागसावशेष तस्मिन् वैरात्रिक तृतीय, अपिशब्दात् निजनिजसमये प्रादौपिकादिक च काल प्रत्युपेक्ष्य–प्रतिजागर्य मुनि कुर्यात्, करोते सार्वधात्वर्थाद्गृह्णीयात्, इह च काक्कोपलक्षणद्वारेण प्रथमादिषु नभश्चतुर्भागेषु सम्प्राप्तेषु तस्मिन्नेव नक्षत्रे प्रथमादय प्रहरा इत्युक्त भवति ॥ १९–२० ॥ १०१०–१०११ ॥

इत्थ सामान्येन दिनरात्रिकृत्यमुपदर्श्य पुनर्विशेषतस्तदेव दर्शयस्तावद्दिनकृत्यमाह—

पुव्विल्लमि चउब्भागे, पडिलेहित्ता ण भडय। गुरु वदित्तु सज्झाय, कुज्जा दुक्खविमुक्खणिं ॥ १०१२ ॥

पूर्वस्मिंश्चतुर्भागे–प्रथमपौरुषीलक्षणे प्रक्रमाद्दिनस्य प्रत्युपेक्ष्य भाण्डक–वर्षाकल्पाद्युपधि, आदित्योदयसमये इति शेष ॥२१॥१०१२॥

रात्रिचतुर्भागज्ञानोपाय

पोरिसीए चउब्भाए, वंदित्ता ण तओ गुरुं। अपडिक्कमित्तु कालस्स, भायणं पडिलेहिए ॥ १०१३ ॥

पौरुष्याश्चतुर्भागे अवशिष्यमाणे इति गम्यं, पादोनपौरुष्यामित्यर्थः, भाजनं प्रतिलेखयेरिति सम्बन्धः, किं कृत्वेत्याह— अप्रतिक्रम्य कालस्य—तत्प्रतिक्रमणार्थं कायोत्सर्गमविधाय चतुर्थपौरुष्यामपि स्वाध्यायस्य विधास्यमानत्वात् ॥ २२ ॥ १०१३ ॥

प्रतिलेखनाविधिमाह—

मुहपत्तिं पडिलेहित्ता, पडिलेहिज्ज गुच्छयं। गुच्छगलइयंगुलिओ, वत्थाइं पडिलेहए ॥ १०१४ ॥

मुखवस्त्रिकां प्रतिलेख्य प्रतिलेखयेत् गुच्छकं—पात्रकोपरिस्थमुपकरणं, ततश्च प्राकृतत्वात् अङ्गुलिभिर्लातो—गृहीतो गुच्छको येन सः अङ्गुलिलातगुच्छकः वस्त्राणि—पटलकरूपाणि प्रतिलेखयेत्, प्रस्तावात् प्रमार्जयेत्, तथावस्थितान्येव ॥ २३ ॥ १०१४ ॥

इत्थं पटलानि गुच्छकेन प्रमृज्य च यत्कुर्यात्तदाह—

उड्ढं थिरं अतुरियं पुव्विं ता वत्थमेव पडिलेहे। तो बिइयं पप्फोडे तइयं च पुणो पमज्जिज्जा ॥ १०१५ ॥

ऊर्ध्वं कायत उत्कुटुकत्वेन स्थितत्वात् वस्त्रतश्च तिर्यक्प्रसारितवस्त्रत्वात् स्थिरं दृढग्रहणेन अत्वरितं—स्तिमितं यथा भवत्येवं पूर्वं—प्रथमं ता इति तावद्वस्त्रं पटलरूपं, जातावेकवचनं, पटलकप्रक्रमेऽपि सामान्यतो वस्त्रशब्दाभिधानं वर्षाकल्पादिप्रत्युपेक्षणायामप्ययमेव विधिरिति ख्यापनार्थं, एवो भिन्नक्रमः, अतः प्रत्युपेक्षेतैव आरतः परतश्च निरीक्षते, नैव—न तु प्रस्फोटयेत्, अथवा विन्दुलोपादेवं अमुना प्रकारेण प्रत्युपेक्षेत, न त्वन्यथेति भावः, तत्र च यदि जन्तून् पश्यति ततो यतनया अन्यत्र सङ्क्रामयति, तददर्शने च तो इति—ततः प्रत्युपेक्षणानन्तरं द्वितीयमिदं कुर्यात्, यदुत परिशुद्धं सत् प्रस्फोटयेत्—प्रस्फोटनां

कुर्यात् तृतीय च पुनरिद कुर्यात्—यत् प्रमृज्यात्, कोऽर्थ ?, प्रत्युपेक्ष्य—प्रस्फोट्य च हस्तगतान् प्राणिन प्रमृज्यादित्यर्थ ॥ २४ ॥ १०१५ ॥

कथ पुन प्रस्फोटयेत् प्रमृज्याद्वेत्याह—

अणचाविय अवलिय अणाणुबंधि अमोसलिं चेव ।
छप्पुरिमा नव खोडा पाणीपाणिविसोहण ( पमज्जण पा० ) ॥ १०१६ ॥

अनतित वस्त्र वपुर्यथा नर्त्तित न स्यात्, अवलित—यथाऽऽत्मनो वस्त्रस्य च मोटन न स्यात्, अनुबन्धेन—नैरन्तर्यलक्षणेन युक्तमनुबन्धि न तथा अनुबन्धिक —अधोऽलक्ष्यमाणविभाग यथा न स्यात्, सूत्रत्वात् आमर्शवत् तिर्यगूर्ध्वमधो वा कुड्यादि परामर्शवत् यथा न स्यात्, एव षट्पूर्वाः पूर्व क्रियमाणतया तिर्यक्कृतवस्त्रप्रस्फोटनात्मका क्रियाविशेषा येषु ते षट्पूर्वा, नव खोटका समयप्रसिद्धस्फोटनात्मका, कर्त्तव्या इति शेष, पाणौ—पाणितले प्राणाना—कुन्थ्वादिसत्त्वाना विशोधन—प्रस्फोटन त्रिकानन्तर त्रिकसङ्ख्य प्राणविशोधन च कर्त्तव्यम् ॥ २५ ॥ १०१६ ॥

प्रतिलेखनादोषपरिहारार्थमाह—

आरभडा सम्मद्दा वज्जेयवा य मोसली तइया । पप्फोडणा चउत्थी विक्खित्ता वेइया छट्ठा ॥ १०१७ ॥

आरभटा—विपतरीकरण, त्वरित वाऽन्यान्यवस्त्रग्रहण समर्दन समर्दारूढित्वात् स्त्रीलिङ्गता वस्त्रान्त कोणसवल्न उपधेर्वा उपरि निपदन, वर्जयितव्येति सर्वत्र योज्य, च पूरणे, मोसलि—तिर्यगूर्ध्वमधो वा घट्टनात्, प्रस्फोटनेन प्रकर्षेण रेणुगुण्डितस्यैव

वस्त्रस्य झाटना चतुर्थी, विक्षेपणं विक्षिप्ता पञ्चमीति गम्यं, रूढित्वात् स्त्रीत्वं, सा च प्रत्युपेक्षितवस्त्रस्यान्यत्राप्रत्युपेक्षिते क्षेपणं प्रत्युपेक्ष्यमाणो वा वस्त्राञ्चलं यदूर्ध्वं क्षिपति, वेदिका षष्ठी, सा च पञ्चधा, यदागमः—"वेइआ पचविहा पण्णत्ता, तंजहा- उड्ढ वेइआ अहो वेइआ तिरिय वे० उत्तओ वे० एगओ वेइआ, तथा उड्ढ वेइआ—उवरिजणुगाणं हत्थे काऊण पडिलेहइ, अहो अहोजन्नुगाणं हत्थे काउं २, तिरिअ वे० संडासयाणमज्झे ह० ३, दुहओ वे० बाहाणमंतरे दोवि जन्नुगा काऊण प० ४, एगओ वेइआ—वे० एगं जन्नुगं बाहाणमंतरे का० ५," एते षड्दोषाः प्रतिलेखनायां वर्ज्याः ॥ २६ ॥ १०१७ ॥

तथा—

पसिढिलपलंबलोला एगामोसा अणेगरूवधुणा ( या पा० )।
कुणति पमाणि पमायं संकिय गणणोवगं कुज्जा ॥ १०१८ ॥

प्रतिलेखनायां परिहार्याः दोषाः

प्रशिथिलं नाम दोषो यद्दृढमतिरायतं वा वस्त्रं गृह्यते, प्रलम्बो यद्विषमग्रहणेन प्रत्युपेक्षमाणवस्त्रकोणानामालम्बनं, लोला यद्भूमौ करे वा वस्त्रस्य लोलनं, एषां द्वन्द्वः, एकामर्शनम्, एकामर्शा रूढितः स्त्रीत्वं, मध्ये गृहीत्वा ग्रहणदेशं यावदुभयतो वस्त्रस्य यदेककालं सङ्घर्षणं—आकर्षणं, अनेकरूपा सङ्ख्या त्र्यातिक्रमेण युगपदनेकवस्त्रग्रहणतो वा धुनना, तथा यत्करोति प्रमाणप्रस्फोटनादिसङ्ख्यारूपे प्रमादं अनवधानं यच्च शङ्किते प्रमादतः प्रमाणं प्रति शङ्कोत्पत्तौ गणनां कराङ्गुलिरेखास्पर्शनादिना एकद्वित्रिसङ्ख्यात्मिकामुपगच्छति—उपयाति गणनोपगं यथा स्यादेवं, गम्यत्वात् प्रस्फोटनादि कुर्यात्, सोऽपि दोषो वर्ज्य इति पूर्वसूत्रात् सर्वत्रानुवर्त्यते, उक्तदोषाभावे निर्दोषा प्रत्युपेक्षणा इत्यर्थादुक्तम् ॥ २७ ॥ १०१८ ॥

अथैनामेव भङ्गकदर्शनद्वारेण साक्षात्सदोषा निर्दोषा च किञ्चिद्विशेषतो वक्ति—

अणूणाइरित्तपडिलेहा अविवचासा तहेव य । पढम पय पसत्थ सेसाणि उ अप्पसत्थाणि ॥ १०१९ ॥

ऊना चासौ अतिरिक्ता च २ सा न तथा प्रतिलेखना, इह च न्यूनाधिक्ये प्रस्फोटना प्रमार्जना वेला चाश्रित्य वाच्ये, न विद्यते विविधो व्यत्यासो यस्या सा पुरुषोपधिविपर्यासरहिता कार्येति शेष, अत्र च त्रिभिर्विशेषणपदैरष्टौ भङ्गा सूचिता स्यु, एषु च क शुद्ध ? को वा अशुद्ध ? इत्याह–प्रथम पदम्–इहोपदर्शिताद्यभङ्गरूप प्रशस्त–निर्दोषतया श्लाघ्य, शेषाणि तु प्रक्रमात् पदानि अप्रशस्तानि, तेषु न्यूनताद्यन्यतमदोषसम्भवात् ॥ २८ ॥ १०१९ ॥

निर्दोषामप्येता कुर्वता यत्त्याज्य तत्काक्कोपदेष्टुमाह—

पडिलेहण कुणतो मिहो कह कुणइ जणवयकह वा । देइ व पच्चक्खाण वाएइ सय पडिच्छइ वा ॥ १०२० ॥

प्रतिलेखना कुर्वन्मिथ कथा–परस्परसम्भाषणात्मिका करोति, जनपदकथा वस्त्रादिकथोपलक्षणमेतत्, ददाति च प्रत्याख्यानमन्यस्मै, वाचयत्यन्य पाठयति, स्वय प्रतीच्छति वा, आलापक गृह्णाति य इति गम्यम् ॥ २९ ॥ १०२० ॥

स किमित्याह—

पुढवीआउक्काए तेऊवाऊवणस्सइतसाण । पडिलेहणापमत्तो छण्हपि विराहओ होइ ॥ १०२१ ॥

स्पष्टा, नवर पृथिव्यप्काययो, प्रतिलेखना प्रमत्तो मिथ कथादिना अनवहित षण्णामप्यास्तामेककादीनामित्यपेरर्थो विराधकश्चैव, प्रमत्तो हि कुम्भकारशालादौ स्थितो जलभृतघटादिकमपि प्रलोठयेत्, ततस्तज्जलेन मृदग्निबीजकुन्थ्वादय

प्रतिलेखनाया कथादिके षट्काय-विराधना

प्लाव्यमाना विराध्यन्ते, यत्र चाग्निस्तत्रावश्यं वायुरिति षण्णामपि द्रव्यतो विराधकत्वं, भावतस्तु प्रमत्ततया अन्यथापि विराधकत्वमेव ॥ ३० ॥ १०२१ ॥

इत्थं प्रथमपौरुषीकृत्यमुक्त्वा तृतीयपौरुषीकृत्यमाह—

तइयाए पोरिसीए, भत्तं पाणं गवेसए । छण्हं अण्णयरागंमि, कारणंमि समुट्ठिए ॥ १०२२ ॥

द्वितीयपौरुषीकृत्यं तु "बीए झाणं झियाई" त्यनेनोक्तमेव, उभयं चैतदवश्यं कर्तव्यमतस्तृतीयपौरुषीकृत्यमप्येवमुत कारणे एवोत्पन्ने इत्याशङ्क्याह, नवरं औत्सर्गिकमेतद्, अन्यथा हि स्थविरकल्पिकानां यथाकालमेव भक्तादि गवेषणं, यदुक्तं—"सइकाले चरे भिक्खु" त्ति, षण्णां कारणानां अन्यतरस्मिन् कारणे समुपस्थिते—जाते, न तु कारणोत्पत्तिं विनेति भावः, भोजनोपलक्षणं चेह भक्तपानगवेषणं, गुरुग्लानाद्यर्थमन्यथाऽपि तस्य सम्भवात्, तथा चान्यत्र भोजन एवैतानि कारणान्युक्तानि ॥ ३१ ॥ १०२२ ॥

तान्येव षट् कारणान्याह—

वेयणवेयावच्चे इरियट्ठाए य संजमट्ठाए । तह पाणवत्तियाए छट्ठं पुण धम्मचिंताए ॥ १०२३ ॥

सुव्व्यत्ययात् वेदनाशब्दस्योपलक्षणत्वात् क्षुत्पिपासाजनितवेदनोपशमनाय, तथा क्षुत्पिपासाभ्यां न गुर्वादिवैयावृत्त्यकरणक्षमो वैयावृत्त्याय, तथा ईर्येति—ईर्यासमितिः, सैव निर्जरार्थिभिः अर्यमानतया अर्थस्तस्मै ईर्यार्थाय, चः समुच्चये, कथमसौ भवत्विति ?, अन्यथा हि क्षुत्तृडार्त्तस्य चक्षुर्भ्यामपश्यतः कथमिवासौ स्यादिति ?, तथा संयमार्थाय, अत्याकुलस्य हि ताभ्यां सच्चित्ताहारे तद्विघात एव स्यात्, तथा प्राणप्रत्ययं—जीवितनिमित्तं, अविधिना ह्यात्मनोऽपि प्राणोपक्रमेण हिंसा स्यात्, यदुक्तं



तृतीयपौरुष्यां भक्तगवेषणं भक्तग्रहणे कारणानि च

"भाविअजिणवयणाण ममत्तरहिआण नत्थि हु विसेसो । अप्पाणमि परमि अ तो वज्जे पीडमुभओ वि ॥ १ ॥" पत्त पुनरिद कारण, यदुत धर्मचिन्ता-धर्मध्यान तस्यै, भक्तपान गवेषयेदिति सर्वत्रानुवर्त्त्यं, इय हि तदाकुलितचेतसो न स्यात्, आर्त्त-ध्यानसम्भवात् ॥ ३२ ॥ १०२३ ॥

आह-एतत्कारणोत्पत्तौ किमवश्य भक्तपान गवेष्य न वेत्याह—

निग्गथो धिइमतो निग्गथीवि न करिज्ज छहि चेव । ठाणेहिं तु इमेहिं अणइक्कमणा य से होइ ॥ १०२४ ॥

निर्ग्रन्थो धृतिमान् धर्मचरण प्रति, निर्ग्रन्था-तपस्विनी सापि न कुर्यात्, भक्तादिगवेषणमिति प्रक्रम, पड्भिश्चैव स्थानै, तु पुनरर्थे, एभिर्वक्ष्यमाणै किमित्यत आह-सूत्रत्वात् अनतिक्रमण सयमयोगानामनुल्लङ्घन, चेति यस्मात् से-तस्य तस्या वा भवति-जायते, अन्यथा तदतिक्रमणसम्भवात् ॥ ३३ ॥ १०२४ ॥ आतङ्कादा अहारत्याग

पट् स्थानान्येवाह—

आयके उवसग्गे तितिक्खया बभचेरगुत्तीसु । पाणिदयातवहेउ सरीरवुच्छेयणट्ठाए ॥ १०२५ ॥

आतङ्के-ज्वरादिरोगे उपसर्गे-दिव्यादौ, उभयत्र तन्निवारणार्थमिति गम्य, तथा तितिक्षया-सहनेन हेतुभूतया, क विषये इत्याह-ब्रह्मचर्यगुप्तिषु, ता हि नान्यथा सोढु शक्या, तथा प्राणिदयाहेतो, वर्षादौ अप्कायादिजीवरक्षायै तप चतुर्थादिरूप तयोर्हेत्वो, तथा शरीरस्य व्यवच्छेद -परिहारस्तदर्थं, उचितकाले संलेखन अनशन वा कुर्वन्, भक्तपानगवेषण न कुर्यादिति सर्वत्र योज्यम् ॥ ३४ ॥ १०२५ ॥

तद्गवेषयन् केन विधिना कियत्क्षेत्रं पर्यटेदित्याह—

अवसेसं भंडगं गिज्झा, चक्खुसा पडिलेहए । परमद्धजोअणाओ, विहारं विहरे मुणी ॥ १०२६ ॥

अपगतशेषं अपशेषं, कोऽर्थः ?—समस्तं भाण्डकं—उपकरणं गृहीत्वा चक्षुपा प्रत्युपेक्षेत विशेपत इति गम्यं सामान्यतो ह्यप्रत्युपेक्षितस्य ग्रहणमपि न युज्यते एव यतीनां, उपलक्षणत्वात् तदादाय परमुत्कृष्टमर्द्धयोजनाद्—अर्द्धयोजनमाश्रित्य, परतो हि क्षेत्रातीतमशनादि स्यात्, विहरत्यस्मिन् प्रदेशे इति विहारस्तं विहरेत्—विचरेत् मुनिः ॥ २५ ॥ १०२६ ॥

इत्थं च विहृत्योपाश्रयं चागत्य गुर्वालोचनादिपूर्वं भुक्त्वा च यत्कुर्यात्तदाह—

चउत्थीए पोरिसीए, निक्खिवित्ता ण भायणं ।
सज्झाणं च तओ कुज्जा, सवभावविभावणं ( दुक्खविमोक्खणं पा० ) ॥ १०२७ ॥

चतुर्थ्यां पौरुष्यां निक्षिप्य प्रत्युपेक्षणापूर्वं बद्धा भाजनं—पात्रं स्वाध्यायं ततः कुर्यात् सर्वभावा—जीवादयस्तेषां विभावनं—प्रकाशकम् ॥ २६ ॥ १०२७ ॥



पोरिसीए चउब्भाए, वंदित्ता ण तओ गुरुं । पडिक्कमित्ता कालस्स, सिज्जं तु पडिलेहए ॥ १०२८ ॥

पौरुष्याः प्रक्रमात् चतुर्थ्याश्चतुर्भागे—चतुर्थांशे, शेपे इति गम्यं, वन्दित्वा तत इति स्वाध्यायकरणानन्तरं गुरुं—आचार्यादिं प्रतिक्रम्य कालस्य शय्यां—वसतिं, तुः पूरणे, प्रतिलेखयेत् ॥ २७ ॥ १०२८ ॥ ततश्च—

पासवणुचारभूमिं च, पडिलेहिज्ज जयं जई । काउस्सग्गं तओ कुज्जा, सवदुक्खविमुक्खणं ॥ १०२९ ॥

भूमिशब्दस्य प्रत्येकमभिसम्बन्धात् प्रश्रवणमुच्चारभूमिं च प्रत्येक द्वादशस्थण्डिलात्मिका, च शब्दात्कालभूमि च स्थण्डिल त्रयात्मिकां, प्रतिलेखयेत्, यत–आरम्भादुपरत यथा स्यादेव यतमानो वा यति, एव च सप्तविंशति स्थण्डिलप्रत्युपेक्षणानन्तर आदित्योऽस्तमेति, इत्थ विशेषतो दिनकृत्यमुक्त्वा सम्प्रति तथैव रात्रिकृत्यमाह—कायोत्सर्गं तत –प्रश्रवणादिभूमिप्रतिलेखनानन्तर सर्वदु खविमोक्षण, तथा त्व चास्य कर्मापचयहेतुत्वात्, उक्त हि "काउस्सग जह सठिअस्स भज्जति अगमगाइ। तह भिंदति सुविहिआ अठ्ठविह कम्मसघाय ॥ १ ॥" ॥ ३८ ॥ १०२९ ॥

तत्र च स्थितो यत्कुर्यात्तदाह—

देसिय च अईयार, चितिज्ज अणुपुव्वसो। नाणमि दसणे चेव, चरित्तमि तहेव य ॥ १०३० ॥

सूत्रत्वात् यकारलोपे दैवसिक, च पूरणे, अतीचार–अतिक्रम चिन्तयेत्–ध्यायेत् आनुपूर्व्या क्रमेण प्रभातमुखवस्त्रिका प्रत्युपेक्षणातो यावदयमेव कायोत्सर्ग, किंविषयमतीचार चिन्तयेदित्याह–ज्ञाने–ज्ञानविषयम्, एव दर्शने चैव चारित्रे तथैव च ॥ ३९ ॥ १०३० ॥

पारियकाउस्सग्गो, वदित्ता य तओ गुरु। देसिय तु अईयार, आलोइज्ज जहक्कम ॥ १०३१ ॥

पारित –समापित कायोत्सर्गो येन स तथा, वन्दित्वा प्रस्तावात् द्वादशावर्त्तवन्दनेन, तत अतीचारचिन्तनादनु तु पूरणे, अतीचारमालोचयेत्–प्रकाशयेत्, गुरूणामेव यथाक्रम आलोचना, स च नान्यतरा, आनुलोम्य क्रमातिक्रमेण ॥ ४० ॥ १०३१ ॥

पडिक्कमित्ताण निस्सल्लो, वदित्ताण तओ गुरु। काउस्सग्ग तओ कुज्जा, सव्वदुक्खविमुक्खण ॥ १०३२ ॥

प्रश्रवणादि-भूमिप्रतिलेखना रात्रिकृत्यानि च

प्रतिक्रम्य-प्रतीपं निवृत्त्य निश्शल्यः-मायादिशल्यरहितः, सूचकत्वात् सूत्रस्य वन्दनकपूर्व क्षमयित्वा वन्दित्वा तथैव, ततः उक्तविधेरनु गुरुं कायोत्सर्ग-चारित्रदर्शनश्रुतज्ञानशुद्ध्यर्थं व्युत्सर्गत्रयरूपं, जातावेकवचनं, ततो-गुरुवन्दनादनु कुर्यात् ॥ ४१ ॥ १०३२ ॥

सिद्धाणं संथवं किच्चा, वंदित्ताण तओ गुरुं। थुइमंगलं च काऊणं, कालं संपडिलेहए ॥ १०३३ ॥

पूर्वार्द्धं व्याख्यातमेव, स्तुतिमङ्गलं च सिद्धस्तवरूपं स्तुतित्रयेण कृत्वा कालं सम्प्रत्युपेक्षते, कोऽर्थः, प्रतिजागर्ति उपलक्षणत्वात् गृह्णाति च ॥ ४२ ॥ १०३३ ॥

पढमं पोरिसिं सज्झायं, बीयं झाणं झियायई। तईयाए निद्दमुक्खं तु, चउत्थी भुज्जोवि सज्झायं ॥ १०३४ ॥
पोरिसीए चउत्थीए, कालं तु पडिलेहए। सज्झायं तु तओ कुज्जा, अबोहंतो असंजए ॥ १०३५ ॥
पोरसीए चउब्भाए, वंदित्ताण ततो गुरुं। पडिक्कमित्तु कालस्स, कालं तु पडिलेहए ॥ १०३६ ॥
(पढमा पोरसि सज्झायं, बीए झाणं झियायति। ततियाए निद्दमोक्खं च, चउभाए चउत्थए ॥ १०३४ ॥
कालं तु पडिलेहित्ता, अबोहिंतो असंजए। कुज्जा मुणी य सज्झायं, सव्वदुक्खविमोक्खणं ॥ १०३५ ॥
पोरसीए चउब्भाए, सेसे वंदित्तु तो गुरुं। पडिक्कमितु कालस्स, कालं तु पडिलेहए ॥ १०३६ ॥ पा०)

पढममित्यादि प्राग् व्याख्यातमेव, नवरं पुनरभिधानं अस्य पुनः पुनरुपदेष्टव्यमेव गुरुभिः, न प्रयासो मन्तव्य इति ख्यापनार्थः ॥ ४३ ॥ १०३४ ॥



रात्रेः प्रथमादिपौरुपिकर्तव्यता

कथ पुनश्चतुर्थपौरुष्या स्वाध्याय कुर्यादित्याह—

चतुर्थपौरुष्या काल वैरात्रिक, तु पूरणे, प्रत्युपेक्ष्य प्रतिजागर्य उपलक्षणत्वात् गृहीत्वा च स्वाध्याय तत कुर्यात्, अबोधयन्–अनुत्थापयन् असयतान्–अगारिण , तदुत्थापनेन तत्तत्पापस्थानेषु प्रवर्तनसम्भवात् ॥ ४४ ॥ १०३५ ॥

पौरुष्या' प्रक्रमाच्चतुर्थ्याश्चतुर्भागे अवशिष्यमाणे इति शेष , तत्र हि कालवेलाया सम्भव इति न कालस्य क्रमण, वन्दित्वा ततो गुरु प्रतिक्रम्य कालस्य वैरात्रिकस्य काल प्राभातिक, तुर्वक्ष्यमाणविशेषद्योतक , प्रत्युपेक्षते गृह्णीयाच्च, मध्यमप्रक्रमापेक्ष च कालत्रयग्रहणमुक्तम्, अन्यथा हि उत्सर्गत उत्कर्षेण चत्वारो जघन्येन त्रय काला अपवादतश्चोत्कर्षेण द्वौ जघन्येनैकोऽप्यनुज्ञात एव, तथा चोक्त "काल‍चउक्क उक्कोसएण जहन्नओ तिन्नि हुति वोद्धवा । वीअपयमि दुग तु मायामयविप्पमुक्काण ॥१॥" अत्र च तुशब्दादेकोऽप्यनुज्ञात एव ॥ ४५ ॥ १०३६ ॥

आगए कायवुस्सग्गे, सव्वदुक्खविमुक्खणे । काउस्सग्ग तओ कुज्जा, सव्वदुक्खविमुक्खण ॥ १०३७ ॥

आगते–प्राप्ते कायव्युत्सर्ग इत्युपचारात् कायव्युत्सर्गसमये सर्वदु खाना विमोक्षणमर्थात् कायोत्सर्गद्वारेण यत्र स तथा तस्मिन्, यच्चेह सर्वदु खविमोक्षविशेषण पुन पुनरुच्यते तत् कायोत्सर्गस्यात्यन्तनिर्जराहेतुत्वख्यापनार्थं, तथेह कायोत्सर्गग्रहणेन चारित्रदर्शनश्रुतज्ञानविशुद्ध्यर्थं कायोत्सर्गत्रय ग्राह्य, तत्र च तृतीये रात्रिकोऽतीचारश्चिन्त्यते ॥ ४६ ॥ १०३७ ॥ कायव्युत्सर्ग कृत्वा कायोत्सर्गकाय

तृतीये रात्रिकोऽतिचारश्च यथाविषयश्चिन्तनीयस्तथाह—

राईय च अईयार, चितिज्ज अणुपुव्वसो । नाणमि दसणमि, चरित्तमि तवमि य ॥ १०३८ ॥

रात्रौ भवं रात्रिकं, चः पूरणे, अतीचारं चिन्तयेत्, आनुपूर्व्या क्रमेण, किंविषयं चिन्तयेदित्याह–ज्ञाने दर्शने चारित्रे तपसि, चात् वीर्ये च, शेषोत्सर्गेषु चतुर्विंशतिस्तवः प्रतीतश्चिन्त्यतया साधारणश्चेतिनोक्तः ॥ ४७ ॥ १०३८ ॥

पारियकाउस्सग्गो, वंदित्ताण तओ गुरुं । राईयं तु अईयारं, आलोइज्ज जहक्कमं ॥ १०३९ ॥

पडिक्कमित्तु निस्सल्लो, वंदित्ता ण तओ गुरुं। काउस्सग्गं तओ कुज्जा, सव्वदुक्खविमुक्खणं ॥ १०४० ॥

पारितेत्यादिगाथाद्वयं प्राग्वत् व्याख्यातमेव ॥ ४८, ४९ ॥ १०३९, १०४० ॥



कायोत्सर्गस्थितश्च किं कुर्यादित्याह—

किं तवं पडिवज्जामि ?, एवं तत्थ विचिंतए। काउस्सग्गं तु पारित्ता, करिज्जा जिणसंथवं ॥ १०४१ ॥

किमिति किंरूपं, तपो–नमस्कारसहितादि प्रतिपद्येऽहमेवं तत्र विचिन्तयेत्, वीरो हि भगवान् षण्मासं यावन्निरशनो विहृतवान्, तत्किमहमपि निरशनः शक्नोमि एतावत्कालं स्थातुमुत नेति ?, एवञ्च पञ्चमासाद्यपि यावन्नमस्कारसहितादि-तावत्परिभावयेत्, उत्तरार्द्धं स्पष्टम् ॥ ५० ॥ १०४१ ॥

एतदुक्तार्थानुवादतः सामाचारीशेषमाह—

पारियकाउस्सग्गो, वंदित्ताण तओ गुरुं। तवं संपडिवज्जित्ता, करिज्ज सिद्धाण संथवं ॥ १०४२ ॥

पारियेत्यादि प्राग्वन्नवरं तपो यथाशक्तिचिन्तितं उपवासादि सम्प्रतिपद्य–अङ्गीकृत्य कुर्यात् सिद्धानां संस्तवं–स्तुतित्रयरूपं, तदनु च यत्र चैत्यानि सन्ति तत्र तद्वन्दनं विधेयम् ॥ ५१ ॥ १०४२ ॥

सम्प्रत्यध्ययनार्थमुपसंहरन्नाह—

एसा सामायारी, समासेण वियाहिया । ज चरित्ता बहू जीवा, तिन्ना ससारसागर ॥ १०४३ ॥ तिबेमि ॥

॥ सामायारीय ॥ २६ ॥

एषा अनन्तरोक्ता सामाचारी दशविधौघरूपा च, समासेन—सङ्क्षेपेण व्याख्याता, अत्रैवादरख्यापनार्थं अस्याः फलमाह— या सामाचारीं चरित्वा—आसेव्य बहव—अनेकजीवा तीर्णा ससारसागरम् ॥ ५२ ॥ १०४३ ॥

सामाचार्या आचरणे फलम्

इति समाचारीनामाध्ययनावचूरि ॥

॥ इति श्रीउत्तराध्ययने षड्विंशतितमस्य सामाचारी-
नामाध्ययनस्य अवचूरि समाप्ता ॥

# अथ सप्तविंशं खलुङ्कीयमध्ययनम् ।



अनन्तरायध्यने सामाचार्युक्ता, सा चाशठतयैव पालयितुं शक्येति दृष्टान्तस्तद्विपक्षभूतशठतास्वरूपनिरूपणद्वारेण अशठतैवानेनोच्यते, अस्य खलुङ्कीयं नाम—

थेरे गणहरे गग्गे, मुणी आसि विसारए। आइन्ने गणिभावम्मि, समाहिं पडिसंधए ॥ १०४४ ॥

धर्मे अस्थिरान् स्थिरीकरोति इति स्थविरः, गणं-गणसमूहं धारयति—आत्मनि व्यवस्थापयतीति गणधरः, गार्ग्यो—गर्गसगोत्रः मुणति—प्रतिजानीते सर्वसावद्यविरतिमिति मुनिः, आसीत्—अभूत् विशारदः—कुशलः सर्वशास्त्रेषु संग्रहोपग्रहयोर्वा, आकीर्णः—आचार्यगुणैर्व्याप्तः, गणिभावे—आचार्यत्वे, स्थित इति गम्यं, समाधानं समाधिस्तं कथञ्चित्कुशिष्यैस्त्रोटितमपि प्रतिसन्धत्ते—सङ्घटयति आत्मन इति गम्यम् ॥ १ ॥ १०४४ ॥

समाधिं च प्रतिदधद्यदसौ परिभावयति तदाह—

वहणे वहमाणस्स, कंतारं अइवत्तए। जोए वहमाणस्स, संसारो अइवत्तए ॥ १०४५ ॥

वहने—शकटादौ अन्तर्भावितण्यर्थतया वाहयमानस्य अर्थात् वाहकस्य—पामरादेः, उत्तरत्र खलुङ्कग्रहणादिह विनीतगवादीनितिगम्यं, यद्वा कान्तारं—अरण्यं अतिवर्त्तते—सुखोल्लङ्घ्यतया स्वयमेवातिक्रामति, तथा योगे—संयमव्यापारे वाहयमानस्य—प्रवर्त्त-



गार्ग्याचार्यवर्णनम्

मानस्याचार्यादे सुशिष्यानिति गम्य, यद्वा योग्यान् शिष्यान् वाहयमानस्य-कृत्येषु प्रवर्त्तयत आचार्यादे ससारोऽतिवर्त्तयते-सुखेनातिक्रामति, तद्विनाततादर्शनत आत्मनो विशेपसमाधिसम्भवादिति सम्भव ॥ २ ॥ १०४५ ॥

इत्थमात्मन समाधिप्रतिसन्धानाय विनीतस्वरूप परिभाव्य स एवाविनीतस्वरूप यथा परिभावयति तथाह—

खलुके जो उ जोएइ, विहम्माणे किलिस्सई । असमाहिं च वेएइ, तुत्तओ य से भज्जइ ॥ १०४६ ॥

गाथापञ्चक, खलुङ्कान्-गलिवृषभान् य, तु विशेषणे, योजयति-योत्क्रयति, वहने इति प्रक्रम, स किमित्याह-स सूत्रत्वात् विशेषेण घ्नन्-ताडयन् क्लिश्यति-क्लेशमनुयाति, अत एवासमाधि च-चित्तोद्वेगरूप वेदयते-अनुभवति, तोत्रकश्च-प्राजनक, से इति तस्य खलुङ्कयोजयितु भज्यते-अतिताडनात् भङ्गमाप्नोति ॥ ३ ॥ १०४६ ॥

ततश्चातिरुष्ट सन् यत्करोति तदाह—

एग डसइ पुच्छमि, एग विंधइऽभिक्खण । एगो भजइ समिल, एगो उप्पहपट्ठिओ ॥ १०४७ ॥

एक दशति-दशनैर्भक्षयति पुच्छे, एकमन्य गलि विध्यति-प्राजनकारया तुदति, उपलक्षण चैतदश्लीलभाषणादीना, अभीक्ष्ण-पुन पुन, अथ ते किं कुर्वन्ति येन योजयितुरेव निर्वेदहेतव इत्याह-एक कश्चित् खलुङ्को-गौर्भनक्ति-आमर्दयति, समिला-युगरन्ध्रकीलिका, अन्यस्तामभङ्क्त्वापि उत्पथप्रस्थित-उन्मार्गे चलित स्यादितिगम्यम् ॥ ४ ॥ १०४७ ॥

तथा—

एगो पडइ पासेण, निवेसइ निविज्जई । उक्कुद्दइ उप्फिडई, सढे बालगवी वए ॥ १०४८ ॥

गलिवृषभस्वरूपम्

एकः पतति पार्श्वेन—एकगात्रविभागेन भूमौ, अन्यस्तु निविशति—उपविशति, अपरश्च शेते, अपर उत्कूर्दते—ऊर्ध्वं गच्छति, उप्फिडइत्ति—मण्डूकवत् प्लवते, अन्यः शठः—शाठ्यवान् युवा कश्चिद् बालगवीम्—अवृद्धां गां व्रजेत्—तदभिमुखं धावेदित्यर्थो, यद्वा आर्षत्वात् बालगवीति व्यालगावा—दुष्टबलीवर्दो व्रजेत्—गच्छेत् अन्यत इति शेषः ॥ ५ ॥ १०४८ ॥

अन्यच्च—

माई मुद्धेण पडई, कुद्धे गच्छइ पडिवहं ।
मयलक्खेण चिट्ठई (पलयं(यलं) ते ण चिट्ठिया पा०), वेगेण य पहावई ॥ १०४९ ॥

गलिवृषभस्वरूपम्

मायी—मायावान् मूर्ध्ना—मस्तकेन पतति, कोऽर्थो अतिनिस्सहमेवात्मानं दर्शयन् भुवि शिरसा लुठति, अन्यः क्रुद्धः सन् गच्छति प्रतिपथं—पश्चाद्वलति, अपरो मृतलक्ष्येण—मृतव्याजेन तिष्ठति—आस्ते, कथञ्चित् प्रवणीकृतोऽपि वेगेन च प्रधावति, यथा द्वितीयो गन्तुं न शक्नोति तथा गच्छतीत्यर्थः ॥ ६ ॥ १०४९ ॥

छिन्नाले छिंदई सिल्लिं, दुद्दंते भंजई जुगं । सेविय सुस्सुयाइत्ता, उज्जुहित्ता पलायई ॥ १०५० ॥

छिन्नालः—तथाविधदुष्टजातिः कश्चित् छिनत्ति—खण्डयति, सिल्लिं—रश्मिं, संयमनरज्जुमित्यर्थः, अपरस्तु दुर्दान्तो भनक्ति युगं, सोऽपि च युगं भङ्क्त्वा सूत्कारान् कृत्वा, तथा उज्जाहित्तात्ति प्रेर्य स्वामिनं शकटं वेतिगम्यं पलायति—अन्यतो धावति ॥ ७ ॥ १०५० ॥

इत्थ दृष्टान्त परिभाव्य दार्ष्टान्तिक यथा भावयत्यसौ तथाह—

खलुका जारिसा जुज्जा, दुस्सीसाविहु तारिसा । जोइया धम्मजाणमि, भज्जता धिइदुब्बला ॥ १०५१ ॥

खलुङ्का उक्तस्वरूपा गावो यादृशा योज्या—घटनीया, दु शिष्या अपि, हुरेवार्थस्य भिन्नक्रमत्वात् तादृशा एव, यथाहि खलुङ्कगवा स्वस्वामिन क्लमयन्ति असमाधिं च प्रापयन्ति, यथा च समिलाभङ्गादिना दुष्टत्व आदर्शयन्ति एवमेतेऽपि, किमिति ?, यतो योजिता—व्यापारिता धर्मो यानमिव मुक्तिपुरप्रापकतया धर्मयान तस्मिन् भज्यन्ते—न सम्यक् प्रवर्त्तन्ते, प्राकृतत्वात् दुर्बलधृतयो धर्मानुष्ठान प्रतीति गम्यम् ॥ ८ ॥ १०५१ ॥

गलिवृषभसदृशा दु शिष्याः

धृतिदुर्बलत्वमेव तेषा भावयितुमाह—

इड्ढीगारविए एगे, एगित्थ रसगारवे । सायागारविए एगे, एगे सुचिरकोहणे ॥ १०५२ ॥

गाथापद्धं, ऋद्ध्या गौरव 'श्राद्धा ऋद्धिमन्तो मम वश्या, सम्पद्यते च यथा चिन्तितमुपकरण' इत्याद्यात्मबहुमानरूप ऋद्धिगौरव तदस्यास्तीति ऋद्धिगौरविको, न गुरुनियोगे प्रवर्त्तते, किमेतैर्ममेति ?, एक—कश्चन अत्र दु शिष्येषु रसेषु—मधुरादिषु गौरव—गार्द्ध्यं यस्यासौ रसगौरवो, बालग्लानादीना समुचिताहारदानतपोऽनुष्ठानादौ न प्रवर्त्तते, साते—सुखे गौरव प्रतिबन्धोऽस्यास्तीति सातगौरविक एक, अप्रतिबद्धे विहारादौ न प्रवर्त्तते, एक सुचिरक्रोधन—प्रभूतकालकोपनशील—एकदा कुपित कुपित एवास्ते, न कृत्येषु प्रवर्त्तते ॥ ९ ॥ १०५२ ॥

भिक्खालसिए एगे, एगे ओमाणभीरुए थद्धे । एगं च अणुसासंमी, हेऊहिं कारणेहि य ॥ १०५३ ॥

भिक्षायामालस्यकः–आलस्यवान् भिक्षालसिक एको, न विहर्त्तुमिच्छति, एकोऽपमानभीरुर्भिक्षां भ्रमन्नपि न यस्य तस्य गृहे प्रविशति, यद्वा ओमाणंति प्रवेशः, स च स्वपरपक्षयोः, तद्भीरुर्गृहिप्रतिबन्धेन मा मां प्रविशन्तमालोक्याऽन्ये साधवो भूतादयो वा अत्र प्रवेक्ष्यन्तीति, स्तब्धः–अहंकारवान् न निजकुग्रहान्नमयितुं शक्य एक इति प्रक्रमः, एकं च दुःशिष्यं अनुशास्म्यहं, हेतुभिः कारणैश्चोक्तरूपैः ॥ १० ॥ १०५३ ॥

स चानुशिष्यमाणः किं कुरुते इत्याह—

सोऽवि अंतरभासिल्लो, दोसमेव पकुव्वई ( पभासइ पा० ) ।
आयरियाणं तं वयणं, पडिकूलेइ अभिक्खणं ॥ १०५४ ॥

सोऽपि दुःशिष्योऽन्तरभाषावान्–गुरुवचनान्तरे एव स्वाभिमतभाषकः दोषमेव–अपराधमेव प्रकरोति–प्रकर्षेण विधत्ते, नतु अनुशिष्यमाणोऽपि तद्व्यवच्छेदमित्यर्थः, आचार्याणां सतामप्यस्माकमिति गम्यं, तदनु शिक्षाभिधायकं वचनं प्रतिकूलयति–विपरीतं करोति युक्त्युपन्यासेन विपरीतचेष्टया वा, अभीक्ष्णं–पुनः पुनः न त्वेकदेत्यर्थः ॥ ११ ॥ १०५४ ॥

यथा प्रतिकूलयति तथाह—

न सा मम वियाणाइ, नवि सा मज्झ दाहिई । निग्गया होहिई मन्ने, साहू अन्नोऽत्थ वच्चउ ॥ १०५५ ॥

अमुकस्या गृहात्पथ्याद्यानीयतामित्यस्माभिरुक्तस्तत स तया ज्ञायमानोऽपि प्रतिकूलतया ब्रूते, यथा–न सा श्राविका मा विजानाति, तत एव न च–नैव सा मह्य दास्यति, विवक्षिताहारादीति गम्य, यद्वा निर्गता गृहादधुना सा भविष्यतीति मन्ये इति वक्ति, अथवा साधुरन्यो–मद्व्यतिरिक्तोऽत्र विवक्षितकार्ये व्रजतु, किमहमेवैक साधुरसीत्याद्यभिधत्ते ॥ १२ ॥ १०५५ ॥

अन्यच्च—

पे( पो पा० )सिया पलिउचति, मे परियति समतओ । रायविट्ठिं व मन्नता, करिंति भिउडिं मुहे ॥ १०५६ ॥

प्रेषिता –क्वचित् प्रयोजने प्रस्थापिता , पलिउचतित्ति–तत्प्रयोजनानिष्पादने पृष्टा सन्तोऽपह्नुवन्ते, क्व वयमुक्ता ?, गता वा तत्र वय न तु सा दृष्टा, ते तु शिष्या पर्यटन्ति समन्तत –सर्वासु दिक्षु, न गुरुपार्श्वे कदाचिदासते, मा कदाचिदेषा किञ्चित्कृत्य भविष्यतीति, कथञ्चित्सन्निधाने कृत्यप्रवृत्तौ च राजवेष्टिमिव–नृपहठप्रवर्त्तितकृत्यमिव मन्यमाना कुर्वन्ति, भ्रूकुटिं–भ्रूत्क्षेपरूपा, मुखे–वक्त्रे, अत्यन्तदुष्टताख्यापकमेतत्, उपलक्षणत्वादन्यचपुरिकाराश्च ॥ १३ ॥ १०५६ ॥ आचार्यप्रतिकूलचारी दु शिष्या

अपर च—

वाइया सगहिया चेव, भत्तपाणेहि पोसिया । जायपक्खा जहा हसा, पक्कमति दिसोदिसि ॥ १०५७ ॥

वाचिता –शास्त्राणि पाठिता , उपलक्षणत्वात् तदर्थं च ग्राहिता , किमाचार्यान्तरसत्का एव सन्त उतान्यथेत्याह–सङ्गृहीता –परिगृहीताश्च–दीक्षिता , उपस्थिताश्च स्वयमिति गम्य, एवेति पूरणे, सुब्व्यत्ययाद्भक्तपानेन च पोषिता , तथापि जातपक्षा–

उत्पन्नपतत्राः यथा हंसाः प्रक्रामन्ति—गच्छन्ति, दिशोदिशं—दिशि दिशि, यदृच्छाविहारिणः स्युरित्यर्थः, प्रागेकप्रक्रमेऽपि यदि बह्वभिधानं तदीदृशां भूयस्त्वख्यापनार्थम् ॥ १४ ॥ १०५७ ॥

इत्थं खलुङ्कस्येव समिलाभङ्गादिना दुःशिष्यस्य धृतिदुर्बलत्वादिना दुष्टत्वं, अत एव खल्वासक्कमासमाधिर्यदसावचेष्टत तदाह—

अह सारही विचिंतेइ, खलुंके हि समागए। किं मज्झ दुट्ठसीसेहिं ?, अप्पा मे अवसीअई ॥ १०५८ ॥

अथानन्तरोक्तचिन्तानन्तरं सारथिरिव सारथिः स्खलितप्रवर्त्तकतया गर्गाचार्यः विचिन्तयति—ध्यायति, खलुङ्कैरिव खलुङ्कैर्दुःशिष्यैः, 'हेतौ तृतीया,' श्रमं—खेदमागतः—प्राप्तः श्रमागतः, ते हि दुष्टगोवदनेकधा प्रेर्यमाणा अपि सन्मार्गमनवगच्छन्तो गुरुश्रमहेतव एव स्युरिति, यद्वा खलुङ्कैः समागतः युतः यच्चिन्तयति तदाह—किं ?, न किञ्चिदित्यर्थः, ममैहिकमामुष्मिकं वा कार्यं सिध्यतीति गम्यं, दुष्टशिष्यैः प्रक्रमात् प्रेरितः, किमित्यत आह—आत्मा मे अवसीदति, एतत् प्रेरणाव्यग्रतया स्वकृत्याकरणेन, तद् वरमेतत्त्यागत उद्यतविहारेणैव विहर्त्तुमिति भावः ॥ १५ ॥ १०५८ ॥

अथैतत्प्रेरणान्तराले स्वकृत्यमपि किं न क्रियते इत्याह—

जारिसा मम सीसा उ, तारिसा गलिगद्दहा। गलिगद्दहे चइत्ताणं, दढं पगिण्हई तवं ॥ १०५९ ॥

यादृशाः तुः पूरणे तादृशा गलिगर्दभाः, यदि परमिति शेषः, गर्दभग्रहणमतिकुत्साख्यापकं, ते हि स्वरूपतोऽप्यतिप्रेरणयैव प्रवर्त्तन्ते, अतस्तत्प्रेरणयैव कालोऽतिक्रामति, नतु अन्तरं यत्र स्वकार्यमपि क्रियते इति भावः, ततो गलिगर्दभानिव ग० दुःशिष्यान् त्यक्त्वा दृढं—बाढं प्रगृह्णाति—अङ्गीकरोति तदनुशासनरूपपलिमन्थत्यागतो गर्गनामा तपो—अनशनादि ॥ १६ ॥ १०५९ ॥

आचार्यप्रतिकूलचारी-दुःशिष्याः ततो गर्गाचार्यस्य तपः

तत कीदृशोऽसौ किं कृतवान् इत्याह—

मिउमद्दवसपन्ने, गंभीरे सुसमाहिए। विहरइ महिं महप्पा, सीईभूएण अप्पणा ॥ १०६० ॥ त्तिबेमि ॥

॥ खलुंकिज्ज ॥ २७ ॥

मृदु —बहिर्वृत्त्या विनयवान्, तत एव गम्भीर–अलब्धमध्य सुसमाहित —सुष्ठु चित्तसमाधानवान् विहरति अप्रतिबद्ध विहारेण महीं महात्मा, शील चारित्र भूत –प्राप्त तेन आत्मनोपलक्षित, यतो गुरोरपि खलुङ्कत्यागत एव मार्दवादिगुण सम्पन्नता, अत खलुङ्कतापरिहारेणाशठतैव सेव्येत्यध्ययनभावार्थ ॥ १७ ॥ १०६० ॥

खलुङ्कता-त्यागेन गुरोरपि मृदुता-पादनम्

॥ इति खलुङ्कीयाध्ययनावचूरि ॥

॥ इति श्रीउत्तराध्ययने सप्तविंशस्य खलुङ्कीया-ध्ययनस्य अवचूरि समाप्ता ॥

# अथ मोक्षमार्गगत्याख्यमष्टाविंशमध्ययनम् ।

अनन्तरमशठतोक्ता, इह तु तद्व्यवस्थितस्य न्यायप्राप्तैव मोक्षमार्गगतिप्राप्तिरिति तदभिधायकमिदमध्ययनमारभ्यते, अस्य मोक्षमार्गगतिनाम—

मुक्खमग्गगइं तच्चं( त्थं ), सुणेह जिणभासियं । चउकारणसंजुत्तं, नाणदंसणलक्खणं ॥ १०६१ ॥

अत्र मोक्षः–अष्टविधकर्मोच्छेदस्तस्य मार्गः–तत्प्रापणोपायस्तेन गतिः–सिद्धिगमनरूपा सा तां, कथ्यमानामिति शेषः, तथ्यां–सत्यां श्रृणुत–आकर्णयत जिनभाषितां, चत्वारि कारणानि वक्ष्यमाणरूपाणि तैः संयुक्तां–अन्वितां तां, ननु चतुष्कारणसाध्यकर्मक्षयरूपमोक्षानन्तरभाविन्या गतेश्चतुष्कारणवतीत्वं कथं ?,–उच्यते, व्यवहारतः कारणकारणस्यापि कारणत्वाभिधानात्, अत एवानन्तरकारणस्यैव कारणत्वमित्याशङ्कापोहार्थमेतद्विशेषणोपादानं, तथा ज्ञानदर्शने–विशेषसामान्यबोधरूपे लक्षणं–चिह्नं यस्याः सा ज्ञानदर्शनलक्षणा तां, यस्य हि तत्सत्ता तस्यावश्यम्भाविनी मुक्तिरिति निश्चीयते, अत एव चानयोर्मूलकारणतां दर्शयितुमित्थमुपन्यासः ॥ १ ॥ १०६१ ॥

मोक्षमार्गमाह—

नाणं च दंसणं चेव, चरित्तं च तवो तहा । एस मग्गुत्ति पन्नत्तो, जिणेहिं वरदंसिहिं ॥ १०६२ ॥



मोक्षमार्गगतेः परुपणा

ज्ञायते वस्तुतत्त्वमिति ज्ञान, दृश्यते तत्त्वमस्मिन्निति दर्शन, जीवादितत्त्वरुचिरूपात्मशुभभावनारूप, चरन्ति–गच्छन्त्यनेन मुक्तिमिति चारित्र, तपति पुरोपात्तकर्माणि क्षपणेनेति तप–बाह्यान्तररूप, तथा चशब्द समुच्चये, सर्वत्र समुच्चयाभिधान समुदितानामेव मुक्तिमार्गत्वख्यापक, पूर्वत्र एवकारस्य भिन्नक्रमत्वात् एष एव मार्ग इति मार्गशब्दवाच्य अस्यैव मुक्तिप्रापकत्वात्, प्रज्ञप्त–प्ररूपितो जिनै वर–समस्तवस्तुव्यापितया अभिचारितया च द्रष्टु–प्रेक्षितु शीलमस्येति वरदर्शिनस्तै, इह चारित्रभेदत्वेऽपि तपस पृथगुक्तिरस्यैव क्षपण प्रत्यसाधारणत्वमादर्शयितुम् ॥ २ ॥ १०६२ ॥

सम्प्रत्येतस्यैवानुवादेन फलमाह—

नाण च दसण चेव, चरित्त च तवो तहा । एय मग्गमणुप्पत्ता, जीवा गच्छति सुग्गइ ॥ १०६३ ॥

एतदुक्तरूप मार्ग–पन्थान अनुप्राप्ता–आश्रिता जीवा गच्छन्ति सुगतिं, प्रक्रमाद् मुक्तिम् ॥ ३ ॥ १०६३ ॥

'ज्ञानादीनि मुक्तिमार्ग'इत्युक्तमतस्तत्स्वरूपमिह वाच्य, तच्च तद्भेदोक्तावुक्तमेव स्यादिति मत्वा 'यथोद्देश निर्देश' इति न्यायत पूर्व ज्ञानभेदानाह—

तत्थ पचविह नाण, सुअ आभिणिबोहिय । ओहियनाण तइय, मणनाण च केवल ॥ १०६४ ॥

तत्रेति–तेषु ज्ञानादिषु मध्ये पञ्चविध–पञ्चप्रकार ज्ञान, के ते पञ्चप्रकारा? इत्याह–श्रुत आभिनिबोधिक अवधिज्ञान तृतीय, मन शब्देन मनोद्रव्यपर्याया गृह्यन्ते तेषु तत्सञ्ज्ञिविकल्पहेतुषु ज्ञान, तत्रैव हि मन पर्यायज्ञानी साक्षादवबुध्यते, न तु बाह्यान्,

ज्ञानादि मोक्षमार्ग ज्ञानभेदाश्च

अनुमानगम्यत्वात्तेषां, चस्य भिन्नक्रमत्वात् केवलं ज्ञानं, आह—नन्द्यादिषु मतिज्ञानानन्तरं श्रुतज्ञानमुक्तं तदिह किमर्थमादित एव श्रुतोपादानं ?, उच्यते—शेषज्ञानस्वरूपपरिज्ञानस्य तदधीनत्वेन प्राधान्यख्यापनार्थम् ॥ ४ ॥ १०६४ ॥

साम्प्रतं ज्ञानशब्दस्य सम्बन्धिशब्दत्वाद्येषां तज्ज्ञानं तान्याह—

एयं पंचविहं नाणं, दव्वाण य गुणाण य। पज्जवाणं च सव्वेसिं, नाणं नाणीहिं देसियं ॥ १०६५ ॥

एतदनन्तरोक्तं पञ्चविधं ज्ञानं, द्रवन्ति—गच्छन्ति तांस्तान् पर्यायानिति द्रव्याणि तेषां, चस्तद्गतानेकभेदसूचकः, गुणानां रूपादीनां, चः प्राग्वत्, परीति—सर्वतः, कोऽर्थः ?—द्रव्येषु गुणेषु सर्वेष्ववन्ति—गच्छन्तीति पर्यवास्तेषां च—क्रमभावि नवपुराणादीनां, सर्वेषां, केवलापेक्षायां तु प्रकारस्य कात्स्न्र्ये, प्रतिनियतपर्यायग्राहित्वात्तेषां ज्ञानं—अवबोधकं, अनेन द्रव्यादिविषयत्वं ज्ञानस्योक्तं, ज्ञानिभिः—केवलिभिः देशितं—कथितम् ॥ ५ ॥ १०६५ ॥

तत्र च द्रव्यादीनि किंलक्षणानीत्याह—

गुणाणं आसओ दव्वं, एगदव्वस्सिया गुणा। लक्खणं पज्जवाणं तु, उभओ अस्सिया भवे ॥ १०६६ ॥

गुणानामाश्रयः—आधारो यत्रस्थास्ते उत्पद्यन्ते उत्पद्य चावतिष्ठन्ते प्रलीयन्ते च तद् द्रव्यं, अनेन रूपादय एव वस्तु, न तद्व्यतिरिक्तमन्यदिति ताथागतमतमपास्तं, तथा एकस्मिन् द्रव्ये स्वाधारभूते आश्रिताः—स्थिताः एकद्रव्याश्रिताः गुणा रूपादयः, एतेन द्रव्यमेवेच्छन्ति, तदन्यरूपादीन् अविद्योपदर्शितानाहुर्ये ते अपाकृताः, लक्ष्यते अनेनेति लक्षणं, पर्यवाणां



ज्ञानस्य विषयः द्रव्यपर्यायस्वरूपंश्च

तुर्विशेषणे, उभयो –द्वयोर्द्रव्यगुणयोराश्रिता भवेयु –स्यु , गुणेष्वपि नवपुराणादय पर्याया प्रत्यक्षप्रतीता एव कियत्काल भाविन , प्रतिसमयभाविनस्तु पुराणत्वान्यथानुपपत्तेरित्यनुमानतोऽवसीयन्ते ॥ ६ ॥ १०६६ ॥

द्रव्यभेदानाह—

धम्मो अधम्मो आगास, कालो पुग्गलजतवो । एस लोगुत्ति पन्नत्तो, जिणेहिं वरदसिहिं ॥ १०६७ ॥

धर्म इति धर्मास्तिकाय , अधर्म इति अधर्मास्तिकाय , आकाशमित्याकाशास्तिकाय , काल –अद्धासमयात्मक , पुद्गलजन्तव इति पुद्गलास्तिकाय जीवास्तिकायः, एतानि द्रव्याणीति शेष , प्रसङ्गतो लोकस्वरूपमप्याह–एप लोक इतीत्येवस्वरूपकः, कोऽर्थ ?– अनन्तरोक्तद्रव्यषट्कात्मक ॥ ७ ॥ १०६७ ॥

एतेपामपि भेदानाह—

धम्मो अधम्मो आगास, दव इक्किक्कमाहिय । अणताणि य दव्वाणि, कालो पुग्गलजतवो ॥ १०६८ ॥

द्रव्यमिति धर्मादिभि प्रत्येक योज्यते, एकैकमेकसङ्ख्याया एव तेपु भावादाख्यात तीर्थकृद्भिरिति गम्य, तर्कि कालादिद्रव्याण्यप्येवमेवेत्याह–अनन्तानि–अनन्तसङ्ख्यानि स्वगतभेदानन्त्यात्, चस्य भिन्नक्रमत्वात्, द्रव्याणि, कतमानि ?–कालपुद्गल जन्तवश्च, कालस्य चानन्त्यमतीतानागतापेक्षया ॥ ८ ॥ १०६८ ॥

धर्मादीना लक्षणान्याह—

गइलक्खणो उ धम्मो, अहम्मो ठाणलक्खणो । भायण सव्वदव्वाण, नह ओगाहलक्खण ॥ १०६९ ॥

द्रव्यषट्क तद्भेदाश्च

गाथा ४, गमनं—गतिः—देशान्तरप्राप्तिर्लक्षणमस्येति गतिलक्षणः, तुः पूरणे, कोऽसौ ?—धर्मो—धर्मास्तिकायः, स्थितिः—स्थानं गतिनिवृत्तिस्तल्लक्षणमस्येति स्थानलक्षणः, भाजनं—आधारः सर्वद्रव्याणां—जीवादीनां नभः—आकाशः, अवगाहः—अवकाशस्तल्लक्षणमस्येति अवगाहलक्षणं, तद्धि अवगाढुं प्रवृत्तानां आलम्बनीभवति अनेन तस्यावगाहकारणत्वमुक्तम् ॥ ९ ॥ १०६९ ॥

तथा—

वत्तणालक्खणो कालो, जीवो उवओगलक्खणो । नाणेणं दंसणेणं च, सुहेण य दुहेण य ॥ १०७० ॥

वर्त्तन्ते भवन्ति भावास्तेन तेन रूपेण तान्प्रति प्रयोजकत्वं वर्त्तना सा लक्षणं—लिङ्गमस्येति वर्त्तनालक्षणः कालः, कोऽर्थः ? यदमी शीतवातातपादय ऋतुविभागेन स्युस्तदवश्यममीषां नैयत्यहेतुना केनापि भवितव्यं, स च काल एव, तथा जीवः उपयोगो—मतिज्ञानादिस्तल्लक्षणं रूपं यस्यासौ उपयोगलक्षणः, मतिज्ञानादिको ह्युपयोगो जीवलक्षणमुच्यते, अत एव ज्ञानेन दर्शनेन च, सुखेन च—आह्लादरूपेण दुःखेन च प्रक्रमाल्लक्ष्यते इति गम्यं, न हि ज्ञानादीन्यजीवेषु कदाचिदुपलभ्यन्ते इति कृत्वा ॥ १० ॥ १०७० ॥



लक्षणान्तरमाह—

नाणं च दंसणं चेव, चरित्तं च तवो तहा । वीरियं उवओगे य, एयं जीवस्स लक्खणं ॥ १०७१ ॥

वीर्य—वीर्यान्तरायक्षयोपशमसमुत्थं सामर्थ्य, उपयोगश्च—अवहितत्वं, किमित्याह—एतद् ज्ञानादि जीवस्य लक्षणं, एतेनैव हि जीवोऽनन्यसाधारणतया लक्ष्यते इति ॥ ११ ॥ १०७१ ॥

इत्थ जीवलक्षणमुक्त्वा पुद्गलाना लक्षणमाह—

सद्दधयारउज्जोओ, पभा छाया तवुत्ति वा। वण्णरसगंधफासा, पुग्गलाण तु लक्खण ॥ १०७२ ॥

शब्दो–ध्वनि अन्धकार–तम, उभयत्र सूत्रत्वात् सुपोलुक्, उद्द्योतो–रत्नादिप्रकाश, प्रभा–चन्द्रादिरुचि छाया–शैत्यगुणा आतप–रविबिम्बकृत उष्णप्रकाश, इतिशब्द आद्यर्थस्ततश्च सम्बन्धभेदादीना परिग्रह, वा–समुच्चये, वर्णरसगन्धस्पर्शा, वर्णादीना आद्यर्थेनेतिशब्देन ग्रहणेऽपि पुनरुपादान सर्वत्रानुयायितारयापनार्थं, पुद्गलाना–स्कन्धाना तु पुनर्लक्षण, एभिरेव तेषा लक्षणत्वात्, इह ध्वने प्रतिघातविधायित्वेन मूर्त्तत्वादन्धकारोद्द्योतौ प्रभाणा तु चक्षुर्विज्ञानविषयत्वात् छायातपयोश्च स्पर्शविषयत्वाच्च पौद्गलिकत्वम् ॥ १२ ॥ १०७२ ॥

पुद्गललक्षण

एव द्रव्यलक्षणमुक्तम्, अथ पर्यायलक्षणमाह—

पर्यायलक्षणञ्च

एगत्त च पुहुत्त च, सखा सठाणमेव य। सजोगा य विभागा य, पज्जवाण तु लक्खण ॥ १०७३ ॥

एकत्व–भिन्नेष्वपि परमाण्वादिषु यदेको घटादिरिति प्रतीतिहेतु सामान्यरूप, च उत्तरापेक्षया समुच्चये, पृथक्त्वम्–अयम स्मात्पृथगिति प्रतीतिहेतु, च सर्वत्र समुच्चये, सख्या–एकद्वावित्यादिप्रतीतिहेतु, सस्थान–आकार, परिमण्डलोऽयमित्यादिधी हेतु, एवेति पूरणे, सयोगा–अयमङ्गुल्या सयोग इत्यादिव्यपदेशहेतव, विभागा–अयमतो विभक्त इति बुद्धिहेतव, उभयत्र व्यक्त्यपेक्षया बहुवचन, चोऽनुक्तनवपुराणत्वाद्युपलक्षक, पर्यवाणा, तु पूरणे, लक्षण–असाधारणरूप, गुणाना तु लक्षणम भिधान रूपादिरूपाणा तेषामतिप्रतीतत्वात् ॥ १३ ॥ १०७३ ॥

इत्थं स्वरूपतो विषयतश्च ज्ञानमुक्त्वा दर्शनमाह—

जीवा जीवा य बंधो य, पुण्णं पावाऽऽसवो तहा। संवरो निज्जरा मुक्खो, संतेए तहिया नव ॥ १०७४ ॥

जीवा उक्तरूपाः अजीवा–धर्मास्तिकायाद्याः बन्धश्च जीवकर्मणोरत्यन्तश्लेषः, आश्रवति–आगच्छति अनेन कर्मेत्याश्रवः कर्मोपादानहेतुर्हिंसादिः ततो द्वन्द्वः, तथेति समुच्चये, संवरो–गुप्त्यादिभिराश्रवनिरोधः, निर्जरा–विपाकात्तपसो या कर्मपरिशाटः, मोक्षः–कृत्स्नकर्मक्षयात् स्वात्मन्यवस्थानं, सन्ति–विद्यन्ते एते अनन्तरोक्ताः तथ्या–अवितथाः नवेति नवसङ्ख्याः ॥ १४ ॥१०७४॥

ततः किमित्याह—

तहियाणं तु भावाणं, सब्भावे उवएसणं। भावेण सद्दहंतस्स, सम्मत्तं ति वियाहियं

(सब्भावो(वेणो) वएसणे। भावेण उ सद्दहणा सम्मत्तं होति आहियं पा०) ॥ १०७२ ॥

तथ्यानां पुनर्भावानां जीवादीनां सद्भावे–सद्भावविषयं, कोऽर्थः ?–एतदवितथसत्ताभिधायकं उपदेशनं–गुर्वादिसम्बन्धिनमुपदेशं भावेन–अंतःकरणेन श्रद्दधतः तथेति प्रतिपद्यमानस्य सम्यग्भावः सम्यक्त्वं तदिति भावः श्रद्धानं, विशेषेणाख्यातमुक्तं व्याख्यातं तीर्थकरैरिति गम्यम् ॥ १५ ॥ १०७५ ॥

एवं सम्यक्त्वस्वरूपमुक्त्वाऽथ तद्भेदानाह—

निस्सग्गुवएसरुई आणारुइ सुत्तबीयरुइमेव। अभिगमवित्थाररुई किरिया संखेवधम्मरुई ॥ १०७६ ॥



सम्यक्त्वस्वरूपम्

रुचिशब्द प्रत्येक योज्य, ततो निसर्ग –स्वभावस्तेन रुचि –तत्त्वाभिलापरूपा अस्येति निसर्गरुचि, उपदेशेन–गुर्वादि कथनेन रुचिर्यस्य स उपदेशरुचि, आज्ञया–सर्वज्ञवचनात्मिकया रुचिर्यस्य स, रुचिशब्दस्येहापि प्रत्येकमभिसम्बन्धात् सूत्रेण–आगमेन रुचिर्यस्य स, तथा क्रिया–अनुष्ठान, सङ्क्षेप –सङ्ग्रहो, धर्म –श्रुतधर्मादिस्तेषु रुचिरस्येति, प्रत्येक रुचियोगात् क्रियारुचि सङ्क्षेपरुचि, धर्मरुचिर्भवति विज्ञेय इति शेष, यच्चेह सम्यक्त्वस्य जीवानन्यत्वेनाभिधान तद्गुणगुणिनो कथञ्चिद् भेदख्यापनार्थम् ॥ १६ ॥ १०७६ ॥

व्यासार्थमाह—

भूअत्थेणाहिगया जीवाऽजीवा य पुण्ण पाव च। सहसमुइआ आसवसवरु रोएइ उ निसग्गो ॥ १०७७ ॥

सम्यक्त्व भेदा निसर्ग रुचिस्वरूपञ्च

गाथा ११, भूत –सत्योऽर्थो–विषयो यस्य तद्भूतार्थं, ज्ञानमिति गम्य, तेन भावप्रधानत्वाद्वा निर्देशस्य भूतार्थत्वेन सद्भूता अमी अर्था इत्येवरूपेण अधिगता –ज्ञाता येनेति गम्य, जीवा अजीवाश्च पुण्य पाप च, कथममी ज्ञाता इत्याह–सोपस्कारत्वात् सूत्रत्वाच्च सह आत्मना या सङ्गता मति सम्मतिस्तया, कोऽर्थ ?–परोपदेश विनापि जातिस्मरणप्रतिभादिरूपया, आश्रव सवरौ, च अनुक्तबन्धादिसमुच्चयार्थ, तोरेवार्थत्वाद् रोचत एव–श्रद्धत एव योऽन्यस्याश्रुतत्वाद् अनन्तरन्यायेनाधिगतान् जीवादीनेष निसर्ग इति–निसर्गरुचि ज्ञेय, स इति शेष ॥ १७ ॥ १०७७ ॥

अमुमेवार्थं स्पष्टतरमेवाह—

जो जिणदिट्ठे भावे चउविहे सद्दहाइ सयमेव। एमेव नन्नहत्ति य निस्सग्गरुइत्ति नायव्वो ॥ १०७८ ॥

यो जिनदृष्टान् भावान्-जीवादिपदार्थान् चतुर्विधान्-द्रव्यक्षेत्रकालभावभेदान् नामादिकभेदतो वा चतुष्प्रकारान् श्रद्दधाति-तथेति प्रतिपद्यते, स्वयमेव-परोपदेशं विना, कथमित्याह-एवमेतद् यथा जिनैर्दृष्टं जीवादि, नान्यथेति-नैतद् विपरीतं, चः समुच्चये, स ईदृग् निसर्गरुचिरिति ज्ञातव्यः ॥ १८ ॥ १०७८ ॥

उपदेशरुचिमाह—

एए चेव उ भावे उवइट्ठे जो परेण सद्दहइ । छउमत्थेण जिणे व उवएसरुइत्ति नायव्वो ॥ १०७९ ॥

उपदेश-आज्ञा-रुचि-स्वरूपम्

एतांश्चैव पूर्वोक्तान्, तुः पूरणे, भावान्-जीवादीन् उपदिष्टान्-कथितान् परेण-अन्येन श्रद्दधाति, कीदृशापरेण? छद्मस्थेन जिनेन वा-उत्पन्नकेवलेन तीर्थकृदादिना, छद्मस्थस्य तु प्रागुपन्यासस्तत्पूर्वकत्वात् जिनस्य प्राचुर्येण वा स ईदृग् उपदेशरुचिरिति ज्ञातव्यः ॥ १९ ॥ १०७९ ॥

आज्ञारुचिमाह—

रागो दोसो मोहो अन्नाणं जस्स अवगयं होइ । आणाए रोयंतो सो खलु आणारुईनाम ॥ १०८० ॥

रागो द्वेषो मोहः-शेषमोहनीयप्रकृतयः अज्ञानं च-मिथ्याज्ञानरूपं यस्यापगतं-नष्टं भवति, सर्वथैतदपगमासम्भवात् देशत इति गम्यं, एतदपगमाच्च सावधारणत्वात् वाक्यस्याज्ञयैव आचार्यादिसम्बन्धिन्या रोचमानः-कुग्रहाभावात् जीवादि तथेति प्रतिपद्यमानो मापतुषादिवत्, सः खलु निश्चितं नामेत्यभ्युपगमे ततश्चाज्ञारुचिरिति अभ्युपगन्तव्यम् ॥ २० ॥ १०८० ॥

सूत्ररुचिमाह—

जो सुत्तमहिज्जतो सुएण ओगाहई उ समत्त । अगेण बाहिरेण व सो सुत्तरुइत्ति नायवो ॥ १०८१ ॥

य सूत्र-आगममधीयान -पठन् श्रुतेनाधीयमानेन अवगाहते जीवो जीवाजीवादि प्राप्नोति, तु पूरणे, सम्यक्त्व, कीदृशा श्रुतेन ?-अङ्गेन-आचारादिना, बाह्येन-अनङ्गप्रविष्टेनोत्तराध्ययनादिना, वा विकल्पे, स ईदृशो गोविन्दवाचकवत् सूत्ररुचिर्ज्ञातव्य ॥ २१ ॥ १०८१ ॥

वीजरुचिमाह—

एगेण अणेगाइ पयाइ जो पसरई उ सम्मत्त । उदयव्व तिल्लविंदू सो वीयरुइत्ति नायवो ॥ १०८२ ॥ सूत्र वीज-रुचिस्वरूपम

एकेन प्रक्रमात् पदेन जीवादिना सुब्व्यत्ययादनेकेषु पदेषु जीवादिषु य , तोरेवार्थत्वात् प्रसरति एव-व्यासतया गच्छत्येव सम्यक्त्वमित्यनेन रुचि , अत्रोपलक्षिता, तदभेदोपचारादात्माऽपि सम्यक्त्वमुच्यते, उपचारनिमित्त च रुचिरूपेणैवात्मन प्रसरण, उदके यथा तैलविन्दु समस्तमुदकमाक्रामति तथा तत्त्वैकदेशोत्पन्नरुचिरप्यात्मा क्षयोपशमवशादशेषतत्त्वेषु रुचिमान् स्यात्, स ईदृक् वीजरुचि ,यथा हि वीज क्रमेणानेकवीजाना जनक एवमस्यापि रुचिविषयभेदतो भिन्नाना रुच्यन्तराणामिति॥२२॥१०८२॥

अभिगमरुचिमाह—

सो होइ अभिगमरुई सुअनाण जस्स ( प्र० जेण ) अत्थओ दिट्ठ ।
इक्कारस अगाइ पइण्णग दिट्ठिवाओ य ॥ १०८३ ॥

स भवति अभिगमरुचिः श्रुतज्ञानं येनार्थतः—अर्थमाश्रित्य दृष्टं—उपलब्धं, कोऽर्थो ?, येन श्रुतज्ञानस्यार्थोऽधिगतः स्यात्, किं पुनस्तत् श्रुतज्ञानमित्याह—एकादशाङ्गानि आचारादिनि, जातौ एकवचनं, ततः प्रकीर्णकानि—उत्तराध्ययनादीनि दृष्टिवादः—पूर्वाणि, अङ्गत्वेपि अस्य पृथग्ग्रहणं प्राधान्यख्यापनार्थं, चात् उपाङ्गादीनि औपपातिकादीनि ॥ २३ ॥ १०८३ ॥

विस्ताररुचिमाह—

दव्वाण सव्वभावा सव्वपमाणेहिं जस्स उवलद्धा । सव्वाइं नयविहीहि य वित्थाररुइत्ति नायव्वो ॥ १०८४ ॥

अभिगम-विस्तार-क्रिया-रुचि-स्वरूपम्

द्रव्याणां—धर्मास्तिकायादीनां सर्वभावा—एकत्वपृथक्त्वाद्यशेषपर्यायाः सर्वप्रमाणैः—प्रत्यक्षादिभिः यस्योपलब्धा यत्र यस्य प्रत्यक्षादेर्व्यापारस्तेनैव प्रमाणेन प्रतीताः सर्वैः—समस्तैः नयविधिभिः—नैगमादिभेदैरमुं भात्रमयममुं वायं नयभेदश्चेच्छतीति, चः समुच्चये, स विस्ताररुचिर्ज्ञातव्यः ॥ २४ ॥ १०८४ ॥

क्रियारुचिमाह—

दंसणनाणचरित्ते तवविणए सच्चसमिइगुत्तीसु । जो किरियाभावरुई सो खलु किरियारुई नाम ॥ १०८५ ॥

दर्शनज्ञानचारित्रे ततो विनये सत्या—निरुपचारिणस्ताश्च ताः समितिगुप्तयश्च सत्यसमितिगुप्तयस्तासु, यद्वा सत्यं वा—अविसंवादियोगाद्यात्मकं समितिगुप्तयश्च सत्यसमितिगुप्तयस्तासु, यः क्रियाभावरुचिः, कोऽर्थः ?—दर्शनाद्याचारानुष्ठाने यस्य भावतो रुचिरस्ति स खलु निश्चितं क्रियारुचिर्नामेति प्रकाशे भण्यते इति शेषः, इह च चारित्रान्तर्गतत्वेऽपि तपःप्रभृतीनां पुनरुपादानं विशेषत एषां मुक्त्यङ्गत्वख्यापनार्थम् ॥ २५ ॥ १०८५ ॥

परिचयो वा परमार्थसंस्तवः, वा उत्तरापेक्षया समुच्चये, सुष्ठु–यथावद्दर्शितया दृष्टा–उपलब्धा परमार्था–जीवादयो यैः ते सुष्ठु परमार्था–आचार्यादयस्तेषां सेवनं, इह उत्तरत्र च सूत्रत्वात् स्त्रीत्वं, वा अनुक्तसमुच्चये, ततो यथाशक्ति तद्वैयावृत्त्यप्रवृत्तिश्च, अपिः–पूर्वापेक्षया समुच्चये, दर्शनशब्दः प्रत्येकं योज्यः, ततो व्यापन्नं–विनष्टं दर्शनं येषां, यैरवाप्यापि सम्यक्त्वं कर्मोदयात् वान्तं ते व्यापन्नदर्शना–निह्नवाद्याः, कुत्सितं दर्शनं येषां ते कुदर्शनाः शाक्यादयस्तेषां वर्जनं–परिहारो व्यापन्नकुदर्शवर्जनं, मा भूदेतदपरिहारतः सम्यक्त्वमालिन्यमिति, चः समुच्चये, सम्यक्त्वं श्रद्धीयते–अस्तीति प्रतिपद्यते अनेनेति सम्यक्त्वश्रद्धानं, सम्यक्त्वलिङ्गमित्यर्थः, प्रत्येकं च परमार्थसंस्तवादिभिरस्य सम्बन्धादेकत्वं, न च अङ्गारमर्दकादेरपि परमार्थसंस्तवादीनां सम्भवात् व्यभिचारिता, तात्त्विकानामेवैषामिहाधिकृतत्वात्, तस्य तथाविधानामेषामसम्भवादिति ॥ २८ ॥ १०८८ ॥

सम्यक्त्वस्य लिङ्गान्युक्त्वा सम्प्रति अस्यैव माहात्म्यं दर्शयन्नाह—

नत्थि चरित्तं संमत्तविहूणं दंसणे उ भइयव्वं । संमत्तचरित्ताइं जुगवं पुव्वं व संमत्तं ॥ १०८९ ॥

नास्ति–न विद्यते, उपलक्षणात् नासीत् न च भविष्यति, किं तत् ? चारित्रं, कीदृग् ?–सम्यक्त्वविहीनं, यावन्न सम्यक्त्वोत्पादो न तावत् चारित्रमित्यर्थः, किमेवं दर्शनमपि चारित्रनियतमित्याह–दर्शने तुः–पुनः सति भक्तव्यं–भवति वा न वा प्रक्रमात् चारित्रं, अतो न तत्तत्र नियतं, किमित्येवमत आह–सम्यक्त्वचारित्रे–युगपदेककालमुत्पद्येते इति शेषः, पूर्वं वा चारित्रोत्पादात् सम्यक्त्वमुत्पद्यते, ततो यदा युगपदुत्पादस्तदा तयोः सहभावो, यदा तु पुनः तथाविधक्षयोपशमाभावतो न तथोत्पादस्तदा सत्यपि सम्यक्त्वे न चारित्रमिति दर्शने भाज्यमिति ॥ २९ ॥ १०८९ ॥



सम्यक्त्वस्य लिङ्ग-माहात्म्ये

अन्यच्च—

पादसणिस्स नाण नाणेण विणा न हुति चरणगुणा ।
अगुणिस्स नत्थि मुक्खो नत्थि अमुक्खस्स निव्वाण ॥ १०९० ॥

नादर्शनिनो—दर्शनरहितस्य ज्ञान—सम्यग्ज्ञान, ज्ञानेन विना—ज्ञानरहिता न भवन्ति, के ते ?—चरण च—व्रतादि गुणाश्च—पिण्डविशुद्ध्यादयश्चरणगुणा , अगुणिन इति—चरणाविनाभावित्वाद् यथोक्तगुणानामविद्यमानचरणगुणस्य नास्ति मोक्ष —सर्वकर्मक्षयलक्षण , नास्त्यमुक्तस्य कर्मणेति गम्य निर्वाण—मुक्तिप्राप्ति', इह पूर्वगाथया मुक्त्यनन्तरहेतोरपि चारित्रस्य सम्यक्त्वभावे एव भवनमिति दर्शनमाहात्म्यमुक्त, अनया तु उत्तरोत्तरव्यतिरेकदर्शनेनाशेषगुणाना व्यतिरेक सापेक्षत्वात् ॥ ३० ॥ १०९० ॥ दर्शनाभावे मोक्षाभावो-ऽष्टविधो दर्शनाचारश्च

अस्य चाष्टविधाचारसहितस्यैवोत्तरोत्तरगुणप्राप्तिहेतुतेत्यस्याष्टविधाचारमाह—

निस्सकिय निक्कखिय निव्वितिगिच्छ अमूढदिट्ठी य । उववूहथिरीकरणे वच्छल्लपभावणेऽट्ठेते ॥ १०९१ ॥

शङ्कन शङ्कित—देशसर्वशङ्कात्मक तस्याभावो नि शङ्कित, काङ्क्षण—काङ्क्षित युक्तियुक्तत्वादहिंसाद्यभिधायित्वाच्च सौगतादिदर्शनान्यपि सुन्दराण्येवेत्यन्यान्यदर्शनग्रहात्मक तदभावो निष्काङ्क्षित, उभयत्र सूत्रत्वात् बिन्दुलोप , विचिकित्सा—फल प्रति सन्देहो, यथा किमियत क्लेशस्य फल स्यादुत नेति, यद्वा विदो—विज्ञा ते च तत्त्वत साधव एव, ततो विदा—साधूना जुगुप्सा—किममी यतयो मलदिग्धदेहा ?, प्रासुकजलस्नानेन हि क इव दोष स्यादित्यादिका निन्दा तदभावो निर्विचिकित्स निर्विजुगुप्स वा, आर्षत्वाच्च सूत्रे एव पाठ , अमूढा—ऋद्धिमत्कुतीर्थिकदर्शनेऽपि अवगीतमेवास्मद्दर्शनमितिमोहरहिता सा चासौ दृष्टिश्च—

बुद्धिरूपा अमूढदृष्टिः, चतुर्विधोऽप्ययमान्तर आचारः, बाह्यं त्वाह–उपबृंहणं उपबृंहा–दर्शनादिगुणान्वितानां सुलब्धजन्मानो यूयं, युक्तं च भवादृशामिदमित्यादिप्रशंसया तत्तद्गुणपरिवर्द्धनं सा च स्थिरीकरणं च–अभ्युपगतधर्मानुष्ठानं प्रति विषीदतां स्थैर्यापादानं उपबृंहास्थिरीकरणे, वात्सल्यं–साधर्मिकजनस्य भक्तपानादिनोचितप्रतिपत्तिकरणं तच्च प्रभावना च–स्वतीर्थोन्नतिहेतुचेष्टासु प्रवृत्तिः वात्सल्यप्रभावने, उपसंहारमाह–अष्टैते दर्शनाचाराः स्युरिति शेषः, एताभिरेवाष्टभिराचर्यमाणस्यास्योक्तफलसम्पादकतेति भावः, एतच्च ज्ञानाचाराद्युपलक्षणम् ॥ ३१ ॥ १०९१ ॥

अथ चारित्रस्वरूपं विवक्षुस्तद्भेदानाह—

सामाइयऽत्थ पढमं, छेदोवट्ठावणं भवे वितियं। परिहारविसुद्धीयं सुहुमं तह संपरायं च ॥ १०९२ ॥

अकसाय अहक्खायं, छउमत्थस्स जिणस्स वा। एयं चयरित्तकरं, चारित्तं होइ आहियं ॥ १०९३ ॥

चारित्रस्य भेदाः

समो–रागद्वेषरहितः प्रस्तावात् चित्तपरिणामस्तस्मिन् आयः–गमनं समायः स एव सामायिकं–सर्वविरतिरूपं, तच्च द्विधा–इत्वरं यावत्कथिकं च, तत्रेत्वरमाद्यान्त्यतीर्थकृत्तीर्थयोरुपस्थानां यावत्, ततश्छेदोपस्थापनीयचारित्रभावेन तद्व्यपदेशाभावात्, यावत्कथिकं च तयोरेव मध्यमतीर्थकृत्तीर्थेषु विदेहेषु च उपस्थापनाया अभावेन तद्व्यपदेशस्य यावज्जीवमपि सम्भवात्, चः पूरणे, प्रथमं, तथा छेदः सातिचारस्य यतेर्निरतिचारस्य वा शिष्यकस्य तीर्थान्तरसम्बन्धिनो वा तीर्थान्तरं प्रतिपद्यमानस्य पूर्वपर्यायच्छेदरूपस्तद्युक्तोपस्थापना–महाव्रतारोपणरूपा यस्मिंस्तच्छेदोपस्थापनं भवेत् द्वितीयं, परिहारविशुद्धिकं तथेत्यानन्तर्ये छन्दोभङ्गभयाच्चैवमुपन्यस्तः, सूक्ष्मः–किट्टीकरणतः सम्परायः–लोभाख्यः कषायो यस्मिंस्तत् सूक्ष्मसम्परायं, तच्चोपशमक्ष-

पकश्रेण्योर्लभाणुवेदनसमये स्यात्, अकषाय-क्षपितोपशमितकषायावस्थाभावि यथाख्यात अर्हत्कथितस्वरूपानतिक्रमवत्, छद्मस्थस्य-उपशान्तक्षीणमोहाख्यगुणस्थानद्वयवर्त्तिनो जिनस्य वा-केवलिन सयोग्ययोगिगुणस्थानद्वयस्थस्य, वा समुच्चये, एतदनतरोक्त सामायिकादि, चयस्य-राशे प्रस्तावात्कर्मणा रिक्त-विरेक अभावस्त करोतीत्येवशील चयरिक्तकर चारित्र भवत्याख्यात, जिनादिमिरिति गम्यम् ॥ ३२ ३३ ॥ १०९२-१०९३ ॥

सम्प्रति तपश्चतुर्थकारणमाह—

तवो अ दुविहो वुत्तो, वाहिरब्भतरो तहा। वाहिरो छव्विहो वुत्तो, एवमब्भितरो तवो ॥ १०९४ ॥

तपाचारो ज्ञानादीना फलानि च

तपो द्विविधमुक्त-बाह्यमाभ्यन्तर च, तत्र बाह्य तप षड्विधमुक्त एवमिति यथा षड्विध बाह्यमाभ्यन्तर च तथा, तत्र बाह्य तप उक्तम् ॥ ३४ ॥ १०९४ ॥

आह एषा मुक्तिमार्गत्वे कस्य कतरो व्यापार ?-उच्यते—

नाणेण जाणई भावे, समत्तेण य सद्दहे।<br>
चरित्तेण निगिण्हाइ ( न गिण्हति० पा० ) तवेण परिसुज्झई ॥ १०९५ ॥

ज्ञानेन मत्यादिना जानाति, भावान्-जीवादीन्, दर्शनेन च श्रद्धत्ते, चारित्रेण निगृह्णाति-नादत्ते, कर्मेति गम्य, तपसा परिशुद्ध्यति-पुरोपचितकर्मक्षपणत शुद्धो भवति, अनेन मार्गस्य फल मोक्ष उक्त ॥ ३५ ॥ १०९५ ॥

अथ मोक्षफलभूतां गतिमाह—

खवित्ता पुव्वकम्माइं, संजमेण तवेण य । सव्वदुक्खप्पहीणट्ठा, पक्कमंति महेसिणो ॥ १०९६ ॥ त्तिबेमि ॥

॥ मुक्खमग्गगईयं ॥ २८ ॥

क्षपयित्वा—क्षयं नीत्वा संयमेन—चारित्रेण तपसा, चात् ज्ञानदर्शनाभ्यां च, ननु पूर्वं तपस एव कर्मक्षपणहेतुत्वमुक्तं, इह तु ज्ञानादीनामपीति कथं न विरोधः ?, उच्यते—तपसोऽप्येतत्पूर्वकस्यैव क्षपणहेतुत्वमिति ज्ञापनार्थमित्थमभिधानं, अत एव मोक्षमार्गत्वमपि चतुर्णामपि युक्तं स्यात्, ततश्च प्राकृतत्वात् प्रक्षीणानि सर्वदुःखानि यस्मिंस्तत्तथा तच्च सिद्धिक्षेत्रमेव तदर्थं यतन्ते तद्गामितया ये ते तथाविधाः प्रक्रामन्ति—गच्छन्ति, यद्वा प्रहीणानि प्रक्षीणानि वा सर्वदुःखानि, अर्थाश्च—प्रयोजनानि येषां ते तथाविधाः प्रक्रामन्ति सिद्धिमिति शेषः महर्षयः ॥ ३६ ॥ १०९६ ॥

॥ इति मोक्षमार्गगत्यध्ययनावचूरिः ॥ २८ ॥

॥ इति श्रीउत्तराध्ययने अष्टाविंशस्य मोक्षमार्गगत्यध्ययनस्य अवचूरिः समाप्ता ॥

मोक्षमार्गगत्याख्यमष्टाविंशमध्ययनम् २८

कर्मक्षयात् मुक्तिः

॥ २३१ ॥

# अथ एकोनत्रिंश सम्यक्त्वपराक्रमाध्ययनम् ।

अनन्तर ज्ञानादीनि मुक्तिमार्गत्वेनोक्तानि, तानि च सवेगादिमूलानि, अकर्मतावसानानि च तथा भवन्तीति तानीहोच्यते, यद्वा मोक्षमार्गगतेरप्रमाद एव प्रधानोपायो, ज्ञानादीनामपि तत्पूर्वकत्वादिति स एव वर्ण्यते, अथवाऽनन्तर मोक्षमार्गगतिरुक्ता, सा च वीतरागत्वपूर्विकेति यथा तत्स्यात्तथा अनेनोच्यते—

सुअं मे आउसंतेण भगवया एवमक्खायं–इह खलु सम्मत्तपरक्कमे नामऽज्झयणे समणेण भगवया महावीरेण कासवेण पवेइए जं सम्मं सद्दहित्ता पत्तियाइत्ता रोयइत्ता फासइत्ता पालइत्ता तीरइत्ता किट्टइत्ता सोहइत्ता आराहइत्ता आणाए अणुपालइत्ता बहवे जीवा सिज्झंति बुज्झंति मुच्चंति परिनिव्वायंति सव्वदुक्खाणमंतं करेंति । सू० १३ । सम्यक्त्व पराक्रमाध्ययनोपक्रम

श्रुत मे–मया आयुष्मन्निति शिष्यामन्त्रण, एतच्च सुधर्मस्वामी जम्बूस्वामिन प्रत्याह–तेन जगत्प्रसिद्धेन भगवता–समस्तैश्वर्यादिमता प्रक्रमात् महावीरेण एव–वक्ष्यमाणेन प्रकारेणाख्यात, तमेव प्रकारमाह–इह–जगति सिद्धान्ते वा खलु–निश्चित सम्यक्त्वमिति गुणगुणिनोरनन्यत्वात् सम्यक्त्वगुणान्वितो जीवस्तस्य सम्यक्त्वे सति पराक्रम –उत्तरोत्तरगुणप्रतिपत्त्या कर्मारिजयसामर्थ्यलक्षणो वर्ण्यते अस्मिन्निति सम्यक्त्वपराक्रम नामाध्ययनमस्तीति गम्य, तच्च केन प्रणीतमित्याह–श्रमणेन–श्रामण्यमनुचरता

महावीरेण काश्यपेन प्रवेदितं, स्वतः प्रविदितमेव भगवता ममेदमाख्यातमिति भावः, अनेन वक्तृद्वारेण प्रस्तुताध्ययनस्य माहात्म्यमाह, सम्प्रति फलद्वारेणाह–यदध्ययनं सम्यक्श्रद्धाय–सूत्रार्थोभयरूपं सामान्येन प्रतिपद्य प्रतीत्य–उक्तरूपमेव विशेषत इत्थमेवेति निश्चित्य, यद्वा संवेगादिजनितफलानुभवलक्षणेन प्रत्ययेन प्रतीतिपथमवतार्य, रोचयित्वा–तदुक्तार्थानुष्ठानविषयं तदध्ययनविषयं वा अभिलाषमात्मन उत्पाद्य, सम्भवति हि क्वचिद्गुणवत्तया अवधारितेऽपि कदाचिदरुचिरित्येवमभिधानं, तदुक्तानुष्ठानतः स्पृष्ट्वा, पालयित्वा–तद्विहितानुष्ठानस्यातीचाररक्षणेन, तीरयित्वा–तदुक्तानुष्ठानं पारं नीत्वा कीर्त्तयित्वा–स्वाध्यायविधानतः संशुध्य शोधयित्वा–तदुक्तानुष्ठानस्य तत्तद्गुणस्थानावाप्तित उत्तरोत्तरशुद्धिप्रापणेन आराध्य–यथावदुत्सर्गाप्वादकुशलतया यावज्जीवं तदर्थासेवनेन, एतत्सर्वं स्वमनीषिकरणेऽपि स्यादत आह–आज्ञया–गुरुनियोगात्मिकया अनुपाल्य–सततमासेव्य, यद्वा स्पृष्ट्वा योगत्रिकेण, तत्र मनसा–सूत्रार्थोभयचिन्तनेन, वचसा–वाचनादिना, कायेन भङ्गकरचनादिना, एवं पालनाराधनयोरपि योगत्रयं वाच्यं, पालयित्वा–परावर्त्तनादिभिरभिरक्ष्य, तीरयित्वा–अध्ययनादिना परिसमाप्य, कीर्त्तयित्वा–गुरोर्विनयपूर्वकमिदमित्थं मया अधीतमिति निवेद्य, शोधयित्वा–गुरुवदनुभाषणादिभिः शुद्धं विधाय, आराध्य–उत्सूत्रप्ररूपणादिपरिहारेणाबाधित्वा, शेषं प्राग्वत्, नवरं–आज्ञयेति जिनाज्ञया, उक्तं "हि–फासिअ जोगतिएणं पालिअमविराहिअं च एमेव। तीरिअमंतं पाविअ किट्टिअ गुरुकहण जिणमाणा ॥ १॥" एवं च कृत्वा किमित्याह–बहवः–अनेके जीवाः सिद्ध्यन्ति इहैवागमसिद्धत्वादिना बुद्ध्यन्ते–घातिकर्मक्षयेण मुच्यन्ते–भवोपग्राहिकर्मचतुष्टयेन, ततश्च परिनिर्वान्ति–कर्मदावानलोपशमेन, अत एव दुःखानां–शारीरमानसानामन्तं कुर्वन्ति मुक्तिपदप्राप्त्या । १ । १३ ।



सम्यक्त्व-पराक्रमाध्ययनोपक्रमः

अथाध्ययनार्थमाह—

तस्स णं अयमट्ठे एवमाहिज्जइ, तजहा—संवेगे १ निव्वेए २ धम्मसद्धा ३ गुरुसाहम्मियसुस्सूसणया ४ आलोयणया ५ निंदणया ६ गरिहणया ७ सामाइए ८ चउवीसत्थए ९ वंदणए १० पडिक्कमणे ११ काउस्सग्गे १२ पच्चक्खाणे १३ थयथुइमंगले १४ कालपडिलेहणया १५ पायच्छित्तकरणे १६ खमावणया १७ सज्झाए १८ वायणया १९ परिपुच्छणया २० परियट्टणया २१ अणुप्पेहा २२ धम्मकहा २३ सुयस्स आराहणया २४ एगग्गमणसंनिवेसणया २५ संजमे २६ तवे २७ वोदाणे २८ सुहसाए २९ अप्पडिबद्धया ३० विवित्त-सयणासणसेवणया ३१ विणियट्टणया ३२ संभोगपच्चक्खाणे ३३ उवहिपच्चक्खाणे ३४ आहारपच्चक्खाणे ३५ कसायपच्चक्खाणे ३६ जोगपच्चक्खाणे ३७ सरीरपच्चक्खाणे ३८ सहायपच्चक्खाणे ३९ भत्तपच्चक्खाणे ४० सब्भावपच्चक्खाणे ४१ पडिरूवया ४२ वेयावच्चे ४३ सव्वगुणसंपुण्णया ४४ वीयरागया ४५ खंती ४६ मुत्ती ४७ मद्दवे ४८ अज्जवे ४९ भावसच्चे ५० करणसच्चे ५१ जोगसच्चे ५२ मणगुत्तया ५३ वयगुत्तया ५४ कायगुत्तया ५५ मणसमाधारणया ५६ वयसमाधारणया ५७ कायसमाधारणया ५८ नाणसंपन्नया ५९ दंसणसंपन्नया ६० चरित्तसंपन्नया ६१ सोइंदियनिग्गहे ६२ चक्खिंदियनिग्गहे ६३ घाणिंदियनिग्गहे ६४ जिब्भिंदियनिग्गहे ६५ फासिंदियनिग्गहे ६६ कोहविजए ६७ माणविजए ६८ मायाविजए ६९ लोभविजए ७० पिज्जदोसमिच्छाद-सणविजए ७१ सेलेसी ७२ अकम्मया ७३ ( द्वाराणि )। सू० १४।

सम्यक्त्व-पराक्रमे संवेगादीनि द्वाराणि

तस्य सम्यक्त्वपराक्रमाध्ययनस्य, णमिति वाक्यालङ्कारे, अयं—अनन्तरमेव वक्ष्यमाणोऽर्थ अभिधेयं, एवं अमुना प्रकारेणाऽऽख्यायते—कथ्यते, महावीरेणेति गम्यं, तद्यथेति वक्ष्यमाणतदर्थोपन्यासार्थः, संवेगो १ निर्वेदो २ धर्मश्रद्धा ३ साधर्मिकगुरुशुश्रूषणं आर्षत्वाच्चेहोत्तरत्र चान्यथा पाठः ४ आलोचना ५ निंदा ६ गर्हा ७ सामायिकं ८ चतुर्विंशतिस्तवो ९ वन्दनं १० प्रतिक्रमणं ११ कायोत्सर्गः १२ प्रत्याख्यानं १३ स्तवस्तुतिमङ्गलं १४ कालप्रत्युपेक्षणा १५ प्रायश्चित्तकरणं १६ क्षमणा १७ स्वाध्यायो १८ वाचना १९ परिप्रच्छना २० परावर्त्तना २१ अनुप्रेक्षा २२ धर्मकथा २३ श्रुतस्याराधना २४ एकाग्रमनःसंनिवेशना २५ संयमः २६ तपो २७ व्यवदानं २८ सुखशाता २९ अप्रतिबद्धता ३० विविक्तशयनासनसेवना ३१ विनिवर्त्तना ३२ संभोगप्रत्याख्यानं ३३ उपधिप्रत्याख्यानं ३४ आहारप्रत्याख्यानं ३५ कषायप्रत्याख्यानं ३६ योगप्रत्याख्यानं ३७ शरीरप्रत्याख्यानं ३८ सहायप्रत्याख्यानं ३९ भक्तप्रत्याख्यानं ४० सद्भावप्रत्याख्यानं ४१ प्रतिरूपता ४२ वैयावृत्त्यं ४३ सर्वगुणसंपूर्णता ४४ वीतरागता ४५ क्षान्तिः ४६ मुक्तिः ४७ आर्जवं ४८ मार्दवं ४९ भावसत्यं ५० करणसत्यं ५१ योगसत्यं ५२ मनोगुप्तता ५३ वाग्गुप्तता ५४ कायगुप्तता ५५ मनःसमाधारणा ५६ वचःसमाधारणा ५७ कायसमाधारणा ५८ ज्ञानसम्पन्नता ५९ दर्शनसम्पन्नता ६० चारित्रसम्पन्नता ६१ श्रोत्रेन्द्रियनिग्रहः ६२ चक्षुरिन्द्रियनिग्रहः ६३ घ्राणेन्द्रियनिग्रहः ६४ जिह्वेन्द्रियनिग्रहः ६५ स्पर्शनेन्द्रियनिग्रहः ६६ क्रोधविजयः ६७ मानविजयः ६८ मायाविजयः ६९ लोभविजयः ७० प्रेमद्वेषमिथ्यादर्शनविजयः ७१ शैलेशी ७२ अकर्मता ७३ इत्यक्षरसंस्कारः । २ । १४ ।

सम्यक्त्व-पराक्रमे सवेगादीनि द्वाराणि

साम्प्रतमिदमेव प्रतिपद फलोपदर्शनद्वारेण व्याचिख्यासु सूत्रकार आह—

सवेगेण भते ! जीवे कि जणयइ ?, सवेगेण अणुत्तर धम्मसद्ध जणयइ, अणुत्तराए धम्मसद्धाए सवेग हव्वमागच्छइ, अणताणुबन्धिकोहमाणमायालोभे खवेइ, (प्र० नव च) कम्म न बधइ, तप्पच्चइय च मिच्छत्त विसोहिं काऊण दसणाराहए भवइ, दसणविसोहीए ण विसुद्धाए अत्थेगइया तेणेव ण भवग्गहणेण सिज्झति बुज्झति विमुचति परिनिव्वायति सव्वदुक्खाणमत करेंति, सोहीए य ण विसुद्धाए तच्च पुणो भवग्गहण नाइक्कमति (१)। सू० १५।

सवेगेणेत्यादि त्रिसप्ततिसूत्राणि, सर्वस्य प्रयासस्य मुक्तिरेव फल, तत्र च प्रवृत्तिरभिलाषपूर्विका, तद्रूपश्च सवेग इत्यादौ तमाह—सवेग —मुक्त्यभिलापस्तेन हे भदन्त—पूज्य !, जीव किं जनयति ?—कतर गुणमुत्पादयतीति शिष्यप्रश्न , प्रज्ञापक प्रतिवचनमाह—सवेगेनानुत्तरा—प्रधाना धर्मे—श्रुतधर्मादौ श्रद्धा—तत्करणाभिलापरूपा ता धर्मश्रद्धा जनयति, तयाऽपि किमित्याह—अनुत्तरया धर्मश्रद्धया सवेग तमेवार्थाद्विशिष्टतर हव्वति—शीघ्र आगच्छन्ति, तद्व्यतिरेकेण हि विषयाद्यभिलाषतो न तथाऽस्यागमन अनुत्तरधर्मश्रद्धाया त्वन्यत्र निरभिष्वङ्गतया नान्यथात्वसम्भव , ततोऽपि किमित्याह—अनन्तानुबन्ध्यादिक्रोधमानमायालोभान् क्षपयति, तथा च कर्म प्रस्तावात् अशुभ न बध्नाति न श्लेषयति, एवमपि को गुण इत्याह—स—कषायक्षय प्रत्ययो—निमित्त यस्या सा तत्प्रत्यया सैव तत्प्रत्ययिका ता, च कर्मानन्धकत्वापेक्षया समुच्चये, मिथ्यात्वस्य विशोधन विशुद्धि —सर्वथा क्षयो मिथ्यात्वविशुद्धिस्ता कृत्वा दर्शनस्य—प्रस्तावात्क्षायिकस्य सम्यक्त्वस्याराधको—निरतिचारपालनाकृत् दर्शनाराधको भवति,

तथाऽपि किमित्याह–दर्शनशुद्ध्या विशुद्ध्या–अत्यन्तनिर्मलया अस्ति–विद्यते एककः कश्चित्तथाविधो भव्यस्तेनैव भवग्रहणेन–जन्मोपादानेन सिद्ध्यति, कोऽर्थः ?–यस्मिन्नेव भवे दर्शनस्य तथाविधा शुद्धिस्तत्रैव भवे मुक्तिं गच्छति, यथा मरुदेवी–ऋषभस्वामिमाता, यस्तु न तेनैव सिद्ध्यति स किमित्याह–शुद्ध्या च प्रक्रमात् दर्शनस्य विशुद्ध्या तृतीयं पुनर्भवग्रहणं–अन्यजन्मोपादानात्मकं नातिक्रामति–नातिवर्त्तते, अवश्यं तृतीयभवे सिद्ध्यतीत्यर्थः, उत्कृष्टदर्शनाराधकापेक्षयैतत् (१)। ३। १५।

संवेगाच्चावश्यंभावी निर्वेद इति तमाह—

निव्वेएणं भंते ! जीवे किं जणयइ ?, निव्वेएणं दिव्वमाणुस्सतिरिच्छिएसु कामभोएसु निव्वेयं हव्वमागच्छइ सव्वविसएसु विरज्जइ, सव्वविसएसु विरज्जमाणे आरंभपरिच्चायं करेइ, आरंभ(प्र० परिग्गह)परिच्चायं करेमाणे संसारमग्गं वुच्छिंदइ सिद्धिमग्गपडिवन्ने य हवइ (२)। सू० १६।

अत आरभ्य सर्वत्र सुगमत्वात् न प्रश्नव्याख्या, निर्वेदेन–सामान्यतः संसारविरागेण कदासौ त्याज्य इत्येवंरूपेण दिव्यमानुषतैरश्चेषु सूत्रत्वात् इकप्रत्ययो, यथासम्भवं देवादिसम्बन्धिषु कामभोगेषु निर्वेदं हव्वं–शीघ्रं आगच्छन्ति यथा अलमेतैरनर्थहेतुभिरिति, तथा च सर्वविषयेषु विरज्यते–अशेषशब्दादिविषयं विरागमाप्नोति, सर्वविषयेषु विरज्यमानश्च आरम्भः–प्राण्युपमर्दको व्यापारस्तत्परित्यागं करोति, विषयार्थत्वात्सर्वारम्भाणां, तत्परित्यागं कुर्वन् संसारमार्गं मिथ्यात्वविरत्यादिरूपं व्यवच्छिनत्ति, तत्त्यागत एव तत्त्वत आरम्भपरित्यागसम्भवात्, यद्व्यवच्छित्तौ च सुप्राप एव सिद्धिमार्गः सम्यग्दर्शनादिरिति सिद्धिमार्गप्रतिपन्नश्च भवति (२)। ४। १६।

सत्यपि निर्वेदे धर्मश्रद्धैव च सकलकल्याणनिबन्धनमिति तामाह—

धम्मसद्धाए ण भंते ! जीवे किं जणयइ ?, धम्म० सायासुक्खेसु रज्जमाणे विरज्जइ अगारधम्मं च णं चयइ, अणगारिए णं जीवे सारीरमाणसाणं दुक्खाणं छेयणभेयणसंजोगाईणं वुच्छेयं करेइ अव्वाबाहं च णं सुहं निव्वत्तेइ (३)। सू० १७।

धर्मश्रद्धया—धर्माभिलाषेण सात—सातवेदनीयं तज्जनितानि सौख्यानि सातसौख्यानि, मध्यमपदलोपी समासः, तेषु वैषयिकसुखेष्वित्यर्थः रज्यमानः—पूर्वं रागं कुर्वन् विरज्यते—विरक्तिं गच्छति, आगारधर्मं—गृहाचारं गार्हस्थ्यमित्यर्थः, चशब्द इह वाक्यालङ्कारे, त्यजति—परिहरति, तदत्यागश्च वैषयिकसुखानुरागहेतुत्वात्, ततश्च प्राकृतत्वात् अनगारी—यतिः सन् जीवः शारीरमानसानां दुःखानां, किंरूपाणां ? छेदन—खड्गादिना द्विधाकरणं, भेदन—कुन्तादिना विदारणं, आदेरिहापि सम्बन्धात्ताडनादयः, ततः छेदनभेदनादीनां शारीरदुःखानां संयोगः—प्रस्तावात् अनिष्टसम्बन्धः, आदिशब्दादिष्टवियोगादिसङ्ग्रहः, ततः संयोगादीनां मानसदुःखानां विशेषेण—पुनरसम्भवरूपेण उच्छेदः—अभावो व्युच्छेदस्तं करोति, तद्धेतुकर्मोच्छेदनेनेति भावः, अत एवानाबाधं—गतसर्वपीडं मौक्षमित्यर्थः, च पुनरर्थे भिन्नक्रमः, ततः सुखं पुनर्निर्वर्त्तयति—जनयति, पूर्वं संवेगफलोक्तिप्रसङ्गेन धर्मश्रद्धया फलोक्तिः, इह तु स्वातन्त्र्येणेत्यपौनरुक्त्यं (२)। ५। १७।

अनया चावश्यं गुरुशुश्रूषणं कार्यमिति तदाह—

गुरुसाहम्मियसुस्सूसणयाए णं भंते ! जीवे किं जणेइ ?, गुरु० विणयपडिवत्तिं जणेइ, विणयपडिव

(प्र०न्नयाए) णं जीवे अणच्चासायणसीले नेरइयतिरिक्खजोणियमणुस्सदेवदुग्गईओ निरुंभइ, वण्णसंजलणभत्ति-बहुमाणयाए माणुस्सदेवसुग्गइओ निबंधइ, सिद्धिसुगइं च विसोहेइ, पसत्थाइं च णं विणयमूलाइं सव्वकज्जाइं साहइ, अन्ने य बहवे जीवे विणइत्ता हवइ (४)। सू० १८।

चतुर्थं द्वारम्

साधर्मिकगुरूणां शुश्रूषणं–पर्युपासनं तेन विनयप्रतिपत्तिं–उचितकृत्यकरणाङ्गीकाररूपां जनयति, सूत्रत्वात् प्रतिपन्नः–अङ्गीकृतो विनयो येन प्रतिपन्नविनयः, चः पुनर्जीवोऽतीवाऽऽ–सम्यक्त्वादिलाभं शातयति–विनाशयतीत्यत्याशातनाशीलो–न तथा अनत्याशातनाशीलो गुरुपरिवादादिपरिहारकृदित्यर्थः, एवंविधश्च नैरयिकतिर्यग्योनिके च प्रतीते मनुष्यदेवदुर्गती च–म्लेच्छकिल्बिषित्वादिलक्षणे नैरयिकतिर्यग्योनिकमनुष्यदेवदुर्गतयो निरुणद्धि–निषेधति, तद्धेतोरत्याशातनाया अभावेन तत्रागमनात्, तत्र वर्णः–श्लाघा तेन संज्वलनं–गुणोद्भासनं वर्णसंज्वलनं भक्तिः अञ्जलिप्रग्राहिका बहुमानः–आन्तरप्रीतिविशेषः, एषां द्वन्द्वे भावप्रत्यये च वर्णसंज्वलनभक्तिबहुमानता तया–प्रक्रमात् गुरूणां विनयप्रतिपत्तिरूपया मनुष्यदेवसुगती सुकुलैश्वर्येन्द्रत्वादि बध्नाति, तत्प्रायोग्यकर्मबन्धनेनेति भावः, सिद्धिसुगतिं च विशोधयति तन्मार्गभूतसम्यग्दर्शनादिविशोधनेन, प्रशस्तानि च–प्रशंसास्पदानि विनयमूलादि–विनयहेतुकानि सर्वकार्याणीह श्रुतज्ञानादीनि परत्र च मुक्तिं साधयति–निष्पादयति, तत्किमेवं स्वार्थसाधक एवासावित्याह–अन्यांश्च बहून् जीवान् विनेता–विनयं ग्राहयिता भवति, स्वयं सुस्थितस्योपादेयवचनत्वात्, तथा च विनयमूलत्वादशेषश्रेयसां, तत्प्रापणेन परार्थसाधकोऽप्यसौ स्यात् (४)। ६। १८।

गुरुशुश्रूषा कुर्वतोऽप्यतीचारसम्भवे आलोचनात एवेष्टफलासिरिति तामाह—

आलोयणाए ण भंते ! जीवे किं जणेइ ?, २ मायानियाणमिच्छादरिसणसल्लाण मुक्खमग्गविग्घाण अणंत संसारवद्धणाण उद्धरण करेइ उज्जुभाव च जणेइ, उज्जुभाव पडिवन्ने य ण जीवे अमाई इत्थीवेय नपुसगवेय च न बन्धइ, पुव्वबद्ध च ण निज्जरइ (५)। सू० १९।

आङिति सर्वदोषाभिव्याप्त्याऽऽलोचना—आत्मदोषाणां गुरुपुरतः प्रकाशना आलोचना, तथा माया—शाठ्यं निदानं—ममातस्तप प्रभृत्यादेरिदं स्यादिति प्रार्थनात्मकं मिथ्यादर्शनं—सांशयिकादि एतानि च मायादीनि शल्यानीव शल्यानि च मायानिदानमिथ्यादर्शनशल्यानि, यथा हि तोमरादिशल्यानि तत्कालदु खदायीन्येव मायादीन्यपीत्युक्तं तेषां मोक्षमार्गविघ्नाना—पापानुबन्धिकर्महेतुत्वेन मुक्त्यन्तरायाणां, तथा अनन्तं ससारं वर्द्धयन्ति—वृद्धिं नयन्तीति तेषां अनन्तससारवर्द्धनानां उद्धरणं—अपनयनं करोति, तदुद्धरणतश्च ऋजुभावं चार्जवं जनयति, प्रतिपन्नर्जुभावश्च जीवोऽमायी—मायारहितः सन् पुंस्त्वहेतुत्वादमायित्वस्य सूत्रत्वात् बिन्दुलोपे स्त्रीवेदं नपुसकवेदं च न बध्नाति, पूर्वबद्धं च तदेव द्वयं सर्वकर्म वा निर्जरयति—क्षपयति, तथा च मुक्तिपदमाप्नोतीत्यभिप्राय, उक्तं हि—"उद्धियदडो साहू अचिरेण उवेइ सासय ठाणं। सोवि अणुद्धियदडो ससारपवड्ढओ होइ ॥१॥" इति (५)।७।१९।

आलोचना च दुष्कृतनिन्दावत एव सफला स्यादिति तामाह—

निंदणयाए ण भंते ! जीवे किं जणेइ ?, २ पच्छाणुतावं जणइ, पच्छाणुतावेण विरज्जमाणे करणगुणसेढिं पडिवज्जइ, करणगुणसेढिपडिवन्ने य अणगारे मोहणिज्जं कम्म उग्घाएइ (६)। सू० २०।

आर्षत्वात् निन्दनं—आत्मनैवात्मदोषपरिभावनं तेन निन्दनेन, पश्चादनुतापं—हा कष्टमनुष्ठितमिदं मयेत्यादिरूपं जनयति, ततश्च पश्चानुतापेन विरज्यमानो—वैराग्यं गच्छन् करणेन—अपूर्वकरणेन गुणहेतुका श्रेणिः करणगुणश्रेणिः, सा चोपरितनस्थितेर्मोहनीयादिकर्मदलिकान्युपादायोपदाय उदयसमयात्प्रभृतिद्वितीयादिसमयेषु असङ्ख्यातगुणपुद्गलप्रक्षेपरूपान्तर्मौहूर्त्तिकी, उक्तं हि—"उवरिमठिईइ दलिअं हिट्ठिमठाणेसु कुणइ गुणसेढी । गुणसंकमकरणं पुण असुहाउ सुहंमि पक्खिवइ ॥ १ ॥" उपलक्षणत्वात् स्थितिघातरसघातगुणसङ्क्रमबन्धाश्च विशिष्टाः, अथवा करणगुणेन—अपूर्वकरणादिमाहात्म्येन श्रेणिः करणगुणश्रेणिः प्रक्रमात् क्षपकश्रेणिरेव तां, यद्वा करणेन—पिण्डविशुद्ध्यादिनोपलक्षिता गुणानां—ज्ञानादीनां श्रेणिः—उत्तरोत्तरगुणपरंपरारूपा करणगुणश्रेणिस्तां प्रतिपद्यते, प्रतिपन्नकरणगुणश्रेणिकश्चानगारो मोहनीयं—दर्शनमोहनीयादि कर्म उद्घातयति—क्षपयति, तत्क्षपणे च मुक्तिप्राप्तिरित्यर्थत उक्तैव स्यात् ( ६ ) । ८ । २० ।

कश्चिदात्मनोऽत्यन्तदुष्टतां विभावयन् न निन्दामात्रेणाऽऽस्ते, किं तु गर्हामपि कुर्यात् इति तामाह—

गरिहणाए णं भंते ! जीवे किं जणेइ ?, २ अपुरक्कारं जणेइ, अपुरक्कारगए णं जीवे अप्पसत्थेहिंतो जोगेहिंतो नियत्तइ पसत्थेहि य पडिवज्जइ, पसत्थजोगपडिवन्ने य णं अणगारे अणंतघाई पज्जवे खवेइ (७) । सू० २१ ।

गर्हणेन—परसमक्षं स्वदोषोद्भावनेन पुरस्करणं पुरस्कारो—गुणवानयमिति गौरवाध्यारोपो न तथा अपुरस्कारं—अवज्ञास्पदत्वं जनयत्यात्मन इति गम्यं, तथा च अपुरस्कारं गतः—प्राप्तोऽपुरस्कारगतः सर्वत्रावज्ञास्पदीभूतो जीवः कदाचित्कदध्यवसायोत्प-

तावपि तद्भीत्यैव अप्रशस्तेभ्य कर्मबन्धहेतुभ्यो योगेभ्यो निवर्त्तते, तान् प्रतिपद्यते प्रशस्तांश्च योगानिति गम्य, प्रतिपद्यते, प्रतिपन्नप्रशस्तयोगश्चानगार , अनन्तविषयतया अनन्ते ज्ञानदर्शने हतु शील येषां ते अनन्तघातिनस्तत् पर्यवान्–प्रसावात् ज्ञानावरणादिकर्मणस्तद्धातित्वलक्षणान् परिणतिविशेषान् क्षपयति, पर्यवाभिधान च तद्रूपतयैव द्रव्यस्य विनाश इति ख्यापनार्थं, उपलक्षण चैतत् मुक्तिप्राप्तेस्तदर्थत्वात् सर्वप्रयासस्य, एवमनुक्ताऽपि सर्वत्र मुक्तिप्राप्तिरेव सुफलत्वेन द्रष्टव्या (७)। ९। २१।

आलोचनादीनि च सामायिकवत एव तत्त्वतो भवन्तीति तदुच्यते—

सामाइएण भते ! जीवे किं जणेइ ?, २ सावज्जजोगविरइ जणयइ (८)। सू० २२।

सामायिकेन सावद्या –कर्महेतवो योगा –व्यापारास्तेभ्यो विरति –उपरम सावद्ययोगविरतिस्ता जनयति, तद्विरतिसहितस्यैव सामायिकसभवात्, न चैव तुल्यकालत्वेनानयो कार्यकारणभावासम्भव इति वाच्य, केषुचित्–तुल्यकालेष्वपि वृक्षच्छायादिवत् कार्यकारणभावाद् एव सर्वत्र भावनीयम् (८)। १०। २२।

सामायिक च प्रतिपत्तुकामेन तत्प्रणेतार स्तोतव्या , ते च तत्त्वतस्तीर्थकृत एवेति तत्स्तवमाह—

चउवीसत्थएण भते ! जीवे कि जणेइ ?, २ दसणविसोहिं जणइ (९)। सू० २३।

चतुर्विंशतिस्तवेनैतदवसर्पिणीप्रभवतीर्थकृदुत्कीर्त्तनात्मकेन दर्शनस्य–सम्यक्त्वस्य विशुद्धि –तदुपघातिकर्मापगमतो निर्मलीभवन दर्शनविशुद्धिस्तां जनयति (९)। ११। २३।

स्तुत्वापि तीर्थकरान् गुरुवन्दनकपूर्विकैव सामायिकप्रतिपत्तिरिति तदाह—

वंदणएणं भंते ! जीवे किं जणेइ ?, २ नीयागोयं कम्मं खवेइ उच्चागोयं निबंधइ सोहग्गं च णं अप्पडिहयं आणाफलं निवत्तेइ दाहिणभावं च णं जणेइ (१०)। सू० २४।

वन्दनकेन–आचार्याद्युचितप्रतिपत्तिरूपेण नीचैर्गोत्रं–अधमकुलोत्पत्तिनिबन्धनं कर्म क्षपयति, उच्चैर्गोत्रं–एतद्विपरीतरूपं निबध्नाति, सौभाग्यं च–सर्वजनस्पृहणीयतारूपं अप्रतिहतं–सर्वत्रास्खलितं, अत एवाज्ञजनेन यथोचितवचनप्रतिपत्तिरूपा फलं–प्रयोजनमस्येति आज्ञाफलं–आज्ञासारं निर्वर्त्तयति–जनयति, तद्वतो हि प्राय आदेयकर्मणोऽप्युपचयसम्भवे आदेयवाक्यताऽपि सम्भवतीति, दक्षिणभावं च–अनुकूलभावं जनयति, लोकस्येति गम्यं, तन्माहात्म्यतोऽपि सर्वः सर्वावस्थासु अनुकूल एव स्यात् (१०)। १२। २४।

एतद्गुणस्थितेनापि मध्यमार्हतां तीर्थेषु स्खलितसम्भवे पूर्वपश्चिमयोस्तु तदभावेऽपि प्रतिक्रमणं कार्यमिति तदाह—

पडिक्कमणेण भंते ! जीवे किं जणेइ ? २ वयछिद्दाइं पिहेइ, पिहियवयछिद्दे पुण जीवे निरुद्धासवे असबलचरित्ते अट्ठसु पवयणमायासु उवउत्ते अपुहु(प्र० पम)त्ते सुप्पणिहिए(यइंदिए पा०) विहरइ (११)। सू० २५।

प्रतिक्रमणेन–अपराधेभ्यः प्रतीपनिवर्त्तनात्मकेन व्रतानां–प्राणातिपातनिवृत्तादीनां छिद्राणि–अतीचाररूपाणि विवराणि–व्रतच्छिद्राणि पिदधाति–स्थगयति, अपनयतीत्यर्थः पिहितव्रतच्छिद्रः पुनर्जीवो निरुद्धास्रवः, अत एवाशबलं–शबलस्थानैरकर्वुरीकृतं चरित्रं यस्य स तथा, तथा अष्टसु प्रवचनमातृषु उपयुक्तः–अवधानवान्, तत एवाविद्यमानं पृथक्त्वं–प्रस्तावात् संयं-

योगेभ्योऽविशुद्धरूप यस्यासावपृथक्त्व सदा सयमयोगवान्, तथा सुप्रणिहित–सुष्ठु सयमेन प्रणिधानवान्, विहरति–सयमाध्वनि याति ( ११ )। १३। २५।

अत्र चातीचारशुद्धिनिमित्त कायोत्सर्ग कार्य इति तमाह—

काउस्सग्गेण भते ! जीवे कि जणेइ ?, २ तीयपडुपन्न पायच्छित्त विसोहेइ, विसुद्धपायच्छित्ते य जीवे निव्वुयहियए ओहरियभरुव्व भारवहे धम्म( प्र० पसत्थ )ज्झाणोवगए ( पसत्थज्झाणज्झाई पा० ) सुह सुहेण विहरइ ( १२ )। सू० २३।

कायस्योत्सर्ग –आगमोक्तनीत्या त्याग कायोत्सर्गस्तेन, अतीत चेह चिरकालभावित्वेन प्रत्युत्पन्नमिव प्रत्युत्पन्न प्रायश्चित्तार्ह मतीचार विशोधयति तदर्जितपापापनयनतोऽपनयति, विशुद्धप्रायश्चित्तश्च जीव , निर्वृत–स्वस्थीभूत हृदय–मनोऽस्येति निर्वृत्त-हृदय , क इव ?, इत्यस्य भिन्नक्रमत्वात् अपहृत –अपसारितो भरो–भारो यस्मात् स अपहृतभारो भारवहो–वाहीकादि स इव, भारप्राया हि अतीचारास्ततस्तदपनयने अपहृतभरभारवह इव निर्वृतहृदयो भवतीति भाव , स च प्रशस्तध्यानोपगत –सुख सुखेन सुखपरम्परावाप्त्या विहरति–इह परलोकयोरवतिष्ठते, इहैव जीवन्मुक्त्यवाप्तिरिति भाव ( १२ )। १४। २६।

एवमप्यशुद्ध्यमानेन प्रत्याख्यान विधेयमिति तदाह—

पच्चक्खाणेण भते ! जीवे कि जणेइ ?, २ आसवदाराइ निरुभइ ( १३ )। सू० २७।

प्रत्याख्यानेन—मूलोत्तरगुणप्रत्याख्यानरूपेण, आश्रवद्वाराणि निरुणद्धि, तन्निरोधहेतुत्वात्तस्य, उपलक्षणं चैतत्पुरोपचित-कर्मक्षये, मुक्त्यङ्गत्वेन अस्यान्यत्रोक्तत्वात्, तथा चाह—"पच्चक्खाणमिनं सेविऊण भावेण जिणवरुदिट्ठं। पत्ता अणंतजीवा सासयसोक्खं लहुं मोक्खं ॥ १ ॥" ( १३ )। १५। २७।

अत्र चोत्तरगुणप्रत्याख्यानान्तर्भूतं नमस्कारसहितादि तद्ग्रहणानन्तरं यत्र सन्निहितानि चैत्यानि, तत्र तद्वन्दनं विधेय-मित्युक्तं प्राक्, तच्च न स्तुतिस्तवमङ्गलं विनेति तदाह—

थयथुइमंगलेणं भंते ! जीवे किं जणेइ ?, २ नाणदंसणचरित्तबोहिलाभं संजणइ, नाणदंसणचरित्तबोहि-लाभसंपन्ने णं जीवे अंतकिरियं कप्पविमाणोववत्तियं आराहणं आराहेइ (अणंतकिरियं अमाहणं आराहेति पा०) (१४)। सू० २८।

तत्र स्तवाः—देवेन्द्रस्तवादयः स्तुतयः—एकादिसप्तश्लोकान्ताः ततो, द्वन्द्वे स्तुतिस्तवाः, स्तुतिशब्दस्य त्त्यन्तत्वात्प्राग्निपाते प्राप्तेऽपि सूत्रे प्राकृतत्वात् व्यत्ययनिर्देशः, स्तुतिस्तवा एव मङ्गलं—भावमङ्गलरूपं स्तुतिस्तवमङ्गलं तेन, ज्ञानदर्शनचारित्रात्मिका बोधिर्ज्ञानं वा बोधिस्तस्य लाभं—संपूर्णजिनधर्मावाप्तिं जनयति ज्ञान०लाभसम्पन्नश्च, अन्तः—पर्यन्तो भवस्य कर्मणो वा तस्य क्रियाकरणमन्तक्रिया मुक्तिरित्यर्थः, ततश्चान्तक्रियाहेतुत्वादन्तक्रिया तां, अन्तक्रियाहेतुत्वं च—तद्भवेऽपि स्यादत आह—कल्पा—देवलोका विमानानि—ग्रैवेयकानुत्तरविमानरूपाणि तेषु उपपत्तिर्यस्यां सा कल्पविमानोपपत्तिका तां, कोऽर्थः ?—अनन्तरजन्मनि कल्पादिषु देवत्वावाप्तिफलां, परम्परया तु मुक्तिप्रापिकां, आराधनां—ज्ञानाद्याराधनात्मिकामाराधयति—साधयति (१४)। १६। २८।

अर्हद्वन्दनानन्तरं च काले स्वाध्यायः कालप्रत्युपेक्षणापूर्वं विधेय इति तदाह—

कालपडिलेहणाए णं भंते ! जीवे किं जणेइ ?, नाणावरणिज्जं कम्मं खवेइ ( १५ ) । सू० २९ ।

काल –प्रादोषिकादिस्तस्य प्रत्युपेक्षणा–आगमविधिना यथावन्निरूपणा ग्रहणप्रतिजागरणरूपा कालप्रत्युपेक्षणा तया ज्ञानावरणीय कर्म क्षपयति, यथावत्प्रवृत्त्या तथाविधशुभभावेनेति भाव ( १५ ) । १७ । २९ ।

कथञ्चिदकालपाठे च प्रायश्चित्त प्रतिपत्तव्यमिति तत्करणमाह—

पायच्छित्तकरणेण भंते ! जीवे किं जणेइ ?, पावकम्मविसोहिं जणेइ निरइयारे आवि भवइ सम्मं च णं पायच्छित्तं पडिवज्जमाणे मग्गं च मग्गफलं च विसोहेइ आयारं आयारफलं च आराहेइ,(१६)। सू० ३० ।

तत्र पापं छिनत्ति प्रायश्चित्तं विशोधयतीति निरुक्त्या वा प्रायश्चित्तं, उक्तं हि–"पावं छिंदइ जम्हा पायच्छित्तंति भण्णए तेण। पाएण वाऽवि चित्तं विसोहए तेण पच्छित्तं ॥ १॥" तच्चालोचनादि, तस्य करणं–विधानं प्रायश्चित्तकरणं तेन पापकर्मणां विशुद्धिः–भावः पापकर्मविशुद्धिं तां जनयति, निरतिचारश्चापि भवति, तेनैव ज्ञानाद्यतीचारविशोधनात्, सम्यक् प्रायश्चित्तं प्रतिपद्यमानो मार्गं इह ज्ञानप्राप्तिहेतुसम्यक्त्वं तं च तत्फलं च ज्ञानं विशोधयति–निर्मलीकुरुते, युगपदुत्पत्तावपि सम्यक्त्वस्य ज्ञानहेतुत्वं दीपप्रकाशवत्, यदागमः "कारणकज्जविभागो दीवपगासाण जुगवजम्मेवि । जुगवुप्पण्णंति तहा हेऊ नाणस्स सम्मत्तं ॥ १ ॥" ततश्चाचारं चारित्रं तत्फलं च मुक्तिरूपमाराधयति, विशोधनाराधनयोश्च सर्वत्र निरतिचारतैव हेतुरिति भावनीयम्(१६)॥१८॥३०।

पञ्चदश-षोडशद्वारे

प्रायश्चित्तकरणं च क्षमणावत एव स्यादतस्तमाह—

खमावणयाए णं भंते ! जीवे किं जणेइ ?, २ पल्हायणभावं जणेइ, पल्हायणभावमुवगए ( भावं जणयति पा० ) य सव्वपाणभूयजीवसत्तेसु मित्तीभावं उप्पाएइ, मित्तीभावमुवगए य जीवे भावविसोहिं काऊण निब्भए भवइ ( १७ )। सू० ३१।

क्षमणा—दुष्कृतानन्तरं क्षमितव्यमिदं ममेत्यादिरूपा तया, प्रह्लादनभावः—चित्तप्रसत्तिरूपः अभिप्रायस्तं जनयति. प्रह्लादनभावमुपगताश्च सर्वे च ते प्राणाश्च—द्वित्रिचतुरिन्द्रियाः भूताश्च—तरवः जीवाश्च—पञ्चेन्द्रियः सत्त्वाः—शेषजन्तवः सर्वप्राणभूतजीवसत्त्वाः, उक्तं हि—"प्राणा द्वित्रिचतुः प्रोक्ता, भूताश्च तरवः स्मृताः। जीवाः पञ्चेन्द्रिया ज्ञेयाः, शेषाः सत्त्वा इतीरिताः॥ १॥" तेषु मैत्रीभावं—परहितचिन्तालक्षणमुत्पादयति. ततो मैत्रीभावमुपगतश्चापि जीवो भावविशुद्धिं—रागद्वेषविगमरूपां कृत्वा निर्भय—इहपरलोकादिभयरहितो भवति. अशेषभयहेत्वभावादिति भावः ( १७ )। १९। ३१।

एवंविधगुणावस्थितेन स्वाध्याये यतितव्यमिति तमाह—

सज्झाएणं भंते ! जीवे किं जणेइ ?, २ नाणावरणिज्जं कम्मं खवेइ ( १८ )। सू० ३२।

स्वाध्यायेन ज्ञानावरणीयमुपलक्षणत्वात् शेषं च कर्म क्षपयन्ति, यत उक्तं—"कम्ममसंखिज्जभवं खवेइ अणुसमयमेव आउत्तो। अन्नयरंमिवि जोए सज्झायंमि य विसेसेणं॥ १॥" ( १८ )। २०। ३२।

सम्यक्त्वपराक्रमाध्ययनम् २९

समदृशाध्याद्वारे

अत्र च प्राग् वाचना कार्येति तामाह—

वायणाए णं भंते ! जीवे किं जणेइ ?, वा० निज्जरं जणेइ (×) सुअस्स य अणुसज्जणाए (×) अणासायणाए वट्टइ, सुयस्स य अणुसज्जणाए अणासायणाए वट्टमाणे तित्थधम्मं अवलंबइ, तित्थधम्ममवलंबमाणे महानिज्जराए (प्र० रे) महापज्जवसाणे हवइ (१९)। सू० ३३।

वक्ति शिष्यस्त प्रति गुरोः प्रयोजकभावो वाचना पाठनमित्यर्थस्तया निर्जरां—कर्मपरिशाटं जनयति, तथा श्रुतस्य—आगमस्य, चस्य भिन्नक्रमत्वात् अनाशातनायां वर्तते, तदकरणे हि अवज्ञातः श्रुतमाशातितं भवेत्, न तु तत्करणे इति, श्रुतस्यानाशातनायां वर्त्तमानः तीर्थमिह गणधरस्तस्य धर्मः—आचारः श्रुतप्रदानलक्षणस्तीर्थधर्मा, यद्वा तीर्थं—प्रवचनं श्रुतमित्यर्थः, तद्धर्मः—स्वाध्यायस्तम् अवलम्बमानः—आश्रयन् महती—बहुतरकर्मविषयत्वान्निर्जरा अस्येति महानिर्जरः, महत्—महाप्रमाणं अपर्यवसितत्वेन प्रशस्यं वा मुक्त्यवाप्त्या पर्यवसानं अन्तः कर्मणो वा भवस्य वा यस्य, चस्य गम्यत्वात् महापर्यवसानश्च भवति, मुक्तिः भाग् भवतीति हृदयम् (१९)। २१। ३३।

गृहीतवाचनेनापि सदा सूत्रार्थौ पुनः प्रष्टव्यमिति पुनः प्रच्छनावसर इति तामाह—

पडिपुच्छणाए णं भंते ! जीवे किं जणेइ ?, प० सुत्तत्थतदुभयाइं विसोहेइ, कंखामोहणिज्जं कम्मं वुच्छिंदेइ (२०)। सू० ३४।

तत्र च पूर्वं कथितस्य सूत्रादेः पुनः प्रच्छनं प्रतिप्रच्छनं तेन सूत्रार्थतदुभयानि विशोधयति–संशयादिमालिन्यापनयनेन विशुद्धानि कुरुते, तथा काङ्क्षा च–इदमित्थं च ममाध्येतुमुचितमित्यादिका वाञ्छा सैव मोहयतीति काङ्क्षामोहनीयं कर्म अनाभिग्रहिकमिथ्यात्वरूपं व्युच्छिनत्ति–विशेषेणापनयति ( २० )। २२ । ३४ ।

इत्थं विशोधितस्य सूत्रस्य मा भूत् विस्मरणमिति परावर्त्तनामाह—

परियट्टणयाए णं भंते ! जीवे किं जणेइ ?, २ वंजणाइं जणेइ वंजणलद्धिं च उप्पाएइ ( २१ )। सू० ३५।

सूत्रत्वात् परावर्त्तनं–गुणनं तया, व्यज्यते एभिरर्थ इति व्यञ्जनानि–अक्षराणि जनयति–उत्पादयति, तानि हि विगलितान्यपि गुणयतो झगित्युत्पतन्तीति उत्पादितान्युच्यन्ते, तथा तथाविधक्षयोपशमतो व्यञ्जनलब्धिं, चशब्दात् पदलब्धिं च–पदानुसारितालक्षणमुत्पादयति ( २१ )। २३ । ३५ ।



सूत्रवदर्थस्याविस्मरणार्थमनुप्रेक्षामाह—

**अणुप्पेहाए णं भंते ! जीवे किं जणेइ ?, २ आउयवज्जाओ सत्त कम्मपयडीओ घणियबंधणबद्धाओ सिढिलबंधणबद्धाओ पकरेइ, दीहकालट्ठिईयाओ हस्सकालट्ठिईयाओ पकरेइ, तिव्वाणुभावाओ मंदाणुभावाओ पकरेइ, बहुप्पएसग्गाओ अप्पपएसग्गाओ पकरेइ ( तो करेति पा० ), आउं च णं कम्मं सिय बंधइ सिय नो बंधइ, अस्सायावेयणिज्जं च णं कम्मं नो भुज्जो भुज्जो उवचिणइ ( सायावेयाणिज्जं )च णं कम्मं भुज्जो २ उवचिणाति पा० ) अणाइयं च णं अणवयग्गं दीहमद्धं चाउरंतसंसारकतारं खिप्पामेव वीइवयइ ( २२ )। सू० ३६।**

अनुप्रेक्षा–चिन्तनिका तया प्रकृष्टशुभभावोत्पत्तिनिबन्धनतया आयुष्कवर्जा –सप्तकर्मप्रकृती घणिअति–बाढ बन्धन–श्लेषण तेन बद्धा, निकाचिता इत्यर्थ , शिथिलबन्धनबद्धा –किञ्चिन्मुकुला , कोऽर्थ ?–अपवर्त्तनादिकरणयोग्याः प्रकरोति, तपोरूपत्वादस्य, तपसश्च निकाचितकर्मक्षपणेऽपि क्षमत्वात्, दीर्घकालावस्थितिका ह्रस्वकालस्थितिका प्रकरोति, शुभाध्यवसायवशात् स्थितिखण्डकापहारेणेति भाव , एतच्चैव सर्वकर्मणामपि स्थितेरशुभत्वाद् , यत उक्त–"सव्वासिं पि ठिईओ सुभासुभाणपि होइ असुभाओ । माणुस्सतिरिच्छदेवाऊअ च मुत्तूण सेसाण ॥ १ ॥" तीव्रानुभावा चतु स्थानिकरसत्वेन मन्दानुभावा त्रिस्थानिकरसत्वाद्यापादनेन प्रकरोति, इह चाशुभप्रकृतय एव गृह्यन्ते, शुभभावस्य शुभासु तीव्रानुभवे हेतुत्वात्, क्वचिदिदमपि दृश्यते बहुप्पएसग्गाओ अप्पपएसग्गाउ पकरेइत्ति, ननु केनाभिप्रायेणायुष्कवर्जा सप्तेत्यभिधान, शुभायुष एव सयतस्य सम्भवात्, तस्यैव चानुप्रेक्षा तात्त्विकी, न च शुभभावेन शुभप्रकृतीना शिथिलतादिकरण, सङ्क्लेशहेतुकत्वात् तस्या , आह–शुभायुर्बन्धोऽप्यस्या किं न फल ?, उच्यते, आयुष्क च कर्म स्यात् कदाचित् बध्नाति, स्यान्नो बध्नाति, तस्य त्रिभागादिशेषायुष्कतायामेव बन्धसम्भवात्, तस्य च कादाचित्कत्वेनाविवक्षितत्वात्, तद्भवतश्च कस्यचित् मुक्तिप्राप्तेस्तद्बन्धस्यानभिधानमिति भाव , तथा असातवेदनीय–शारीरादिदु खहेतु कर्म, चशब्दादन्याश्चाशुभप्रकृती नो–नैव भूयोभूय उपचिनोति–बध्नाति, भूयो भूयो ग्रहण त्वन्यतमप्रमादयत प्रमत्तसयतगुणस्थानवर्त्तितया तद्बन्धस्यापि सम्भवात्, अनादिक–आदेरसम्भवात्, अनवदग्–अनपगच्छत् अग्र–परिमाण यस्य सदावस्थितानन्तानन्तप्रमाणत्वेन सोऽनवदग्रोऽनन्त इत्यर्थ त, प्रवाहापेक्ष चैतत्, दीर्घाध्व–दीर्घ

कालं, दीर्घो वा तत्परिभ्रमणहेतुकर्मरूपो मार्गो यस्मिंस्तत्तथा तं दीर्घाध्वं, मोऽलाक्षणिकः, चत्वारः–चतुर्गतिलक्षणा अन्ता–अवयवा यस्मिंस्तत् चतुरन्तं, संसारकान्तारं, क्षिप्रमेव–शीघ्रमेव व्यतिव्रजति–विशेषेणातिक्रामति, मुक्तिमाप्नोतीति भावः (२२)।२४।३६।

एवमभ्यस्तश्रुतेन धर्मकथा कार्येति तामाह—

धम्मकहाए णं भंते! जीवे किं जणेइ?, २ निज्जरं जणेइ, धम्मकहाए णं पवयणं पभावेइ, पवयणपभावए णं जीवे आगमिसस्सभद्दत्ताए कम्मं निबंधइ (२३)। सू० ३७।

धर्मकथनया–व्याख्यानरूपया प्रवचनं प्रभावयति–प्रकाशयति, उक्तं हि–"पावयणी १ धम्मकही २ वाई ३ नेमित्तिओ ४ तवस्सी अ ५। विज्जा ६ सिद्धो अ ७ कवी ८ अट्ठेव पभावगा भणिआ ॥ १ ॥" आगमिष्यतीत्यागमः–आगामी कालस्तस्मिन् शश्वद्भद्रतया अनवरतकल्याणतयोपलक्षितं कर्म निबध्नाति, शुभानुबन्धि शुभमुपार्जयतीति भावः (२३)। २५। ३७।



इत्थं पञ्चविधस्वाध्यायरतेन श्रुतमाराधितं भवतीति तदाराधनोच्यते—

सुयस्स आराहणयाए णं भंते! जीवे किं जणेइ?, २ अन्नाणं खवेइ, न य संकिलिस्सइ (२४)। सू० ३८।



श्रुतस्याराधनया–सम्यगासेवनया अज्ञानं–अनवबोधं क्षपयति–अपनयति, विशिष्टतत्त्वबोधावाप्तेर्न च सङ्क्लिश्यते–नैव रागादिजनितसङ्क्लेशभाग् भवति, तद्वशतो नवनवसंवेगावाप्तेः, यदुक्तं–"जह २ सुअमोगाहइ अइसयरसपसरसंजुअमउव्वं। तह २ पल्हाइ मुणी नव २ संवेगसद्धाए॥ १ ॥" (२४)। २६। ३८।

श्रुताराधना चैकाग्रमन सनिवेशनावत एव भवत्यतस्तामाह—

एगग्गमणसनिवेसणाए ण भते ! जीवे कि जणेइ ?, २ चित्तनिरोह करेइ ( २७ ) । सू० ३९ ।

एकमग्र-प्रस्तावात् शुभमालम्बन यस्येत्येकाग्र तच्च तन्मनश्च तस्य सनिवेशना एकाग्रमन सनिवेशना तया, चित्तस्येतस्तत उन्मार्गगस्य निरोधो-नियन्त्रणा चित्तनिरोधस्त करोति ( २५ ) । २७ । ३९ ।

एवविधस्यापि सयमादेवेष्टफलावाप्तिरिति तदाह—

सजमेण भते ! जीवे कि जणेइ ?, २ अणण्हयत्त जणेइ ( २६ ) । सू० ४० ।

सवरेण-पञ्चाश्रवविरमणादिना 'अनहस्कत्व' अविद्यमानबध्यमानकर्मत्व जनयति, आश्रवविरमणात्मकत्वादस्य ( २६ ) ।२८।४०।

सयमवतोऽपि तपो विना न कर्मक्षय इति तदाह—

तवेण भते ! जीवे कि जणेइ ?, २ वोयाण जणेइ ( २७ ) । सू० ४१ ।

तपसा वक्ष्यमाणेन व्यवदान-पूर्वबद्धकर्मापगमस्ततो विशिष्टा शुद्धि जनयति ( २७ ) । २९ । ४१ ।

इत्थ व्यवदानस्य तपोऽनतरफलत्वात्तदाह—

वोयाणेण भते ! जीवे कि जणेइ ?, २ अकिरिय जणेइ, अकिरियाए भवित्ता तओ पच्छा सिज्झइ ५ ( २८ ) । सू० ४२ ।

पञ्चपष्टसत
त्रिंशतितम-
द्वाराणि

व्यवदानेन अक्रियं—अविद्यमानक्रियं, कोऽर्थो ?—व्युपरतक्रियाख्यं शुक्लध्यानतुर्यभेदं जनयति, अक्रियाको—व्युपरतक्रियः शुक्लध्यानभेदवर्त्ती भूत्वा ततः पश्चादनन्तरं सिद्ध्यति—निष्ठितार्थो भवति, बुध्यते—ज्ञानदर्शनोपयोगाभ्यां वस्तुतत्त्वमवगच्छति, मुच्यते संसारात्, न तु "दग्धेन्धनः पुनरुपैति भव"मित्यादिवादिपरिकल्पितमुक्तिवत्पुनरिहागमवान्, अत एव परिनिर्वातीत्यादि प्राग्वत्, आह—अनन्तरं तपसो व्यवदानफलमुक्तं, तच्च मुक्त्याख्यफलोपलक्षकमतिदेशेनोक्तं इति, किं पुनस्तत्फलत्वेन साक्षादस्याभिधानं ?, उच्यते, सूत्रकृतां वैचित्र्यख्यापनार्थं, ते हि परार्थोद्यतचेतसः परेषां प्रकर्षापकर्षावपेक्ष्य क्वचित्साक्षादभिधानोचितानप्यर्थान् गम्यतया निर्दिष्टवन्तः, क्वचित्तु गम्यमानानपि साक्षाद्, अन्यत्र तूभयथाऽपीति ( २८ ) । ३० । ४२ ।

व्यवदानं च सत्स्वपि संयमादिषु सुखशायितायामेव भवतीति तामाह—

सुहसाएणं ( सायाए पा० ) भंते ! जीवे किं जणेइ ?, २ अणुस्सुयत्तं जणेइ, अणुस्सुएणं जीवे अणुकंपए अणुब्भडे विगयसोगे चरित्तमोहणिज्जं कम्मं खवेइ ( २९ ) । सू० ४३ ।

सुखं शेते, कोऽभिप्रायः ? प्रवचनशङ्कादीनां परलाभकामभोगशरीरसम्बाधनादिमदनस्पृहादीनां च क्रमेणाभावरूपासु चतसृषु सुखशय्यासु स्थितत्वेन मनोविघाताभावान्निराकुलतया आस्ते इति सुखशायस्तस्य भावः सुखशायता, प्राकृतत्वात् सूत्रे यलोपः, तया अनुत्सुकत्वं, कोऽर्थः ?, परलाभदिव्यमानुषकामभोगेषु सदा निःस्पृहत्वं, यद्वा सुखस्य—वैषयिकस्य शातः तद्गतस्पृहानिवारणेनापनयनं सुखशातस्तेन अनुत्सुकत्वं—विषयसुखं प्रति निःस्पृहत्वं जनयति—उत्पादयति, अनुत्सुकश्च जीवोऽनु—सह कम्पते इत्यनुकम्पकः, सुखोन्मुखो हि म्रियमाणमपि जीवं पश्यन् स्वसुखरसिक एवास्ते, अयं तु तद्विपरीत इति, दुःखेन कम्पमानमव-

लोक्य प्राणिन तदु खदु खितया स्वयमपि तत्काल एव कम्पते इत्यर्थ, तथा अनुद्भट-अनुल्वण विगतशोको-नैहिकार्थभ्रंशेऽपि शोचते, मुक्तिवद्धस्पृहत्वात्, एवविधश्च प्रकृष्टशुभाध्यवसायवशाच्चारित्रमोहनीय कर्म क्षपयति (२९)। ३१। ४३।

सुखशय्यास्थितस्य चाप्रतिबद्धता स्यादिति तामाह—

अपडिबद्धयाए ण भते! जीवे कि जणेइ ?, २ निस्सगत्त जणेइ निस्सगत्तेण जीवे एगे एगग्गचित्ते दिया य राओ य असज्जमाणे अप्पडिबद्धे आवि विहरइ (३०)। सू० ४४।

अप्रतिबद्धतया-मनसि निरभिष्वङ्गतया निस्सङ्गत्व-बहि सङ्गाभाव जनयति, निस्सङ्गत्व गतो जीव एको रागादिविरहितत्वेन, तत एव एकाग्रचित्तो-धर्मैकतानमना, ततश्च दिवा रात्रौ च असजन्, कोऽर्थ ?-सर्वथा बहि सङ्ग त्यजन्, अप्रतिबद्धश्चापि विहरति, कोऽभिप्रायो ?-विशेषत प्रतिबन्धविकलो मासकल्पादिनोद्यतविहारेण पर्यटति (३०)। ३२। ४४।

अप्रतिबद्धता च विविक्तशयनासनताया स्यादिति तामाह—

विवित्तसयणासणयाए ण भते! जीवे कि जणेइ ?, २ चरित्तगुत्तिं जणेइ, चरित्तगुत्ते ण जीवे विवित्ताहारे दढचरित्ते एगतरए मुक्खभावपडिवन्ने अट्ठविह कम्मगठिं निज्जरेइ (३१)। सू० ४५।

विविक्तानि-स्त्र्याद्यससक्तानि शयनासनानि उपलक्षणत्वात् उपाश्रयश्च यस्यासौ विविक्तशयनासनस्तद्भावस्तत्ता तया चरित्रगुप्तिं-चरणरक्षा जनयति, प्राकृतत्वात् गुप्तचरित्रश्च जीवो विविक्तो-विकृत्यादिबृहकवस्तुविरहित आहारो यस्य स तथा, गुप्तचरित्रो हि सर्वत्र निस्पृह एव स्यात्, तथा च दृढ-निश्चल चरित्रमस्येति दृढचरित्र, तत एव एकान्तेन निश्चयेन रत-

अभिरतिमान् एकान्तरतः संयम इति गम्यं, तथा मोक्षे—मुक्तौ भावेन—अन्तःकरणेन प्रतिपन्नः—आश्रितो मोक्षभावप्रतिपन्नो—मोक्ष एव मया साधयितव्य इति अभिप्रायवान्, अष्टविधकर्मग्रन्थिरिव ग्रन्थिर्दुर्भेदतयाष्टविधकर्मग्रन्थिस्तं निर्जरयति—क्षपकश्रेणिप्रतिपत्त्या क्षपयति ( ३१ । ३३ । ४५ ।

विविक्तशयनासनतायां च विनिवर्त्तना स्यादिति तामाह—

विणिवट्टणयाए णं भंते जीवे किं जणेइ ?, २ पावाणंकम्माणं अकरणयाए अब्भुट्ठेइ पुव्वबद्धाण य निज्जरणयाए पावं नियत्तेइ, तओ पच्छा चाउरंतं संसारकंतरं वीईवयइ ( ३२ ) सू० ४६ ।

विनिवर्त्तनया—विषयेभ्य आत्मनः पराङ्मुखीकरणरूपया पापकर्मणां—सावद्यानुष्ठानानां अकरणतया—न मया पापानि कार्याणीत्येवंरूपया अभ्युत्तिष्ठते—धर्मं प्रत्युत्सहते, पूर्वबद्धानां पापकर्मणामिति प्रक्रमः, चशब्दो निर्जरणानन्तरं द्रष्टव्यः, ततः पूर्वबद्धानां निर्जरणया, चशब्दान्नव्यानुपादानेन च तत्पापकर्म निर्वर्त्तयति—निर्वासयति ( ३२ )। ३४ । ४६ ।

विषयविनिवृत्तश्च कश्चित्सम्भोगप्रत्याख्यानवान् स्यादतस्तदाह—

संभोगपच्चक्खाणेणं भंते ! जीवे किं जणेइ ?, २ आलंबणाइं खवेइ, निरालंबणस्स य आययट्ठिया जोगा भवंति, सएणं लाभेणं संतूसइ परस्स लाभं नो आसाएइ नो तक्केइ नो पीहेइ नो पत्थेइ नो अभिलसइ, परस्स लाभं अणासाएमाणे अतक्केमाणे अपीहेमाणे अपत्थेमाणे अणभिलसेमाणे दुच्चं सुहसिज्जं उवसंपज्जित्ता णं विहरइ ( ३३ )। सू० ४७ ।

समिति सकरेण—स्वपरलाभमीलनात्मकेन भोगः सम्भोग—एकमण्डलीभोक्तृत्वमित्यर्थस्तस्य प्रत्याख्यान—गीतार्थावस्थाया जिनकल्पादिप्रतिपत्त्या परिहार सम्भोगप्रत्याख्यान तेन आलम्बनानि—ग्लानतादीनि क्षपयति—तिरस्कुरुते, सदोद्यतत्वेन वीर्याचारमेवावलम्बते निरालम्बनस्य चाऽऽयतो—मोक्ष सयमो वा स एवार्थ प्रयोजन विद्यते येषा ते आयतार्थिका योगा—व्यापारा भवन्ति प्रवन्धत प्रवर्त्तते, तथा स्वकीयेन लाभेन तुष्यति—निरभिलाष स्यात्, परस्य लाभ नो तर्कयति—मनसा यदि मह्यमसौ ददातीति विकल्पयति, नो स्पृहयति, तत् श्रद्धालुतया आत्मन आविष्करोति, नो प्रार्थयति—याचा मह्य देहीति याचत, नोऽभिलषयति—तल्लालसतया वाञ्छति, एकार्थिकानि चैतानि नानादेशजविनेयानुग्रहार्थमुपात्तानि, ततश्च परस्य लाभमनाशायमान—आशाविषयमकुर्वाणोऽनास्वादयत—अभुञ्जानोऽतर्कयन् अस्पृहयन् अप्रार्थयमान—अनभिलषन् द्वितीया सुखशय्या उपसम्पद्य—प्राप्य विहरति, एवविधरूपत्वात् अस्या, इह 'अणासाएमाणे' इत्युत्तरत्र वचनात्पूर्वत्रापि 'नो आसाएइ' इत्यनुमीयते ( ३३ )। ३५ । ४७ ।

सम्भोगप्रत्याख्यानवतश्चोपधिप्रत्याख्यानमपि सम्भवतीति तदाह—

उवहिपच्चक्खाणेण भते ! जीवे कि जणेइ ?, २ अपलिमथ जणेइ, निरुवहिए ण जीवे (निक्कखे पा०) उवहि-मतरेण य न सकिलिस्सइ ( ३४ )। सू० ४८।

उपधे—रजोहरणमुखवस्त्रिकाव्यतिरिक्तस्योपकरणस्य प्रत्याख्यान—न मया असौ गृहीतव्य इत्येवरूपा निवृत्तिरुपधिप्रत्याख्यान तेन, परिमन्थ—स्वाध्यायादिक्षतिस्तदभावोऽपरिमन्थस्त जनयति, तथा निष्क्रान्त उपधेर्निरुपधि स एव निरुपधिको

चतु स्त्रिंश-त्तमद्वारम्

जीवो निष्काङ्क्षो-वस्त्राद्यभिलापरहितः सन्, उपधिमन्तरेण चस्य भिन्नक्रमत्वात् न च सङ्क्लिश्यति-न च मानसं शारीरं वा क्लेशमाप्नोति, उक्तं हि-"तस्स णं भिक्खुस्स नो एवं भवइ परिजुन्ने मे वत्थे सूई जाइस्सामि संधिस्सामि उक्कसिस्सामि तुन्निस्सामी"त्यादि (३४)। ३६। ४८।

उपधिप्रत्याख्याता चाहारप्रत्याख्यानमपि कुर्यादिति तदाह—

आहारपच्चक्खाणेणं भंते! जीवे किं जणेइ?, २ जीवियासंसप्पओगं वुच्छिदइ (सविप्पओगं वोच्छिदिय पा०), जीवियासंसप्पओगं वुच्छिदित्ता जीवे आहारमंतरेण न संकिलिस्सइ (३५)। सू० ४९।

आहारप्रत्याख्यानेन-अनेषणीयभक्तपानत्यागरूपेण, जीविते-प्राणधारणरूपे आशंसा-अभिलाषस्तस्याः प्रयोगः-व्यापारणं करणं जीविताशंसाप्रयोगस्तं व्यवच्छिनत्ति, आहाराधीनं हि मनुष्यजीवितमतस्तत्प्रत्याख्याने तदाशंसासु व्यवच्छिदैव स्यात्, ततश्च जीविताशंसाप्रयोगं विच्छिद्य जीव आहारमन्तरेण न सङ्क्लिश्यति-विकृष्टतपोऽनुष्ठानेऽपि न बाधामनुभवति (३५)।३७।४९।



एतच्च प्रत्याख्यानत्रयमपि कषायाभावे एव फलवदिति (तदाह)—

कसायपच्चक्खाणेणं भंते! जीवे किं जणेइ?, २ वीयरायभावं जणेइ, वीयरायभावं पडिवन्नेऽविय णं जीवे समसुहदुक्खे भवइ (३६)। सू० ५०।

कषायप्रत्याख्यानेन-क्रोधादिनिवारणेन वीतः-विगतो रागः उपलक्षणत्वात् द्वेषश्चास्येति वीतरागस्तद्भावं जनयति, अपिचेत्यस्य पुनरर्थत्वात् प्रतिपन्नवीतरागभावः पुनर्जीवः समे-रागद्वेषाभावात्तुल्ये सुखदुःखे यस्य स समदुःखसुखो भवति (३६)। ३८।५०।

निष्कषायो योगप्रत्याख्यानादेव मुक्तिसाधक इति तदाह—

जोगपच्चक्खाणेण भंते० ?, २ अजोगयं जणेइ, अजोगी णं जीवे नवं कम्मं न बन्धइ पुव्वबद्धं निज्जरेइ (३७)। सू० ५१।

योगा –मनोवाक्कायव्यापारास्तत्प्रत्याख्यानेन तन्निरोधलक्षणेनायोगत्व–वक्ष्यमाणनीत्या अयोगिभावं जनयति, अयोगी च जीव पूर्वबद्धमिति भवोपग्राहिकर्मचतुष्टयमन्यस्य तदा असम्भवात् तन्निर्जरयति–क्षपयति (३७)। ३९। ५१।

योगप्रत्याख्यानत शरीरप्रत्याख्यानमेव स्यात् तदाधारत्वान्मनोवाग्योगयो, अतस्तत्प्राधान्यख्यापनार्थं तत्प्रत्याख्यानमाह—

सरीरपच्चक्खाणेण भंते० ?, २ सिद्धाइसयगुणत्तणं निव्वत्तेइ, सिद्धाइसयगुणसंपन्ने य णं जीवे लोगग्ग (भाव)मुवगए परमसुही भवइ (३८)। सू० ५२।

शरीरप्रत्याख्यानेन हि सिद्धानामतिशयगुणान् कृष्णो न नील इत्यादयो यस्य स सिद्धातिशयगुणो गमकत्वात् बहुव्रीहिस्त द्भावस्तत्त्व निर्वर्त्तयति, सिद्धातिशयगुणसम्पन्नश्च जीवो लोकाग्र–मुनिपद उपगत –प्राप्त परमसुखी–अतिशयसुखवान् भवति (३८)। ४०। ५२।

सम्भोगादिप्रत्याख्यानानि च प्राय सहायप्रत्याख्याने एव सुकराणि स्युरिति तदाह—

सहायपच्चक्खाणेण भंते० ?, २ एगीभावं जणेइ, एगीभावभूए य जीवे एगग्गं भावेमाणे अप्पसद्दे अप्पझंझे अप्पकलहे अप्पकसाए अप्पतुमंतुमे संजमबहुले संवरबहुले समाहिए आवि भवइ (३९)। सू० ५३।

सप्तत्रिंशच्च-माष्टत्रिंशच्च-मेकोनचत्वा-रिंशत्तमसूत्राणि

सहायाः–साहाय्यकारिणो यतयस्तत्प्रत्याख्यानेन तथाविधयोग्यताभाविनाऽभिग्रहविशेषरूपाणां एकीभावं–एकत्वं जनयति, भूङः प्राप्त्यर्थत्वादेकीभावभूतश्च–एकत्वप्राप्तश्च जीवः ऐकाग्र्यं–एकालम्बनत्वं भावयन्–अभ्यसयन्, अल्पशब्दस्याभाववाचित्वादल्पझंझः–अविद्यमानवाक्कलहः, अल्पकषायः अक्रोधादिः अल्पं–अविद्यमानत्वं त्वमिति–स्वल्पापराधिन्यपि त्वमेवं पुरापि कृतवान् त्वमेवं–सदा करोषीत्यादि पुनर्पुनः प्रलपनं यस्य स तथा, संयमबहुलः संवरबहुल इति प्राग्वत्, अत एव समाहितो–ज्ञानादिसमाधिमांश्चापि भवति (३९)। ४१। ५३।

ईदृशश्चान्ते भक्तप्रत्याख्यानवान् स्यादिति तदाह—

भत्तपचक्खाणेणं भंते० ?, २ अणेगाइं भवसयाइं निरुंभइ (४०)। सू० ५४।



भक्तप्रत्याख्यानेन–आहारपरित्यागरूपेण भक्तपरिज्ञादिना अनेकानि भवशतानि निरुणद्धि, तथाविधाध्यवसायवशात् संसाराल्पतापादनादिति भावः ४०। ४२। ५४।

अथ सर्वप्रत्याख्यानप्रधानं सद्भावप्रत्याख्यानमाह—

सब्भावपचक्खाणेणं भंते० ?, २ अणियट्टिं जणयइ, अनियट्टिं पडिवन्ने य अणगारे चत्तारि केवलिकंमंसे खवेइ, तंजहा–वेयणिज्जं आउयं नामं गोयं, तओ पच्छा सिज्झइ ५ (४१)। सू० ५५।



सद्भावेन–सर्वथा पुनः पुनः करणासम्भवात्परमार्थेन प्रत्याख्यानं सद्भावप्रत्याख्यानं सर्वसंवररूपं शैलेशीति यावत् तेन न विद्यते निर्वृत्तिः–मुक्तिमप्राप्य निवर्त्तनं यस्मिंस्तदनिवृत्तिः शुक्लध्यानचतुर्थभेदं जनयति, प्रतिपन्नानिवृत्तिश्चानगारः चत्वारि–चतुः-

सत्कानि केवलिन, कम्मसेत्ति कार्मग्रन्थिकपरिभाषया अंशशब्दस्य सत्पर्यायत्वात् सत्कर्माणि केवलिसत्कानि भवोपग्राहीणि क्षपयति-क्षय नयति, तद्यथेत्याख्यान प्राय प्रतिरूपताया, शिष्ट स्पष्टम् (४१)। ४२। ५५।

एतच्च प्रत्याख्यान प्राय प्रतिरूपतायामेव भवतीति तामाह—

पडिरूवयाए ण भंते० ?, २ लाघविय जणेइ, लहुभूए ण जीवे अप्पमत्ते पागडलिंगे पसत्थलिंगे विसुद्ध-समत्ते सत्तसमिइसमत्ते सव्वपाणभूयजीवसत्तेसु वीससणिज्जरूवे अप्पडिलेहे (अप्पपडिलेहि पा०) जिइंदिए विपुलतवसमिइसमन्नागए आवि भवइ (४२)। सू० ५६।

प्रति—सादृश्ये, तत प्रतीति—स्थविरकल्पिकादिसदृश च रूप—वेषो यस्य स तथा तद्भाव प्रतिरूपता, लाघवमस्यास्तीति लाघवी तद्भावो लाघविता ता, द्रव्यत स्वल्पोपकरणत्वेन भावतस्त्वप्रतिबद्धतया जनयति, लघुभूतश्च जीवोऽप्रमत्त प्रमादहेतूना परिहारत तथा प्रकटलिङ्ग—स्थविरकल्पादिरूपेण प्रतीति विज्ञायमानत्वात् प्रशस्तलिङ्गो—जीवरक्षणहेतुरजोहरणादिधारकत्वात्, विशुद्धसम्यक्त्वस्तथा प्रतिपत्त्या सम्यक्त्वविशोधनात्, तथा सत्त्व च—आपत्स्ववैक्लव्य करण अध्यवसानकर च समितयश्चोक्तरूपा समस्ता—परिपूर्णा यस्य स समाप्तसत्त्वसमितिकरण, सूत्रे क्तान्तस्य प्राकृतत्वात्परनिपात, तत एव सर्वप्राणभूतजीवसत्त्वेषु विश्वसनीयरूपस्तत्पीडापरिहारित्वात्, नञोऽल्पार्थत्वादप्रत्युपेक्षोऽल्पोपकरणत्वात्, जितानि—वशीकृतानि यतिरहमिति प्रत्ययात् कथञ्चित् परिणामान्यथात्वे अपीन्द्रियाणि येन स जितेन्द्रिय, तथा विपुलेन—अनेकभेदतया विस्तीर्णेन तपसा समितिभि च

सर्वविषयानुगतत्वेन विपुलाभिरेव समन्वागतो–युक्तोऽपि भवति, पूर्वत्र समितीनां परिपूर्णत्वोक्त्या सामस्त्यमुक्तं, इह तु तासां सार्वत्रिकत्वमिति न पौनरुक्त्यम् ( ४२ )। ४४। ५६।

प्रतिरूपतायामपि वैयावृत्त्यादेवेष्टफलावाप्तिरित्येतदाह—

वेयावच्चेणं भंते० ?, २ तित्थयरनामगुत्तं कम्मं निबंधइ ( ४३ )। सू० ५७।

व्यावृत्तः–कुलादिव्यापारेषु कार्यवांस्तद्भावो वैयावृत्त्यं तेन, तीर्थकरनामगोत्रं निबध्नाति ( ४३ )। ४५। ५७।

वैयावृत्त्यवांश्च सर्वगुणभाजनं स्यादिति सर्वगुणसम्पन्नतामाह—

सव्वगुणसंपुन्नयाए णं भंते० ?, २ अपुणरावत्तिं जणेइ, अपुणरावत्तिं पत्तए णं जीवे सारीरमाणसाणं दुक्खाणं नो भागी भवइ ( ४४ )। सू० ५८।



सर्वगुणा ज्ञानादयः तैः सम्पन्नो–युक्तस्तद्भावः सर्वगुणसम्पन्नता तया, अपुनरावृत्तिं–पुनरिहागमनाभावः, मुक्तिमित्यर्थः जनयति, अपुनरावृत्तिं प्राप्त एव प्राप्तको जीवः दुःखानां नो–नैव भागी–भाजनं भवति, तद्धेत्वोर्देहमनसोरभावात्, सिद्धिसुखभाजनमेव स्यादिति भावः ( ४४ )। ४६। ५८।

सर्वगुणसम्पन्नतायां च वीतरागता स्यादिति तामाह—

वीयरागयाए णं भंते० ?, २ नेहाणुबंधणाणि तण्हाणुबंधणाणि य वुच्छिंदइ मणुण्णामणुण्णेसु सद्दरूवरसफरिसगंधेसु सचित्ताचित्तमीसएसु चेव विरज्जइ ( ४५ )। सू० ५९।

वीतरागतया-रागद्वेषापगमरूपया स्नेह पुत्रादिविषय तृष्णा द्रव्यादिविषया तद् रूपाणि अन्विति अनुगतानि अनुकूलानि वा बन्धनानि रागद्वेषपरिणामात्मकानि स्नेहानुबन्धनानि च व्यवच्छिनत्ति, अतिदुरन्तत्वख्यापनार्थं च रागान्तर्गतत्वेऽपि तृष्णा स्नेहयो पृथगुपादान, ततश्च मनोज्ञेषु शब्दस्पर्शरसरूपगन्धेषु विरज्यते, तृष्णास्नेहयोरेव रागहेतुत्वात्, आह-कषायप्रत्याख्यान फलत्वेन वीतरागतोक्तैव तत्किमर्थमस्या पृथगुपादान ?, उच्यते, रागस्यैव सर्वानर्थमूलत्वख्यापनार्थम् (४५)।४७।५९।

रागद्वेषाभावे च तात्त्विका श्रमणगुणा, तेषु चाद्यव्रतपालनोपायत्वात् क्षान्तिरेव प्रथमेति तामाह—

खंतीए ण भंते० ?, २ परीसहे जिणेइ (४६)। सू० ६०।

क्षान्त्या-क्रोधजयेन परीषहान्-अर्थात् वधादीन् जयति-परीषहाध्ययनन्यायतोऽभिभवति (४६)।४८।६०।

क्षान्तिस्थितेनाऽपि न मुक्ति विना शेषव्रतपालन कर्तुं शक्यमिति तामाह—

मुत्तीए णं भंते० ?, २ अकिंचण जणेइ, अकिंचणे य जीवे अत्थलोलाण पुरिसाण अपत्थणिज्जे भवइ (४७)। सू० ६१।

मुक्त्या-निर्लोभतया अकिञ्चनभाव -अकिञ्चन-निष्परिग्रहत्व जनयति, अकिञ्चनश्च जीवोऽर्थे लोला -लम्पटा अर्थलोला - चौरादयस्तेषामप्रार्थनीयः प्रस्तावात् बाधितुमनभिलषणीयो भवति (४७)।४९।६१।

लोभाविनाभाविनी च मायेति तदवश्यम्भाव्यार्जवमतस्तदाह—

अज्जवयाए ण भंते० ?, २ काउज्जुयय भावुज्जुयय भासुज्जुयय अविसंवायण जणेइ, अविसंवायणसंपन्नयाए णं जीवे धम्मस्स आराहए भवइ (४८)। सू० ६२।

सूत्रत्वात् ऋजुः—अवक्रस्तद्भाव आर्जवं तेन—मायापरिहाररूपेण, कायेन ऋजुरेव ऋजुकः कायऋजुकस्तद्भावः कायर्जुकता—कुब्जादिवेषभ्रूविकाराद्यकरणतः प्राञ्जलता तस्या भावः—अभिप्रायस्तस्मिंस्तेन वा ऋजुकतां—यदन्यत् विचिन्तयन् लोकभक्त्यादिनिमित्तं अन्यत् वाचा कायेन वा समाचरति तत्परिहाररूपां भावऋजुकतां—यदुपहासादिहेतोरन्यदेशभाषया भाषणं तत्परित्यागात्मिकां, तथा अविसंवादनं—पराविप्रतारणं जनयति, अविसंवादनसम्पन्नतयोपलक्षणत्वात् कायर्जुकतादिसम्पन्नतया च जीवो धर्मस्याराधको भवति, विशुद्धाध्यवसायत्वेन अन्यजन्मन्यपि तदवाप्तेः ( ४८ ) । ५० । ६२ ।

एवंगुणस्यापि न विनयं विना समग्रफलावाप्तिः, स च मार्दवादेवेति तदाह—

**मद्दवयाए णं भंते० ( जीवे पा० ) ?, २ अणुस्सि( सि पा० )यत्तं जणेइ, अणुस्सियत्ते ( स्सिए पा० ) णं जीवे मिउमद्दवसंपन्ने अट्ठ मयट्ठाणाइं ( णाणि पा० ) निट्ठवेइ ( ति पा० ) ( ४९ ) । सू० ६३ ।**

मार्दवेन गम्यमानत्वात् अभ्यस्यमानेन, मृदुः—भावतो द्रव्यतश्चावनमनशीलस्तस्य भावो मार्दवं यत्सदामार्दवोपेतस्यैव स्यात् तेन सम्पन्नः—तदभ्यासात्सदा मृदुस्वभावो मृदुमार्दवसम्पन्नः सन् अष्टौ मदस्थानानि—जातिकुलादीनि निष्ठापयति—विनाशयति ( ४९ ) । ५१ । ६३ ।

एतदपि तत्त्वतः सत्यव्यवस्थितस्यैव भवति, तत्रापि च भावसत्यं प्रधानमिति तदाह—

**भावसच्चेणं भंते० ?, २ भावविसोहिं जणेइ, भावविसोहीए वट्टमाणे अरहंतपन्नत्तस्स धम्मस्स आराहण-**



अष्टचत्वारिंशदेकोनपञ्चाशद्द्वारे

याए अब्भुट्ठेइ, अरहतपन्नत्तस्स धम्मस्स आराहणयाए अब्भुट्ठित्ता परलोगधम्मस्स ( परलोग पा० ) आराहए भवइ (५०)। सू० ६४।

भावसत्येन–शुद्धान्तरात्मरूपेण–पारमार्थिकावितयत्वेन भावविशुद्धिं–विशुद्धाध्यवसायात्मिका जनयति, भावविशुद्धौ वर्त्तमानो जीवोऽर्हत्प्रज्ञप्तस्य धर्मस्याराधनया अनुष्ठानेनाभ्युत्तिष्ठते–मुक्त्यर्थमुत्सहते, यद्वा आराधनायै–आवर्जनार्थमभ्युत्तिष्ठते, अर्हत्प्रज्ञप्तस्य धर्मस्य आराधनायैव सम्यगभ्युत्थाय परलोके–भवान्तरे धर्मं परलोकधर्मस्तस्य आराधको भवति, प्रेत्य-जिनधर्मावाप्त्या (५०)। ५२। ६४।

भावसत्ये च करणसत्य सम्भवतीति तदाह—

करणसच्चेण भंते० ?, २ करणसत्तिं जणेइ, करणसच्चे वट्टमाणो जहावाई तहाकारी भवइ (५१)। सू० ६५।

करणे सत्य करणसत्य–यत्प्रतिलेखनादिक्रिया यथोक्तामुपयुक्त कुरुते तेन करणशक्तिं–तन्माहात्म्यात्पुराऽनध्यवसितक्रियासामर्थ्यरूपा, तथा करणसत्ये वर्त्तमानो जीव यथावादी तथाकारी चापि भवति, स हि सूत्रार्थमधीयमानो यथैव क्रियाकलाप वदनशील करणशीलोऽपि तथैव (५१)। ५३। ६५।

ईदृशस्य योगसत्यमपि स्यादिति तदाह—

जोगसच्चेण भंते० !, ण जीवे० ?, २ जोगे विसोहेइ (५२)। सू० ६६।

योगाः–मनोवाक्कायास्तेषां सत्यं–अवितथत्वं योगसत्यं तेन, योगान् विशोधयति क्लिष्टकर्मबन्धकत्वाभावात निर्दोषान् करोति (५२)। ५४। ६६।

एतच्च सत्यं गुप्त्यन्वितस्यैव स्यादतो यथाक्रमं ता आह—

मणगुत्तयाए णं भंते० ?, २ एगग्गं जणेइ, एगग्गचित्तेणं मणगुत्ते संजमाराहए भवइ (५३)। सू० ६७।

मनोगुप्ततया–मनोगुप्तिरूपया जीव ऐकाग्र्यं–प्रस्तावात् धर्मैकतानचित्तत्वं, तथा चैकाग्रचित्तो जीवः गुप्तं–अशुभाध्यवसायेषु गच्छत् रक्षितं मनो येनासौ गुप्तमनाः सन्, क्रान्तस्य परनिपातः प्राग्वत्, संयमाराधको भवति, तत्र मनोरोधस्य प्रधानत्वात् (५३)। ५५। ६७।

वयगुत्तयाए णं भंते० ?, २ निव्विकारत्तं जणेइ, निव्विकारेणं जीवे वइगुत्ते जोगे अज्झप्पजोगसाहणजुत्ते यावि भवइ (निव्विकारेणं जीवे वयगुत्तयं जणयति पा०) (५४)। सू० ६८।

वाग्गुप्ततया–कुशलवागुदीरणरूपया निर्विकारं–विकथाद्यात्मकवाग्विकाराभावं जनयति, ततश्च निर्विकारो जीवः वाग्गुप्तः सर्वथा वाग् निरोधलक्षणवाग्गुप्तिसमन्वितः सन् अध्यात्मं–मनस्तस्य योगाः–व्यापारा धर्मध्यानादयस्तेषां साधनानि एकाग्रतादीनि तैः युक्तः अध्यात्मयोगसाधनयोगयुक्तश्चापि भवति, विशिष्टवाग्गुप्तिरहितो हि न चित्तैकाग्रतादिभाग् भवेदिति भावः (५४)। ५६। ६८।

कायगुत्तयाए ण भंते० ?, २ संवर जणयइ, संवरेण कायगुत्ते ण पुणो पावासवनिरोह करेइ (५५)। सू० ६९।

कायगुप्तिरूपया संवर–अशुभयोगनिरोधरूप जनयति, संवरेण गम्यमानत्वात् अभ्यस्यमानेन कायगुप्त पुन सर्वथा निरुद्ध-कायिकव्यापार पापस्य–कर्मण आश्रवा–उपादानहेतवो हिंसादय पापाश्रवास्तन्निरोध करोति, तात्त्विक्या अस्या एतत्फलत्वेन प्रतीतत्वात् ( ५५ )। ५७। ६९।

इतश्च गुप्तित्रयाद्यथाक्रम मन समाधारणादिसम्भव इति तदाह—

मणसमाधारणयाए ण भंते० ?, २ एगग्ग जणेइ, एगग्ग जणइत्ता नाणपज्जवे जणयइ, नाणपज्जवे जणइत्ता सम्मत्त विसोहेइ, मिच्छत्त च निज्जरेइ ( ५६ )। सू० ७०।

मनस समिति–सम्यक् आङिति–मर्यादया आगमाभिहितभावाभिव्याप्त्या वा धारणा–व्यवस्थापन मन समाधारणा तया, ऐकाग्र्य उक्तरूप जनयति, ऐकाग्र्य जनयित्वा ज्ञानपर्यवान्–विशिष्टतरवस्तुतत्त्वावबोधरूपान् जनयति, ज्ञानपर्यवान् जनयित्वा सम्यक्त्व विशोधयति, शुद्धत्व चास्य वस्तुतत्त्वावगमे तद्विषयरुचिरपि शुद्धतरत्वात्, तत एव मिथ्यात्व निर्जरयति ( ५६ )। ५८। ७०।

वयसमाहारणयाए ण भंते० ?, २ वयसाहारण दसणपज्जवे विसोहेइ, वइसाहारण दसणपज्जवे विसोहित्ता सुलहबोहियत्त च निव्वत्तेइ दुल्लहबोहियत्त निज्जरेइ ( ५७ )। सू० ७१।

पञ्चपद्-पञ्चाशद्वारे

वाक्समाधारणया-स्वाध्याय एव वाग्निवेशनात्मिकया वाचा समाधारणया वाक्समाधारणया, ये मतेरिव वचसोऽपि विषयाः-प्रज्ञापनीया इत्यर्थः, ते च पदार्था एव, इह च तद्विषया दर्शनपर्यवा अप्युपचारात् तथोक्ताः, ततश्च वाक्साधारणाश्च ते दर्शनपर्यवाश्च-सम्यक्त्वभेदरूपा वाक्साधारणदर्शनपर्यवास्तान् विशोधयति, "दविए दंसणसोही" इति वचनात्, द्रव्यानुयोगाभ्यासतस्तद्विषयशङ्कादिमालिन्यापनयनेन विशुद्धान् करोति, वाक्साधारणदर्शनपर्यवान् विशोध्य सुलभबोधिकत्वं निर्वर्त्तयति, दुर्लभबोधिकत्वं निर्जरयति (५७)। ५९। ७१।

**कायसमाधारणयाए णं भंते० ?, २ चरित्तपज्जवे विसोहेइ, चरित्तपज्जवे विसोहित्ता अहक्खायचरित्तं विसोहेइ २ त्ता चत्तारि केवलिकम्मंसे खवेइ, तओ पच्छा सिज्झइ ५ (५८)। सू० ७२।**

कायसमाधारणया-संयमयोगेषु कायस्य सम्यग् व्यवस्थापनरूपया चारित्रपर्यवान्-चारित्रभेदान् क्षायोपशमिकानिति गम्यं, विशोधयति-अतीचारकालुष्यापनयेन, चारित्रपर्यवान् विशोध्य ततो यथाख्यातचारित्रं विशोधयति, सर्वथाऽसत उत्पत्त्यसम्भव इति पूर्वमपि कथञ्चित्सदेव यथाख्यातचारित्रं चारित्रमोहनीयोदयमलिनितं तन्निर्जरणेन निर्मलीकुरुते, यथाख्यातचारित्रं विशोध्य चत्वारीत्यादि सर्वं प्राग्वत् (५८)। ६०। ७२।

एवं समाधारणात्रयाद् यथाक्रमं ज्ञानादित्रयस्य शुद्धिरुक्ता, फलं पुनरस्य किमित्याशङ्कायां यथाक्रममेतत् फलमाह—

**नाणसंपन्नयाए णं भंते० ?, २ सव्वभावाभिगमं जणेइ, नाणसंपन्ने णं जीवे चाउरंते संसारकंतारे न विण-**

ससई–'जहा सूईससुत्ता, पडिया न विणस्सई। तहा जीवे ससुत्ते, ससारे न विणस्सई ॥१०९७॥ नाणविणयतवचरित्तजोगे सपाउणइ, ससमयपरसमय(×)विसारए य अ(×)सघायणिज्जे भवइ (५९)। सू० ७३।

ज्ञानमिह प्रस्तावात् श्रुतज्ञान, तत् सम्पन्नतया जीव सर्वभावाना–अशेषजीवादिपदार्थाना अभिगम –ज्ञान सर्वभावाभिगमस्त जनयति, तथा ज्ञानसम्पन्नो जीवश्चतुरन्ते–ससारकान्तारे न विनश्यति इतस्तत पर्यटनसम्भवेन न मुक्तिमार्गात् विशेषेण दूरीभवति, अमुमेवार्थं दृष्टान्तेन स्पष्टतरमाह–यथा सूची ससूत्रा पतितापि कचवरादौ न विनश्यति–सुप्रापतया न विशेषेण दूरी भवति, तथा जीव सह सूत्रेण–श्रुतेन वर्तत इति ससूत्र ससारे न विनश्यति, उक्त हि–"सूई जहा ससुत्ता न नस्सइ कयवरमि पडिआवि। जीवो तहा ससुत्तो न नस्सइ गओ वि ससारे ॥ १ ॥" अत एव ज्ञान च–अवध्यादि विनयश्च तपश्च वक्ष्यमाण चारित्रयोगाश्च–चारित्रप्रधाना व्यापारा ज्ञानविनयतपश्चारित्रयोगास्तान् प्राप्नोति, तथा स्वसमयपरसमययो सङ्घातनीय –प्रमाणपुरुषतया मीलनीय स्वसमयपरसमयसङ्घातनीयो भवति, इह च स्वसमयपरसमयशब्दाभ्या तद्वेदिनः पुरुषा उच्यन्ते, तेष्वेव सदायादिव्यवच्छेदाय मीलनसम्भवात् (५९)। ६१। ७३।

दसणसपन्नयाए ण भते० ?, २ भवमिच्छत्तछेयण करेइ पर न विज्झायइ, अणुत्तरेण नाणदसणेण (अप्पाण सजोएमाणे सम्म भावेमाणे पा०) विहरइ (६०)। सू० ७४।

दर्शनसम्पन्नतया–क्षायोपशमिकसम्यक्त्वसमन्वितया भवहेतुभूत मिथ्यात्व तस्य छेदन–क्षपण भवमिथ्यात्वच्छेदन करोति,

एकोनषष्टि-षष्टिद्वारे

कोऽर्थः ? क्षायिकसम्यक्त्वमवाप्नोति, ततश्च परमिति उत्तरकालं उत्कृष्टतस्तस्मिन्नेव भवे मध्यमजघन्यापेक्षया तृतीयचतुर्थे वा भवे केवलज्ञानावाप्तौ न विध्यायति-ज्ञानदर्शनप्रकाशाभावरूपं विध्यानं नाप्नोति, किंतु ?, अनुत्तरेण-क्षायिकत्वात् प्रधानेन ज्ञानदर्शनेनात्मानं संयोजयन्-प्रतिसमयमपरापरेणोपयोगरूपतयोत्पद्यमानेन घटयन्, संयोजनं च भेदेऽपि स्यादत आह-सम्यग् भावयन् तेनात्मानमात्मसान्नयन् विहरति, भवस्थकेवलितया मुक्ततया वा आस्ते ( ६० ) । ६२ । ७४ ।

चरित्तसंपन्नयाए णं भंते० ?, २ सेलेसीभावं जणेइ, सेलेसिं पडिवन्ने विहरइ ( पडिवन्ने सेलेसिं ) अणगारे चत्तारि कम्मंसे खवेइ, तओ पच्छा सिज्झइ ( ६१ ) । सू० ७५ ।

चारित्रसम्पन्नतया शिलानामिमे शैलाः-पर्वतास्तेषामीशः शैलेशः-मेरुः स इव शैलेशो मुनिर्निरुद्धयोगतया अत्यन्तस्थैर्येण तस्येयमवस्था शैलेशी तस्या भावस्तं, यद्वा शीलं-समाधिः, स च निश्चयतः सर्वसंवररूपं, तस्येशः शैलेशः तदवस्था शैलेशी तद्भावस्तं जनयति, तज्जननाच्च शैलेशीं प्रतिपन्नोऽनगारश्चत्वारीत्यादि सर्वं प्राग्वत् ( ६१ ) । ६३ । ७५ ।

चारित्रं चेन्द्रियनिग्रहादेव जायते इति प्रत्येकं तन्निग्रहमाह—

सोइंदियनिग्गहेणं भंते० ?, २ मणुन्नामणुन्नेसु सद्देसु रागदोसणिग्गहं जणेइ, तप्पच्चइयं च णं कम्मं न बंधइ पुव्वबद्धं च निज्जरेइ ( ६२ ) । सू० ७६ । एवं चक्खिंदिय० ( ६३ ) । सू० ७७ । घाणिंदिय० ( ६४ ) । सू० ७८ । जिब्भिंदिय० ( ६५ ) । सू० ७९ । फासिंदिय० ( ६६ ) । सू० ८० ।



एकषष्टितः षट्षष्टिद्वाराणि

सोइदिअनिग्गहेत्यादि सूत्रपञ्चक, श्रोत्रेन्द्रियस्य निग्रह –स्वस्वविषयाभिमुखमनुधावतो नियमन श्रोत्रेन्द्रियनिग्रहस्तेन, मनोज्ञामनोज्ञेषु–अभिमतेतरेषु शब्दादिषु यथाक्रम रागद्वेषनिग्रह जनयति, तथा च तत्प्रत्ययिक रागद्वेषनिमित्त कर्म न बध्नाति पूर्वबद्ध च निर्जरयति, तन्निग्रहे शुभाध्यवसायप्रवृत्तेरिति भाव , एव च चक्षुरिन्द्रियादिनिग्रहेण, यथाप्रधान चात्रेन्द्रियनिर्देश , प्राधान्य च पाटवाद्यपेक्षम् ( ६२, ६३, ६४, ६५, ६६ ) । ६४–६८ । ७६–८० ।

एतन्निग्रहोऽपि कषायजयादेव भवेद् , अत क्रमेण तद्विजयमाह—

कोहविजएण भते० ?, २ खतिं जणेइ, कोहवेयणिज्ज कम्म न बधइ पुव्वनिबद्ध च निज्जरेइ (६७)। सू० ८१। एव माणविज० मद्दव० (६८)। सू० ८२। माया० अज्जव० (६९)। सू० ८३। लोभ० सतोस० (७०)। सू० ८४।

क्रोधस्य विजयो–दुरन्ततापरिभावनेनोदयनिरोध क्रोधविजयस्तेन, क्रोधेन–कोपाध्यवसायेन वेद्यत इति क्रोधवेदनीय तद्धेतुभूतपुद्गलरूप कर्म न बध्नाति, तथा पूर्वबद्ध प्रक्रमात् तदेव निर्जरयति, तत एव विशिष्टजीववीर्योल्लासात्, एव मानविजयेन, मायाविजयेन, लोभविजयेन ( ६७, ६८, ६९, ७० ) । ६९–७२ । ८१–८४ ।

एतज्जयश्च न प्रेमद्वेषमिथ्यादर्शनविजय विना, अतस्तमाह—

पिज्जदोसमिच्छादसणविजएण भते० ?, २ नाणदसणचरित्ताराहणयाए अब्भुट्ठेइ अट्ठविहस्स कम्मस्स कम्मगठि( अट्ठविहकम्म पा० )विमोयणयाए, तप्पढमयाए जहाणुपुव्विं अट्ठावीसइविह मोहणिज्ज कम्म उग्घाएइ, पचविह नाणावरणिज्ज नवविह दसणावरणिज्ज पचविह अतराय, एए तिन्नि ( प्र० वि ) कम्मसे जुगव

सप्तषष्टितो सप्तति-
द्वाराणि

खवेइ, तओ पच्छा अणुत्तरं अणंतं कसिणं पडिपुन्नं निरावरणं वितिमिरं विसुद्धं लोगालोगप्पभास( प्र० व )गं-
( सभावं पा० ) केवलवरनाणदंसणं समुप्पाडेइ जाव सजोगी हवइ ताव य इरियावहियं कम्मं निबंधइ-
सुहफरिसं दुसमयठिईयं, तं पढमसमए बद्धं बिइयसमए वेइयं तइयसमए निज्जिन्नं, तं बद्धं पुट्ठं उदीरियं
वेइयं निज्जिन्नं, सेयाले अकम्मं चावि भवइ ( ७१ ) । सू० ८९ ।

प्रेमा—रागः स च द्वेषश्च—अप्रीतिरूपो मिथ्यादर्शनं च—सांशयिकादि प्रेमद्वेषमिथ्यादर्शनानि तद्विजयेन ज्ञानदर्शनचारित्रा-
राधनायामभ्युत्तिष्ठते—उद्यच्छति, प्रमादनिमित्तत्वात् तद्विराधनायाः, ततश्चाष्टकर्मणो मध्ये इति गम्यं, कर्मग्रन्थिः अतिदुर्भेद-
घातिकर्मरूपा तस्या विमोचना—क्षपणा कर्मग्रन्थिविमोचना तस्यै, चस्य गम्यत्वात् तदर्थं चाभ्युत्तिष्ठते इत्यनुवर्त्त्य योज्यं, अभ्यु-
त्थाय च किं करोतीत्याह—तत्प्रथमतया—तत्पूर्वतया, न हि तेन तत् पुरा क्षपितमासीदिति, आनुपूर्व्या अनतिक्रमेण यथानुपूर्वं
अष्टाविंशतिविधं मोहनीयं कर्म उद्घातयति—क्षपयति, अत्र च क्षपणानुपूर्वी क्षपकश्रेण्यपरनाम्नी कर्मग्रन्थादिभ्यो ज्ञेया, मोहनीयं
क्षपयित्वा अन्तर्मुहूर्त्तं यथाख्यातचारित्रमनुभवन् छद्मस्थवीतरागताद्विचरमसमययोः प्रथमसमये निद्राप्रचले नामप्रकृतीश्च
देवगत्याद्याः षोडश "देवगइ आणुपुव्वी"ति गाथोक्ताः क्षपयति, चरमसमये तु यत्क्षपयति तत्सूत्रकृदाह—पञ्चविधं ज्ञानावरणीयं
नवविधं दर्शनावरणीयं पञ्चविधमन्तरायं, लिङ्गव्यत्ययादेतानि त्रीण्यपि सत्कर्माणि युगपद् एककालं क्षपयति, ततः—क्षपणातः
पश्चात्—अनन्तरं नास्मादुत्तरं—प्रधानमन्यज्ज्ञानमस्तीत्यनुत्तरं अनन्तमविनाशितया विषयानन्त्यतया च कृत्स्नं—कृत्स्नवस्तु-
विषयत्वात् प्रतिपूर्णं सकलस्वपरपर्यायपरिपूर्णवस्तुप्रकाशकत्वात्, निरावरणं अशेषावरणविगमात् वितिमिरं, तस्मिन् सति कश्चिद-

प्यज्ञानतिमिराभावात्, विशुद्ध सर्वदोषविगमात् लोकालोकप्रभावकं तत्स्वरूपप्रकाशकत्वात् केवल असहायं वर-शेषज्ञानापेक्षया ज्ञान च दर्शन च तत केवलवरशब्दाभ्या कर्मधारयसमासे केवलवरज्ञानदर्शन समुत्पादयति-जनयति, आत्मन इति गम्य, स च यावत्सयोगी-मनोवाक्कायव्यापारवान् भवति, तावत्किमित्याह-तावत् ईरणमीर्या-गतिस्तस्या पन्था-यदाश्रिता सा भवति तस्मिन् भवमैर्यापथिक, उपलक्षण च पथिग्रहण तिष्ठतोऽपि, सयोगिताया केवलिनोऽपि सूक्ष्मा गात्रसञ्चारा, तदेव पथिस्थ तिष्ठन्वा ऐर्यापथिक कर्म बध्नाति, तच्च कीदृगित्याह-सुखयतीति सुख स्पर्श-आत्मप्रदेशै सह सश्लेषो यस्य तत् सुखस्पर्श, द्वौ समयौ यस्या सा द्विसमया तथाविधा स्थितिरस्येति द्विसमयस्थितिक, द्विसमयस्थितिकत्वमेव भावयितुमाह-तत् प्रथमसमये बद्ध-आत्मसात्कृत, स्पर्शाविनाभावित्वाच्चास्य स्पृष्ट च, द्वितीयसमये वेदित-अनुभूत, उदयान्यथानुपपत्त्या चास्फोटित च, तृतीयसमये निर्जीर्ण-परिशटित, अतश्च तद् बद्ध-जीवप्रदेशै श्लिष्टमाकाशेन घटवत्, तथा स्पृष्ट-मसृणमणिकुड्यापतितस्थूल शिलाशकलचूर्णवत्, अनेन विशेषणद्वयेन तस्य निधत्तनिकाचितावस्थयोरभावमाह, उदीरित-उदयप्राप्तमुदीरणायास्तत्रासम्भवात् वेदित तत्फलसुखानुभवनेन, निर्जीर्ण-क्षयमुपागत, सेआले य'त्ति सूत्रत्वात् एष्यत्काले चतुर्थसमयादावकर्म चापि भवति, तज्जीवापेक्षया पुनस्तस्य तथाविधपरिणामाभावात्, एतच्चैवविधविशेषणान्वित सातकर्मैवासौ बध्नाति, यदुक्त-"अप्प बायर मउअ बहु च रुक्ख च सुकिल चेव। मद महव्वयतिय सायावहुल च त कम्म ॥ १ ॥" ( ७१ ) । ७२ । ८५ ।

अय च यथा शैलेशीमवाप्याकर्मता लभते तथा दर्शयन् शैलेश्यकर्मताद्वारद्वयमर्थतो व्याचिख्यासुराह—

अहाउय पालइत्ता-अतोमुहुत्तअद्धावसेसाउओ ( अतोमुहुत्त अद्धावसेसाए पा० ) जोगनिरोह करेमाणो

सुहुमकिरियं अप्पडिवाइं सुक्कज्झाणं झायमाणे तप्पढमयाए मणजोगं निरुंभइ वयजोगं निरुंभइ आणापाणनिरोहं करेइ, ईसिपंचहस्सक्खरुच्चारणद्धाए य णं अणगारे समुच्छिन्नकिरियं अणियट्टिसुक्कज्झाणं झियायमाणो वेयणिज्जं आउयं नामं गुत्तं च एए चत्तारिवि कम्मंसे जुगवं खवेइ (७२)। सू० ८६।

तओ ओरालियं कम्माइं च सव्वाहिं विप्पजहणाहिं विप्पजहित्ता उज्जुसेढीपत्ते अफुसमाणगई उड्ढं एगसमएणं अविग्गहेणं तत्थ गंता सागरोवउत्ते सिज्झइ जाव अंतं करेइ (७३)। सू० ८७।

अथेति केवलावाप्त्यनन्तरं आयुष्कं—जीवितं देशोनपूर्वकोटीप्रमाणं अन्तमुहूर्त्तादिप्रमाणं वा पालयित्वा अन्तमुहूर्त्तावशेषं तथाविधं आयुरस्येति अन्तर्मुहूर्त्तावशेषायुष्कः, योगनिरोधं करिष्यमाणं सूक्ष्मा क्रिया—व्यापारो यस्मिन् तत्सूक्ष्मक्रियं अप्रतिपाति अधःपतनाभावात् शुक्लध्यानं, "समुदायेषु हि प्रवृत्ताः शब्दा अवयवेष्वपि वर्त्तन्ते" इति न्यायात् शुक्लध्यानतृतीयभेदं ध्यायन् तत्प्रथमतया तदाद्यतया मनसो योगं—मनोद्रव्यसाचिव्यजनितं व्यापारं निरुणद्धि, तत्र पर्याप्तमात्रस्य संज्ञिनो जघन्ययोगिनो यावन्ति मनोद्रव्याणि तज्जनितश्च यावान् व्यापारस्ततसङ्ख्यगुणविहीनानि मनोद्रव्याणि तद्व्यापारं च प्रतिसमयं निरुन्धन्नसङ्ख्येयसमयैस्तत्सर्वनिरोधं करोति, तदनन्तरं वाचो वाचि वा योगो वाग्योगो भाषाद्रव्यसाचिव्यजनितव्यापारस्तं निरुणद्धि, तत्र च पर्याप्तमात्रद्वीन्द्रियजघन्यवाग्योगपर्यायेभ्योऽसङ्ख्यगुणविहीनांस्तत्पर्यायान् समये २ निरुन्धन्नसङ्ख्येयसमयैः सर्ववाग्योगं निरुणद्धि, तत्र आनापानौ—उच्छ्वासनिश्वासौ तन्निरोधं करोति, सकलकायनिरोधोपलक्षणं चैतत्, तं च कुर्वन् प्रथमसमयोत्पन्नसूक्ष्मपनकजघन्यकाययोगतोऽसङ्ख्येयगुणहीनं काययोगमेकैकसमये निरुन्धन् देहत्रिभागं मुञ्चन्नसङ्ख्येयसमयैरेव सर्वं

निरुणद्धि, इत्थं योगत्रयनिरोधं विधाय ईषदिति-स्वल्पप्रयत्नापेक्षया पञ्चानां ह्रस्वाक्षराणा-अइउऋऌ इत्येवंरूपाणां उच्चारो-भणनं तस्याद्धा-कालो यावता त उच्चार्यन्ते ईषत्पञ्चाक्षरोच्चारणाद्धा तस्यां च, णमिति प्राग्वत्, अनगार -मुनिः समुच्छिन्ना-उपरता क्रिया-चित्तादिव्यापाररूपा यस्मिंस्तत्समुच्छिन्नक्रियं न निवर्त्तते कर्मक्षयात् प्रागित्येवंशीलमनिवर्त्ति शुक्लध्यानं तुर्यभेदरूपं ध्यायन्-शैलेश्यवस्थामनुभवन्निति भावः, ह्रस्वाक्षरोच्चारणं त्वविलम्बाद्रुतं गृह्यते, एवंविधश्च यत्कुरुते तदाह-वेदनीयं १ आयुर्नाम २-३ गोत्रं ४ च, एतानि चत्वारि सत्कर्माणि युगपत्क्षपयति, ततो वेदनीयादिक्षयानन्तरं औदारिककार्मणे शरीरे उपलक्षणत्वात् तैजसं च, सर्वाभिः -अशेषाभिः विशेषेण प्रकर्षतो हानयः त्यागा विप्रहाणयो, व्यक्त्यपेक्षं बहुवचनं ताभिः, कोऽर्थः -सर्वथा परिशाटनेन, न तु यथा पूर्वं सङ्घातपरिशाटाभ्यां देशत्यागतः, विशेषेण प्रहाय विप्रहाय-परिशाट्य, चशब्दोऽत्रौदयिकादिभावनिवृत्तिमस्यानुक्तामपि समुच्चिनोति, यदुक्तं-"तस्सोदइआ भावा भवत्तं च विणियत्तए जुगवं सम्मत्तनाणदंसणसुहसिद्धत्ताणि मुत्तूण ॥ १ ॥' ऋजु -अवक्राश्रेणि -आकाशप्रदेशपङ्क्तिस्तां प्राप्तोऽनुश्रेणिगत इत्यर्थः, अस्पृशद्गतिः, कोऽर्थः, यावत्स्वाकाशप्रदेशेषु जीवोऽवगाढस्तावत् एव स्पृशति, न तु ततोऽतिरिक्तमेकमपि प्रदेशं, ऊर्ध्वं-उपरि एकसमयेन द्वितीयादिसमयान्तरास्पर्शनेन अविग्रहेण-वक्रगतिरूपविग्रहाभावेन, अन्वयव्यतिरेकाभ्यामुक्तोऽत्र स्पष्टतरो भवतीत्यनुश्रेणिप्राप्त इत्यनेन गतार्थत्वेऽपि पुनरभिधानं, तत्र-मुक्तौ गतश्चेति गत्वा साकारोपयुक्तो ज्ञानोपयोगवान्, उक्तं च-"उज्जुसेढिं पडिवण्णो समयपएसंतरं अफुसमाणो। एगसमएण सिज्झइ अह सागारोवउत्तो सो ॥ १ ॥" (७२ ७३) । ७४ ७५ । ८६ ८७ ।

द्विसप्तति-द्वारे

सम्प्रत्युपसंहर्तुमाह—

एसो खलु सम्मत्तपरक्कमस्स अज्झयणस्स अट्ठे समणेणं भगवया महावीरेणं आघविए पन्नविए परूविए दंसिए निदंसिए उवदंसिए त्तिबेमि । सू० ८८ ।

॥ सम्मत्तपरक्कमं-२९ ॥

एषोऽनन्तरोक्तः खलुर्निश्चये सम्यक्त्वपराक्रमस्याध्ययनस्यार्थः—अभिधेयं श्रमणेन भगवता महावीरेण, आर्षत्वात् आख्यातः सामान्यविशेषपर्यायाभिव्याप्तिकथनेन, प्रज्ञापितो हेतुफलादिप्रकाशकात्मप्रकर्षज्ञापनेन, प्ररूपितः स्वरूपकथनेन, दर्शितो, नानाविधभेददर्शनेन निदर्शितो दृष्टान्तोपन्यासेन उपदर्शित उपसंहारद्वारेण । ७६ । ८८ ।

इति सम्यक्त्वपराक्रमाध्ययनावचूरिः ॥ २९ ॥

॥ इति श्रीउत्तराध्ययने एकोनत्रिंशस्य सम्यक्त्वपराक्रमाध्ययनस्य अवचूरिः समाप्ता ॥

सम्यक्त्व-पराक्रमा-ध्ययनफलम्

# अथ त्रिंश तपोमार्गगत्यध्ययनम् ।



अनन्तराध्ययनेऽप्रमाद उक्त , इह तु तद्वता तपो विधेयमिति तत्स्वरूपमुच्यते, अस्य तपोमार्गगतिरितिनाम–

जहा उ पावगं कम्मं, रागद्दोससमज्जियं । खवेइ तवसा भिक्खू, तमेगग्गमणो सुणे ॥ १०९८ ॥

यथा–येन प्रकारेण, तुरेवार्थो भिन्नक्रमो योज्यते, पापकं कर्म–ज्ञानावरणादि, रागद्वेषाभ्यां सम् इति–भृशं अर्जितं–उपात्तं रागद्वेषसमार्जितं क्षपयत्येन तपसा भिक्षु तदेकाग्रमना , शृणु इति शिष्यमभिमुखं करोति, मा भूदनभिमुखोपदेशेनैतद्वैफल्यमिति ॥ १ ॥ १०९८ ॥

इह चानाश्रवेणैव सर्वथा कर्मक्षिप्यत इति यथाऽसौ स्यात्तदाह—

प्राणातिपातविरत्यादीन्यनाश्रवकारणानि

पाणिवहमुसावाया अदत्तमेहुणपरिग्गहा विरओ । राईभोयणविरओ, जीवो भवइ अणासवो ॥ १०९९ ॥

पंचसमिओ तिगुत्तो, अकसाओ जिइंदिओ । अगारवो अ निस्सल्लो, जीवो भवइ अणासवो ॥ ११०० ॥

गाथाद्वयं सुगमं, नवरं विरत इति प्राणवधादिभिः प्रत्येकं योज्यते, तथा भवति अनाश्रवो–अविद्यमानकर्मोपादानहेतु ॥ २–३ ॥ १०९९–११०० ॥

एवंविधश्च यादृशं कर्म यथा क्षपयति तथा पुनः शिष्याभिमुखीकरणपूर्वं दृष्टान्तद्वारेणाह—

एएसिं तु विवज्जासे, रागदोससमज्जियं। खवेइ तं जहा भिक्खू, तं मे एग(प्र० तमेगग्ग)मणा सुण ॥११०१॥
जहा महातलागस्स, संनिरुद्धे जलागमे। उस्सिंचणाए तवणाए, कमेणं सोसणा भवे ॥ ११०२ ॥
एवं तु संजयस्सावि, पावकम्मनिज्जरासवे। भवकोडीसंचियं कम्मं, तवसा निज्जरिज्जई ॥ ११०३ ॥

गाथात्रयं, एतेषां तु प्राणिवधविरत्यादीनां समित्यादीनां च विपर्यासे-प्राणिवधादौ असमित्यादौ च सति रागद्वेषाभ्यां समार्जितं-उपार्जितं रागद्वेषसमार्जितं, कर्मेति गम्यं, तत् मे कथयत इति शेषः, एकं एकत्र प्रस्तुते वस्तुन्यभिनिविष्टत्वेन मनो यस्यासौ एकमनाः, सन्निरुद्धे-पाल्यादिना निषिद्धे जलागमे-जलप्रवेशे सूत्रत्वाद् उत्सेचनेन च-अरघट्टघट्यादिभिः उदञ्चनेन, सूत्रत्वात् तपनेन-रविकरसन्तापरूपेण, क्रमेण-परिपाट्या, शोषणा-जलाभावरूपा भवेत्, पापकर्मनिराश्रवे-पापकर्मणामाश्रवाभावे, भवकोटिसञ्चितमित्यत्र कोटीग्रहणमिति बहुत्वोपलक्षणं कोटीनियमासम्भवात्, कर्म तपसा निर्जीर्यते-आधिक्येन क्षयं नीयते, शेषं स्पष्टम् ॥ ४-६ ॥ ११०१-३ ॥

तपसा निर्जरा तपसो भेदाश्च

तपसा कर्म निर्जीर्यते इत्युक्तं, तत्र किन्नु तत्तप इति संशये तत्स्वरूपं विवक्षुस्तद्भेदानाह—

सो तवो दुविहो वुत्तो, बाहिरऽब्भंतरो तहा। बाहिरो छव्विहो वुत्तो, एवमब्भिंतरो तवो ॥ ११०४ ॥

तद् अनन्तरं प्रक्रान्तं, तपो द्विविधमुक्तं, बाह्यं-बाह्यद्रव्याद्यपेक्षत्वात्प्रायो मुक्त्यवाप्तिबहिरङ्गत्वात्, लोकप्रतीतत्वात्

कुतीर्थिकैश्च स्वाभिप्रायेणासेव्यमानत्वात् च, अभ्यन्तर तद्विपरीत, तथेति समुच्चये, बाह्य षड्विधं, (एव) अभ्यन्तर तप उक्तमिति योग, सर्वत्र सूत्रत्वात् लिङ्गव्यत्यय ॥ ७ ॥ ११०४ ॥

तत्र बाह्य यथा षड्विध तथाह—

अणसणमूणोअरिया भिक्खायरिया य रसपरिच्चाओ। कायकिलेसो सलिणया य बज्झो तवो होइ ॥ ११०५॥

अक्षरार्थ स्पष्ट एव ॥ ८ ॥ ११०५ ॥

भावार्थस्तु प्रतिभेद सूत्रकार एव विवक्षुस्तावदनशनमाह—

इत्तरियमरणकाला य, अणसणा दुविहा भवे। इत्तरिया सावकखा, निरव(प्र० रा)कखा उ निइज्जिया॥११०६॥

बाह्यतपोभेदा अनशनभेदौ च

गाथापञ्चक, इत्वरमेव इत्वरक-नियतकालानधिकमित्यर्थ, मरणावसान कालो यस्य तत् मरणकाल मध्यपदलोपी समासो, यावज्जीवमित्यर्थ, यद्वा मरण काल—अवसरो यस्य तत् मरणकाल, च समुच्चये, अश्यते—भुज्यते इत्यशन सर्वाहाराभिधानमेतत्, न विद्यमान देशत सर्वतो वाऽशनमस्मिन्नित्यनशन द्विविध भवेत्, सर्वत्र प्राकृतत्वात् स्त्रीलिङ्गता, तत्रेत्वरक सहावकाङ्क्षया—घटिकाद्वयाद्युत्तरकाल भोजनाभिलापरूपया वर्त्तते इति सावकाङ्क्ष, निष्क्रान्तमाकाङ्क्षातो निराकाङ्क्ष, तज्जन्मनि भोजनाशसाभावात्, तोर्भिनक्रमत्वात् द्वितीय पुनमरणकालम् ॥ ९ ॥ ११०६ ॥

अथेत्वरकानशनस्य भेदानाह—

जो सो इत्तरियतवो, सो समासेण छव्विहो। सेढितवो पयरतवो, घणो अ तह होइ वग्गो य ॥ ११०७॥

सपरिकर्मापरिकर्मतपःस्वरूपम्



पुनर्द्वैविध्यमेव प्रकारान्तरेणाह—

अहवा सपरिकम्मा अपरिकम्मा य आहिया । नीहारिमणीहारी आहारच्छेअओ दुसुवि ॥ ११११० ॥

अथवेति प्रकारान्तरसूचने, सह परिकर्मणा स्थाननिपदनत्वग्वर्त्तनादिना विश्रामणादिना च वर्त्तते यत्तत्सपरिकर्म, तच्च सपरिकर्म भक्तप्रत्याख्यानमिङ्गिनीमरणं च, एकत्र स्वयमन्येन वा कृतस्यान्यत्र तु स्वयं विहितस्यैवोद्वर्त्तनादिचेष्टात्मकपरिकर्मणोऽनुज्ञानात् एतद्विपरीतमपरिकर्म, तच्च पादपोपगमनं, निष्प्रतिकर्मताया एव तत्राभिधानात्, यद्वा परिकर्म—संलेखना सा यत्रास्ति तत्सपरिकर्म, तद्विपरीतं तु अपरिकर्म, तत्र चान्याघाते त्रयमप्येतत् सूत्रार्थोभयनिष्ठितो निष्पादितशिष्यः संलेखनापूर्वकमेव विधत्ते, अन्यथा आर्त्तध्यानसम्भवाद् उक्तं हि—"देहंमि असंलिहिए सहसा धाऊहि खिज्जमाणाहिं । जायइ अट्टज्झाणं सरीरिणो चरिमकालंमि ॥ १॥" इति सपरिकर्मोच्यते, यत्पुनर्व्याघाते—गिरिभित्तिपतनाभिघातसर्वाङ्गपीडकवातादिरूपे संलेखनामकृत्वैव भक्तप्रत्याख्यानादि क्रियते, तदपरिकर्म आख्यातं—कथितं, तथा निर्हरणं निर्हारो—गिरिकन्दरादिगमनेन ग्रामादेर्बहिर्गमनं, तद्विद्यते यत्र तन्निर्हारि, तदन्यदनिर्हारि, यदुत्थातुकामे व्रजिकादौ विधीयते, एतच्च प्रकारद्वयमपि पादपोपगमनविषयं, तत्प्रस्तावे एवागमे अस्योक्तत्वात्, आहारच्छेदश्च—आहारनिराकरणं द्वयोरपि सपरिकर्मापरिकर्मणोर्निर्हार्यनिर्हारिणोश्च सम इति शेषः ॥ १३ ॥ १११० ॥

सम्प्रत्यूनोदरतामाह—

ओमोअरणं पंचहा, समासेण वियाहियं । दव्वओ खित्तकालेणं, भावेणं पज्जवेहि य ॥ ११११ ॥

अवमोदरण-न्यूनोदरता करणमित्यर्थ , अमोअरिअमिति पाठे तु अवम-न्यून उदर-जठरमस्यासौ अवमौदरस्तद्भावोऽव मौदर्यं, पञ्चधा, पञ्चधात्वमेवाह-द्रव्यतो-द्रव्याद्धेतो , पर्यायैश्च उपायभूतै , सर्वत्र हेतौ तृतीया ॥ १४ ॥ ११११ ॥

तत्र द्रव्यत आह—

जो जस्स उ आहारो, तत्तो ओम तु जो करे । जहन्नेणेगसित्थाई, एव दव्वेण ऊ भवे ॥ १११२ ॥

यो यस्य तु पूरणे आहारस्तत स्वाहारादवम ऊन, तु पूरणे य कुर्याद्, भुञ्जान इति शेष, कोऽर्थ ?, नरस्य हि ३२ कवलमान आहार , स्त्रियाश्च २८ कवलमान आहार , यदुक्त-"बत्तीस किरकवला आहारो कुच्छिपूरओ भणिओ । पुरिसस्स महिलिआए अट्ठावीस भवे कवला ॥ १ ॥ कवलाण य परिमाण कुक्कुडिअडगपमाणमित्त तु । जो वा अविगिअवयणो वयणमि छुहिज्ज वीसत्थो ॥ २ ॥" ततश्चैतन्मानादून यो भुङ्क्ते यत्तदोर्नित्याभिसम्बन्धात्तस्य एव-अमुना प्रकारेण द्रव्येणोपाधिभूतेन भवेदिति सम्बन्ध , अवमौदर्यमिति प्रक्रम , एतच्च जघन्येनैकसिक्थु यत्रैकमेव सिक्थु भुज्यते तदादि ॥ १५ ॥ १११२ ॥

द्रव्यक्षेत्राव-मौदर्यम्

क्षेत्रावमौदर्यमाह—

गामे नगरे तह रायहाणिनिगमे य आगरे पल्ली । खेडे कब्बडदोणमुहपट्टणमडबसबाहे ॥ १११३ ॥

ग्रसति गुणान्, गम्यो वा अष्टादशाना कराणामिति ग्रामस्तस्मिन्, नात्र करोऽस्तीति नकर तत्र, तथा राजा अनया धीयते इति राजधानी-राज्ञ पीठिकास्थानमित्यर्थ , नितरामाच्छिति तस्मिन्ननेकविधभाण्डानीति निगम -प्रभूतवणिजा निवासोऽनयो समाहारस्तस्मिन्, आकरे-हिरण्याद्युत्पत्तिस्थाने, सुब्व्यत्ययात् पाल्यन्तेऽनया दुष्कृतविधायिनो जना इति पल्ली तस्या-वृक्ष

गहनाद्याश्रितः प्रान्तजननिवासे, खेट्यन्ते—उत्त्रास्यन्ते अत्र स्थितैः शत्रव इति खेटं—धूलिप्राकारपरिक्षिप्तं तत्र, कर्वटं—कर्वटजनावासं कुनगरमित्यर्थः, द्रोण्यो—नावो मुखमस्येति द्रोणमुखं—जलस्थलनिर्गमप्रवेशं यथा भृगुकच्छं तामलिप्तिर्वा, पतन्त्यस्मिन् सर्वदिग्भ्यो जना इति पत्तनं, तच्च द्विधा—जलपत्तनं—जलान्तःस्थानां जनानां निवासस्थानं तद् द्वीपपत्तनं, स्थलपत्तनं च—मथुरा, मटंबं—यस्य सर्वदिक्ष्वर्द्धतृतीययोजनान्तर्ग्रामो नास्ति, सम्बाधः—प्रभूतचातुर्वर्ण्यनिवासः, कर्वटादीनां चात्र समाहारद्वन्द्वः तस्मिन् ॥ १६ ॥ १११३ ॥

आसमपए विहारे संनिविसे समासघोसे य । थलिसेणाखंधारे सत्थे संवट्ट कोट्टे य ॥ १११४ ॥
वाडेसु य रत्थासु य घरेसु वा एवमित्तियं खित्तं । कप्पइ उ एवामई एवं खित्तेण ऊ भवे ॥ १११५ ॥

आ—समन्तात् श्राम्यन्ति तपः कुर्वन्त्यस्मिन्नित्याश्रमः—तापसावसथादिस्तदुपलक्षितं पदं—स्थानं आश्रमपदं तस्मिन्, विहारो—देवगृहं तत्प्रधानो ग्रामादिरपि विहारस्तस्मिन्, सन्निवेशो—यात्रादिसमायातजनावासे, समाजश्च—पथिकसमूहो घोषश्च—गोकुलं समाहारे समाजघोषं तस्मिन्, चः समुच्चये, स्थल्यां—उच्चभूभागे, सेना—चतुरङ्गबलसमूहः, स्कन्धावारश्च स एवाशेषखेटकाद्युपलक्षितः सेनास्कन्धावारं तस्मिन्, सार्थे—गणिमधरिमभृतवृषभादिनङ्घाते संवर्त्तन्ते—पिण्डीभवन्त्यस्मिन् भयत्रस्ता जना इति संवर्त्तः कोट्टं च प्राकारः स संवर्त्तकोट्टः तस्मिन्, चः समुच्चये, क्षेत्रप्रस्तावादिह समाजादिषु क्षेत्रमेवोपलक्ष्यते, वाटेषु पाटेषु वा—वृत्तिवरण्डिकादिपरिक्षिप्तगृहसमूहात्मकेषु, रथ्यासु—सेरिकासु, गृहेषु, वा सर्वत्र विकल्पे, एवमित्यनेन हृदयस्थप्रकारेण, एताव-

द्विवक्षातो नियतपरिमाण क्षेत्र कल्पते, पर्यटितुमिति शेष , तु पूरणे, एवमादि, आदेर्गृहशालादिग्रह , एव–अमुना प्रकारेण क्षेत्रप्राधान्यादभिग्रहग्रहणलक्षणेनेति शेष', क्षेत्रेणेति क्षेत्रहेतुक, भवेदवमौदर्यमिति प्रक्रम ॥ १७, १८ ॥ १११४–१५ ॥

पुनरन्यथा क्षेत्रावमौदर्यमाह—

पेडा य अद्धपेडा गोमुत्ति पयगवीहिया चेव । सबुक्कावट्टायययगतुपच्छागया छट्ठा ॥ १११६ ॥

अत्र च सम्प्रदाय –पेटा–पेटिका इव चतुष्कोणा, अद्धपेडा–इमीए चेव अद्धसठिआ घरपरिवाडी, गोमुत्तिआ–वकावलिआ, पयगवीहिआ अणिअया, पयगुड्डेण सरिसा शम्बूक –शङ्खस्तस्यावर्त्तस्तद्वदावर्त्तो यस्या सा शम्बूकावर्त्ता, सा च द्विधा अभ्यन्तर-शम्बूका बहि शम्बूका च, तत्राद्या यत् शङ्खनाभिरूपे क्षेत्रे भिक्षित्वा मध्याद्बहिर्गम्यते, द्वितीयाया बहिर्भिक्षित्वा अन्तर्गम्यते, गतप्रत्यागतिका यत्र यथा प्रविशति तथा निर्गच्छति "तत्थ उज्जुअ गतूण निअट्टइ।" छट्ठत्ति षष्ठी, नन्वग्रे गोचररूपत्वात् भिक्षाच र्यात्वमेवासा तत्कथमिह क्षेत्रावमौदर्यरूपतोक्ता ?, उच्यते, अवमौदर्य ममास्त्वित्यभिसन्धिना विधीयमानत्वादवमौदर्यव्यपदे-शोऽप्यदुष्ट एव, दृश्यते हि निमित्तभेदादेकत्रापि देवदत्तादौ पितृपुत्राद्यनेकव्यपदेश , एव पूर्वं ग्रामादिविषयस्योत्तरत्र च कालादिविषयस्य च नैयतस्याभिग्रहत्वेन भिक्षाचर्यात्वप्रसङ्गे इदमेवोत्तर वाच्यम् ॥ १९ ॥ १११६ ॥ प्रकारान्तरेण क्षेत्राव मौदर्यम्

कालावमौदर्यमाह—

दिवसस्स पोरिसीण चउण्हपि उ जत्तिओ भवे कालो । एव चरमाणो खलु कालोमाण मुणेयव्व ॥ १११७ ॥

दिवसस्य पौरुषीणा–प्रहराणा चतसृणामपि, तु –पूरणे, यावान् भवेत् कालोऽभिग्रहविषय इति शेष , एवमित्येव प्रकारेण

प्रक्रमात्कालेन चरमाणत्ति तिङ्सुब्व्यत्ययात् चरतः खलु–निश्चितं कालेनावमत्वं प्रस्तावादुदरस्य कालावमत्वं, कोऽर्थः–कालावमौदर्यं, मुणितव्यं–ज्ञेयं, कालहेतुत्वादुदरस्येति भावः ॥ २० ॥ १११७ ॥

एतदेव प्रकारान्तरेणाह—

अहवा तइयपोरिसीए, ऊणाए घासमेसंतो । चउभागूणा एवा, एवं कालेण ऊ भवे ॥ १११८ ॥

अथवा तृतीयायां पौरुष्यामूनायां ग्रासं–आहारं एषयन्–त्रिविधैषणया गवेषयन्, न्यूनत्वमेव विशेषत आह–चतुर्भागोनायां, वाशब्दात्पञ्चादिभागोनायां वा तृतीयपौरुष्यां, एवं–अमुना कालविषयाभिग्रहलक्षणेन प्रकारेण चरन्नित्यनुवर्त्तते, कालेन तु भवेदवमौदर्ययोगाद्यतिरप्यवमौदर्यं, औत्सर्गिकविधिविषयं चैतद्, उत्सर्गतो हि तृतीयपौरुष्यामेव भिक्षाटनमनुज्ञातम् ॥ २१ ॥ १११८ ॥

भावावमौदर्यमाह—

इत्थी वा पुरिसो वा अलंकिओ वाऽणलंकिओ वावि । अन्नयरवयत्थो वा, अण्णयरेणं च वत्थेणं ॥१११९॥

स्त्री वा पुरुषो वा अलङ्कृतः–विभूषितो वा अनलङ्कृतो वापि–तद्विपरीतः, तथा अन्यतरच्च तद्वयश्च बाल्यादन्यतरवयस्तत्स्थो वा, अन्यतरेण वा पट्टचटकमयादिना वस्त्रेण, लक्षणे तृतीया, सर्वत्र वा विकल्पे ॥ २२ ॥ १११९ ॥

अण्णेण विसेसेणं वण्णेणं भावमणुमुअंते उ । एवं चरमाणा खलु भावोमोणं मुणेयव्वं ॥ ११२० ॥

अन्येन विशेषेण–कुपितप्रहसितादिनाऽवस्थाभेदेन वर्णेन–कृष्णादिना प्रक्रमादन्यतरेणोपलक्षितो भावं–पर्यायमुक्त-

पर्यवाव-
मौदर्यम्

रूपमेवालङ्कृतत्वादि, तोरेवार्यत्वादनुन्मुञ्चनेव-अत्यजन्नेव यदि दाता दास्यति ततोऽह गृहीष्ये नत्वन्यथेत्युपस्कार, एव चरन् खलु-निश्चित भावावमत्वेनोपलक्षित प्रक्रमादुदरस्य मुणितव्य, यद्वा सुब्व्यत्ययादेव चरत खलु भावावमत्वेन हेतुना मुणितव्यमवमौदर्यमिति प्रक्रम ॥ २३ ॥ ११२० ॥ पर्यवावमौदर्यमाह—

दव्वे खित्ते काले भावमि य आहिया उ जे भावा। एएहिं ओमचरओ पज्जवचरओ भवे भिक्खू ॥११२१॥

द्रव्ये अशनादौ, क्षेत्रे ग्रामादौ, काले पौरुष्यादौ, भावे च स्त्रीत्वादौ, आख्याता–कथिता, तु पूरणे, ये भावा पर्याया एकसिक्थोनत्वादय, एतै सर्वैरपि द्रव्यादिपर्यायै, अवममुपलक्षणत्वादवमौदर्य चरति–आसेवते अवमचरक पर्यवचरको वा भवेद्भिक्षु, इह च पर्यवप्राधान्यविवक्षया पर्यवावमौदर्यमुक्त, यद्वा एतेभ्यो द्रव्यादिपर्यायेभ्योऽवमचरको न्यूनत्वासेवक, कोर्थ ?, एकसिक्थोनत्वादावपि नवपुराणत्वादिविशेषाभिग्रहवान्, एव ग्रामपौरुषीस्त्रीत्वादिष्वपि विशिष्टाभिग्रहत पूर्वस्मात् भिन्नत्व भावनीय, आह–क्षेत्रावमौदर्यादिष्वप्यशनादिद्रव्येणैवोदरस्यावमत्वमिति कथ द्रव्यावमौदर्यादेषा विशेष ?, उच्यते, यत्रापि द्रव्यतो न्यूनत्वमुदरस्य नास्ति, तत्रापि क्षेत्रादिन्यूनतामपेक्ष्य क्षेत्राद्यवमौदर्याणि भण्यन्त एवेति ॥ २४ ॥ ११२१ ॥

भिक्षाचर्यामाह—

अट्ठविहगोयरग्ग तु, तहा सत्तेव एसणा। अभिग्गहा य जे अण्णे, भिक्खायरियमाहिया ॥ ११२२ ॥

प्राकृतत्वादष्टविधोऽग्र –प्रधान आधाकर्मादिद्विचत्वारिंशद्दोषपरिहारेण, स चासौ गौरिव चरण उच्चावचकुलेष्वविशेषेण पर्यटन गोचर, तुरुत्तरापेक्षया समुच्चये, अत्र चाष्टावग्रगोचरभेदा पेडादय एव, शम्बूकावर्त्ताया द्वैविध्याश्रयणात्, ऋज्व्या

श्वापरायाः प्रक्षेपात्, तथा सप्तैव एषणा "संसट्ठमसंसट्ठा०" इत्यादयः, अभिग्रहाश्च समुच्चये ये अन्येः एतदतिरिक्तास्ते, किमित्याह–सूत्रत्वेन (भिक्षाचर्याविषयत्वात्) भिक्षाचर्या–वृत्तिसङ्क्षेपापरनामिका आख्याता, अत्र च अभिग्रहा द्रव्यादिविषयाः, तत्र द्रव्याभिग्रहाः 'कुन्ताग्रादिस्थखण्डमण्डकादि ग्रहीष्ये' इत्यादयः, क्षेत्रा० 'देहलीजङ्घयोरन्तः कृत्वा चेद्दास्यति तदा ग्राह्यमि'त्यादयः, कालाभि० 'सर्वभिक्षाचरनिर्वर्त्तनावसरे मया पर्यटितव्यमि'त्यादयः, भावाभि० 'हसन् रुदन् बद्धो वा चेद्दास्यति ततोऽहमादास्ये नत्वन्यथे'त्येवमादयः ॥ २५ ॥ ११२२ ॥ सम्प्रति रसत्यागमाह—

**खीरदहिसप्पिमाई, पणीयं पाणभोयणं। परिवज्जणं रसाणं तु, भणियं रसविवज्जणं ॥ ११२३ ॥**

क्षीरं–दुग्धं दधि-तद्विकारः, सर्पिः–घृतं तदादि, आदेर्गुडपक्वान्नादिपरिग्रहः, प्रणीतं–अतिबृंहकं, पानं च–खर्जूररसादि, भोजनं च–गलद्बिन्दूदोदनादिपानभोजनं, सोपस्कारत्वादेषां परिवर्जनं रसानां, तुः पूरणे, भणितं–अभिहितम् ॥ २६ ॥ ११२३ ॥



कायक्लेशमाह—

**ठाणा वीरासणाईया, जीवस्स उ सुहावहा। उग्गा जहा धरिज्जंति, कायकिलेसं तमाहियं ॥ ११२४ ॥**

स्थानानि–कायावस्थितिभेदाः वीरासनं–यत्सिंहासनस्थस्य तदपनयने तथैवावस्थानं तदादिर्येषां तानि वीरासनादिकानि, आदेर्गोदोहिकासनादिग्रहः, सूत्रत्वाल्लिङ्गव्यत्ययः, लोचाद्युपलक्षणमेतत्, तोरेवार्थस्य भिन्नक्रमत्वात् सुखावहान्येव मुक्तिसुखहेतुत्वात्, उग्राणि–दुरनुष्ठेयतयोत्कटानि, यथा–येन प्रकारेण धार्यन्ते–आसेव्यन्ते, यतिभिरिति गम्यं, कायस्य क्लेशो–बाधनं कायक्लेशः सः आख्यातः–कथितः, तथैवेति शेषः ॥ २७ ॥ ११२४ ॥

मलीनतामाह—

एगंतमणावाए, इत्थीपसुविवज्जिए । सयणासणसेवणया, विवित्तसयणासणं ॥ ११२० ॥

सूत्रव्याख्या—एकान्ते-जनानाकुले अनापाते-स्त्र्याद्यापातरहिते स्त्रीपशुविवर्जिते, तत्रैवास्थित षण्डादिरहिते-शून्यागारादाविति भाव , सूत्रत्वात् शयनासनसेवना-विविक्तशयनासनं नाम बाह्यं तप उच्यते इति शेष', उपलक्षणं चैतत् एषणीयफलकादिग्रहणस्य, तथा चानेन विविक्तचर्या नाम संलीनतोक्ता, शेषसंलीनतोपलक्षणं चामी, एषा चतुर्था, यदुक्त—"इंदिअकसायजोगे पडुच्च संलीणया मुणेअव्वा । तह जा विवित्तचरिआ पन्नत्ता वीयरागेहिं ॥ १ ॥" तत्रेन्द्रियसंलीनता श्रोत्रादिभिरिन्द्रियशब्दादिषु इष्टानिष्टेषु रागद्वेषाकरणं, कषायसं० तदुदयनिरोधं उदीर्णविफलीकरणं, योगसं० मनोयोगादीनामकुशलानां निरोधः कुशलानामुदीरणमिति ॥ २८ ॥ ११२५ ॥ मश्रेगरा- रूपबाह्य नामपो नामानि च

उपसंहरन्नुत्तरग्रन्थसम्बन्धाभिधानायाह—

एसो बाहिरगतवो, समासेण वियाहिओ । अब्भिंतरो तवो इत्तो, वुच्छामि अणुपुव्वसो ॥ ११२६ ॥

एतदनन्तरोक्तं बाह्यकं तप , इतोऽबाह्यतपोऽभिधानादनन्तरं वक्ष्यामि—अभिधास्ये अनुपूर्व्या ॥ २९ ॥ ११२६ ॥

प्रतिज्ञातमाह—

पायच्छित्तं विणओ, वेयावच्चं तहेव सज्झाओ । झाणं च विउस्सग्गो, एसो अब्भिंतरो तवो ॥ ११२७ ॥

स्पष्टार्थो ॥ ३० ॥ ११२७ ॥

तत्र प्रायश्चित्तमाह—

**आलोअणारिहाईयं, पायच्छित्तं तु दसविहं । जे भिक्खू वहई सम्मं, पायच्छित्तं तमाहियं ॥ ११२८ ॥**

आलोचनं–विकटनं प्रकाशनमित्यर्थः तदर्हतीत्यालोचनार्हं, यत् पापमालोचनात एव शुद्ध्यति, आलोचनार्हमादिर्यस्य तदालोचनार्हादिकं, आदेः प्रतिक्रमणार्हादिपरिग्रहः, इह पुनर्विषयविषयिणोरभेदोपचारादेवंविधपापविशुद्ध्युपायभूतान्यालोचनादीन्येव आलोचनार्हादिशब्देनोक्तानि, पापानि ह्यालोचनादीनां विषयः, आलोचनादीनि च विषयीणीति भावनीयं, प्रायश्चित्तं तोरेवार्थस्य भिन्नक्रमत्वात् दशविधमेव–दशप्रकारमेव, दशप्रकारत्वं चेत्थं,–"आलोअणपडिक्कमणे मीस विवेगे तहेव उस्सग्गे । तव छेअ मूल अणवट्ठया य पारंचिए चेव ॥ १ ॥" जे इति आर्षत्वात् यद् भिक्षुः वहति–आसेवते सम्यग् अवैपरीत्येन, प्रायश्चित्तं तदाख्यातम् ॥ ३१ ॥ ११२८ ॥

विनयमाह—

**अब्भुट्ठाणं अंज(णंज)लिकरणं तहेवासण-दायणं । गुरुभत्तिभावसुस्सूसा, विणओ एस वियाहिओ ॥११२९॥**

अभ्युत्थानं, अञ्जलिकरणं, तथेति समुच्चये, एवेति पूरणे, सूत्रत्वात् आसनदानं–पीठादिदानमित्यर्थः, गुरुभक्तिर्भावेन-मनसा शुश्रूषा–तदादेशं प्रति श्रोतुमिच्छा, पर्युपासना वा भावशुश्रूषा, विनय एष आख्यातः ॥ ३२ ॥ ११२९ ॥

वैयावृत्त्यमाह—

**आयरियमाईयंमि, वेयावच्चे य दसविहे । आसेवणं जहाथामं, वेयावच्चं तमाहियं ॥ ११३० ॥**

मकारोऽलाक्षणिकस्तत आचार्यादिके, व्यावृत्तभावो वैयावृत्त्य उचिताहारादिसम्पादनरूप तस्मिन्, दशविधे दशविध वा आचार्यादिविषयभेदाद्, उक्त हि–"आयरिय उवज्झाए थेरतवस्सी गिलाणसेहाण। साहम्मिअकुलगणसघसगय तमिह कायव॥१॥" आसेवन एतद्विषय अनुष्ठान यथास्थाम–स्वसामर्थ्याऽनतिक्रमेण, वैयावृत्त्य तदाख्यातम् ॥ ३३ ॥ ११३० ॥

स्वाध्यायमाह—

वायणा पुच्छणा चेव, तहेव परियट्टणा। अणुप्पेहा धम्मकहा, सज्झाओ पचहा भवे ॥ ११३१ ॥

स्पष्टा ॥ ३४ ॥ ११३१ ॥ ध्यानमाह—

अट्टरुद्दाणि वज्जित्ता, झाइज्जा सुसमाहिए। धम्मसुक्काइ झाणाइ, झाण त तु बुहा वए (वयन्ति) ॥ ११३२ ॥

आर्त्तरौद्रे प्राकृतत्वात् बहुत्व, वर्जयित्वा ध्यायेत् सुसमाहित धर्मशुक्लध्याने स्थिराध्यवसायरूपे ध्यान–ध्यानाख्य तप तोरेवार्थत्वात्तदेव बुधा वदन्ति ॥ ३५ ॥ ११३२ ॥

व्युत्सर्गमाह—

सयणासण ठाणे वा, जे उ भिक्खू ण वावारे। कायस्स विउस्सग्गो, छट्ठो सो परिकित्तिओ ॥ ११३३ ॥

शयने–सस्तारकादितिर्यक्शरीरनिवेशने, उभयत्र सूत्रत्वात् सुपो लुक्, स्थाने–ऊर्ध्वस्थाने, वा विकल्पे प्रत्येक च योज्य, स्वशक्त्यपेक्ष स्थित इति गम्य, यस्तु भिक्षुर्न व्याप्रियते–न चलनादिक्रिया कुरुते, यत्तदोर्नित्याभिसम्बन्धादर्थवशाद्विभक्तिपरिणामाच्च, तस्य भिक्षो कायस्य–शरीरस्य व्युत्सर्ग –चेष्टा प्रति परित्यागो य सूत्रत्वाल्लिङ्गव्यत्यये षष्ठ तत् प्रक्रमादभ्यन्तर तप

वैयावृत्त्य-स्वाध्याय-व्युत्सर्ग-स्वरूपम्

परिकीर्त्तितं-तीर्थकरादिभिरुक्तं, शेषव्युत्सर्गोपलक्षणं चैतदनेकविधत्वात् तस्य, उक्तं च-"दव्वे भावे अ तहा दुविधुस्सग्गो चउविहो दव्वे । गणदेहोवहिभत्ते भावे कोहाइ चाउत्ति ॥ १ ॥" ॥ ३६ ॥ ११३३ ॥

सम्प्रत्यध्ययनार्थमुपसंहरन् अस्यैव फलमाह—

एवं तवं तु दुविहं, जं सम्मं आयरे मुणी ।
से खिप्पं सव्वसंसारा, विप्पमुचइ पंडिए ( सो खवेत्तु रयं अरओ, नीरयं तु गइं गए पा० ) ॥ ११३४ ॥ त्तिबेमि ॥

॥ तवमग्गिज्जं ॥ ३० ॥

एतदनन्तरोक्तस्वरूपं तपः, अप्यर्थस्य तोर्भिन्नक्रमत्वात् द्विविधमपि उक्तभेदतः यः सम्यगाचरेत्—आसेवेत मुनिः स क्षिप्रं सर्वसंसाराच्चतुर्गतिरूपाद्विप्रमुच्यते—पृथग् भवति पण्डितः ॥ ३७ ॥ ११३४ ॥

इति तपोमार्गगत्यध्ययनावचूरिः ॥ ३० ॥

॥ इति श्रीउत्तराध्ययने त्रिंशस्य तपोमार्गगत्य-
ध्ययनस्य अवचूरिः समाप्ता ॥



तपोमार्गा-
चरणफलम्

# अथ चरणविध्याख्यमेकत्रिंशत्तममध्ययनम् ।



अनन्तराध्ययने तप उक्त, इह तु तच्चरणवत एव सम्यग्भवतीति चरणमुच्यते, अस्य चरणविधिरिति नाम—

चरणविहिं पवक्खामि, जीवस्स उ सुहावहं । जं चरित्ता बहू जीवा, तिन्ना ससारसागरं ॥ ११३५ ॥

चरणस्य—चारित्रस्य विधि —आगमोक्तन्यायश्चरणविधिस्त प्रवक्ष्यामि, जीवस्य तोरेवार्थस्य भिन्नक्रमत्वात् सुखावहमेव, यथा चैतदेव तथा फलोपदर्शनद्वारेणाह—ज चरित्तेत्यादि प्राग्वत् ॥ १ ॥ ११३५ ॥

यथा प्रतिज्ञातमेवाह—

एगओ विरइं कुज्जा, एगओ अ पवत्तण । असंजमे नियत्ति च, संजमे य पवत्तणं ॥ ११३६ ॥

गाथा १९, एकत —एकस्मात् स्थानात् विरतिं—विरमण कुर्यात्, एकत —एकस्मिन् चस्य भिन्नक्रमत्वात् प्रवर्त्तन च कुर्यादिति सम्बन्ध, एतदेव विशेषत आह—असंयमात्—हिंसादिरूपात्, पञ्चम्यर्थे सप्तमी, निवृत्तिं च, संयमे चस्य भिन्नक्रमत्वात् प्रवर्त्तन, कुर्यादिति अनुवर्त्तते, चशब्दादुभयत्र परस्परापेक्षया समुच्चये ॥ २ ॥ ११३६ ॥ तथा—

रागद्दोसे य दो पावे, पावकम्मपवत्तणे । जे भिक्खू रुभई निच्चं, से न अ(ग पा० )च्छइ मंडले ॥ ११३७ ॥

रागद्वेषौ, च पूरणे, द्वौ—द्विसंख्यौ, एतदभिधान च प्राकृते द्वित्वबहुत्वयो सन्दिग्धत्वात्, उक्तार्थानामपि "अपूपौ द्वावा-

नये''त्यादिवल्लोकप्रयोगदर्शनाच्च, पापौ कोपादिरूपत्वात्, पापकर्माणि–मिथ्यात्वादीनि प्रवर्त्तयतो–जनयत इति पापकर्मप्रवर्त्तकः, यो भिक्षुः–तपस्वी रुणद्धि–उदयस्य कथञ्चिदुदितयोर्वा प्रसरस्य निराकरणेन तिरस्कुरुते नित्यं स नास्ते–न तिष्ठति मण्डले–संसारे, 'से न गच्छइ मण्डले' इति पाठे तु न गच्छति–न भ्राम्यतीत्यर्थः ॥ ३ ॥ ११३७ ॥

दंडाणं गारवाणं च, सल्लाणं च तियं तियं । जे भिक्खू चयई निच्चं, से० ॥ ११३८ ॥

दण्डानां–दुष्प्रणिहितमानसादिरूपाणां मनोदण्डादीनां गौरवाणां च–ऋद्धिगौरवादीनां, शल्यानां च–मायाशल्यादीनां त्रिकं २ प्रत्येकं यो भिक्षुस्त्यजति–वर्जयति ॥ ४ ॥ ११३८ ॥

दिव्वे य जे उवसग्गे, तहा तेरिच्छमाणुसे । जे भिक्खू सहई निच्चं, से० ॥ ११३९ ॥

दिव्यांश्च–हास्यप्रद्वेपविमर्शपृथग्विमात्रादिभिर्देवविहितान् उपसर्गान्, तथा तिरश्चामेते भयप्रद्वेपाहारहेत्वपत्यलयनसंरक्षणहेतोस्तैः क्रियमाणत्वात् तैरश्चाश्च मानुपाणामेते हासप्रद्वेपविमर्शकुशीलप्रतिसेवनात्मकनिमित्ततस्तैः क्रियमाणत्वात् मानुष्याश्च तैरश्चमानुपाः तान्, पूर्वत्र चस्यानुक्तसमुच्चयार्थत्वादात्मसंवेदनीयांश्च घट्टनप्रपतनस्तम्भनश्लेपणोद्भवान् यो भिक्षुः सहते–सम्यगध्यास्ते ॥ ५ ॥ ११३९ ॥

विगहाकसायसन्नाणं, झाणाणं च दुयं तहा । जे भिक्खू वज्जई निच्चं, से० ॥ ११४० ॥

विकथाकपायसञ्ज्ञानां प्रत्येकं चतुष्कमिति शेपः प्राकृतत्वात् ध्यानयोश्च द्विकं आर्त्तरौद्ररूपं, तथा यो भिक्षुर्वर्जयति–परिहरति, चतुर्विधत्वाच्च ध्यानस्यात्र प्रस्तावे ह्यभिधानं ॥ ६ ॥ ११४० ॥



चारित्रविधिः

वएसु इंदियत्थेसु, समिईसु किरियासु य। जे भिक्खू जयई निच्च, से० ॥ ११४१ ॥

व्रतेषु–हिंसाऽनृतास्तेयाब्रह्मपरिग्रहविरतिलक्षणेषु इन्द्रियार्थेषु शब्दरूपरसगन्धस्पर्शेषु समितिषु क्रियासु–कायिक्याधिकरणिकीप्राद्वेषिकीपारितापनिकीप्राणातिपातरूपासु, यो भिक्षुर्यतते–यत्न कुरुते यथावत्परिपालनातो व्रतसमितिषु माध्यस्थ्य विधानतश्चेन्द्रियार्थेषु परिहारतश्च क्रियासु ॥ ७ ॥ ११४१ ॥

लेसासु छसु काएसु, छक्के आहारकारणे। जे भिक्खू जयई० ॥ ११४२ ॥

लेश्यासु वक्ष्यमाणरूपासु, षट्सु कायेषु–पृथिव्यादिषु, षट्के–षट्परिमाणे आहारकारणे "वेअणवेयावच्चे" इत्यादिके प्रागुक्ते यो भिक्षुर्यतते–यथायोग निरोधोत्पादनरक्षानुरोधविधानेन यत्न कुरुते ॥ ८ ॥ ११४२ ॥

पिंडुग्गहपडिमासु, भयट्ठाणेसु सत्तसु। जे भिक्खू जयई० ॥ ११४३ ॥

पिण्डावग्रहप्रतिमासु–आहारग्रहणविषयाभिग्रहरूपासु, संसृष्टादिषु सप्तस्विति सम्बध्यते, भयस्थानेषु–भयमोहनीयोत्थात्म परिणामस्योत्पत्तिहेतुतयाऽऽश्रयेषु, "इह १ परलोग २ दाण ३ मकम्हा ४ आजीव ५ मरण ६ मसिलोए, ।" इति रूपेषु सप्तसु–सप्तसङ्ख्येषु यतते–एकत्र पालनातोऽन्यत्र तु तद्धेतोन भयाकरणात ॥ ९ ॥ ११४३ ॥

मएसु बंभगुत्तीसु, भिक्खुधम्ममि दसविहे। जे भिक्खू जयई० ॥ ११४४ ॥

मदेषु–जातिमदादिषु अष्टसु, प्रतीतत्वात् चेहान्यत्र च सूत्रे सङ्ख्यानभिधान, ब्रह्मेति–ब्रह्मचर्यगुप्तिषु "वसहिकहे"त्यादि भेदत, यतते–यथावत् परिहारासेवनपालनादिभि ॥ १० ॥ ११४४ ॥

उवासगाणं पडिमासु, भिक्खूणं पडिमासु य । जे भिक्खू जयई० ॥ ११४५ ॥

उपासते–सेवन्ते यतीनित्युपासकाः–श्रावकास्तेषां प्रतिमासु–दर्शनादिषु एकादशसु, तथा भिक्षूणां प्रतिमासु मासिक्यादिषु द्वादशसु यतते–यथावत्परिज्ञानोपदेशपालनादिभिः ॥ ११ ॥ ११४५ ॥

किरियासु भूयगामेसु, परमाहम्मिएसु य । जे भिक्खू जयई० ॥ ११४६ ॥

क्रियासु–कर्मबन्धहेतुभूतचेष्टासु अर्थानर्थादिभेदात्त्रयोदशसु, भूतग्रामेषु–प्राणिसमूहेष्वेकेन्द्रियादिसूक्ष्मेतरादिभेदाच्चतुर्दशसु, परमाधार्मिकेषु "अंबे अंबरिसी"त्यादि भेदतः पञ्चदशसु यतते–यथाक्रमं परिहाररक्षापरिज्ञानादिभिः ॥ १२ ॥ ११४६ ॥

गाहासोलसएहिं, तहा अस्संजमंमि अ । जे भिक्खू जयई० ॥ ११४७ ॥

गाथाध्ययनं षोडशमेषामिति गाथाषोडशकानि, सुब्व्यत्ययात्तेषु समयवेतालीयादिसूत्रकृदाद्यश्रुतस्कन्धाध्ययनेषु, तथा असंयमः सप्तदशभेदस्तत्प्रतिपक्षस्य संयमस्य सप्तदशभेदत्वात्तस्मिंश्च यतते, एकत्र तदुक्तानुष्ठानतोऽन्यत्र तु परिहारतः ॥ १३ ॥ ११४७ ॥

बंभंमि नायज्झयणेसु, ठाणेसु यऽसमाहिए । जे भिक्खू जयई० ॥ ११४८ ॥

ब्रह्मणि ब्रह्मचर्ये अष्टादशविधे, यदुक्तं–"ओरालीअं च दिव्वं मणवयकाएण करणजोएणं । अणुमोयणकारावणकरणाणद्वारसाबंभं ॥ १ ॥" ज्ञातानि–उदाहरणानि, तत्प्रतिपादकानि अध्ययनानि उत्क्षिप्तज्ञातादीन्येकोनविंशतिस्तेषु, स्थानेषु–

आश्रयेषु कस्येत्याह–समाधि –ज्ञानादिषु चित्तैकाग्र्य न समाधि तस्य, तानि च द्रुत द्रुत गमनादीनि विंशति , यतते–रक्षा परिज्ञानपरिहारादिभि ॥ १४ ॥ ११४८ ॥

इक्कवीसाए सबलेसु, बावीसाए परीसहे । जे भिक्खू जयई० ॥ ११४९ ॥

एकविंशतौ शबलयन्ति–कर्बुरीकुर्वन्ति चारित्रमिति शबला –क्रियाविशेषा हस्तकर्ममैथुनसेवनादय , द्वाविंशतौ परीषहे यतते–परिहाराधिसहनादिभि ॥ १५ ॥ ११४९ ॥

तेवीसईसुयगडे, रूवाहिएसु सुरेसु ( देवेसु पा० ) य । जे भिक्खू जयई० ॥ ११५० ॥

पणवीसाए भावणासु च, उद्देसेसु दसाइणं । जे भिक्खू जयई० ॥ ११५१ ॥

त्रयोविंशत्यध्ययनयोगात्त्रयोविंशति तच्च तत्सूत्रकृत तस्मिन्, रूपम्–एकस्तेनाधिका प्रक्रमात्सूत्रकृताध्ययनेभ्यो रूपाधिकाश्चतुर्विंशतिस्तेषु सुरेषु “भवणवणजोइवेमाणिआ य दस अट्ठ पंच एगविहा । इअ चउवीस देवा केई पुण बिंति अरहंता ॥१॥” यतते यथावत्प्ररूपणया, पञ्चविंशतौ सुब्व्यत्ययाद्भावनासु–मनोगुप्त्यादिमहाव्रतविषयासु, उद्देशेष्वित्युपलक्षणत्वात् उद्देशनकालेषु दशादीनां दशाश्रुतस्कन्ध कल्प व्यवहाराणां षड्विंशतिसङ्ख्येष्विति शेष , यतते सर्वदापरिभवनामल्पणाकालग्रहणादिभि ॥ १६, १७ ॥ ११५०–५१ ॥

अणगारगुणेहि च, पगप्पमि तहेव य । जे भिक्खू जयई० ॥ ११५२ ॥

अनगारगुणा व्रतषट्केन्द्रियनिग्रहादयः२७स्तेषु च, उक्त हि–“वयछक्कमिंदिआण च निग्गहो भावकरणसच्च च । खमया

विरागयावि अ मणमाईणं णिरोहो य ॥ १ ॥ कयाण छक्क जोगम्मि जुत्तया वेयणाहिआसणया । तह मारणंतिअहियासणा य एएऽणगारगुणा ॥ २ ॥" प्रकृष्टः कल्पो-यतिव्यवहारो यस्मिन्नसौ प्रकल्पः, स चेह आचाराङ्गमेव शस्त्रपरिज्ञाद्यष्टाविंशत्यध्ययनात्मकं तस्मिन्, मासिक्याद्यारोपणात्मके वा समवायाङ्गाभिहिते अष्टाविंशतिविधे प्रकल्पे, तथैव-तेनैव यथावदासेवनाप्ररूपणादिप्रकारेण तुः समुच्चये यतते ॥ १८ ॥ ११५२ ॥

पावसुयपसंगेसु [ य ] मोहट्ठाणेसु चेव य । जे भिक्खू जयई० ॥ ११५३ ॥



पापहेतुश्रुतेषु प्रसङ्गाः तथाविधासक्तिरूपास्तेषु पापश्रुतप्रसङ्गेषु, "अट्ठनिमित्तंगाइं दिव्वुप्पायंतलिक्ख भोमं च ।" इत्याद्येकोनत्रिंशत्सु, मोहो-मोहनीयं तिष्ठति, कोऽर्थः ?, निमित्ततया वर्त्तते, एतेष्विति मोहस्थानानि तेषु 'वारिमध्यावमग्नत्रसप्राणमारणादिषु' त्रिंशत्सु यो भिक्षुर्यतते तत्परिहारतः ॥ १९ ॥ ११५३ ॥

सिद्धाइगुणजोगे( प्र० जुत्ते )सु, तित्तीसासायणासु य । जे भिक्खू जयई० ॥ ११५४ ॥

सिद्धानामादौ प्रथमकाले एवातिशायिनो वा गुणाः सिद्धादिगुणाः सिद्धातिगुणा वा एकत्रिंशत्, यदुक्तं-"पडिसेहणसंठाणे वण्ण गंधरसफासवेए य । पणपणदुपणट्ठतिहा इगतीसमकायऽसगऽरुहा ॥ १ ॥" योगा-योगसङ्ग्रहा ३२ द्वन्द्वे तेषु, त्रयस्त्रिंशत्सङ्ख्यासु आशातनासु च, "अरिहंताणं आसायणाए" इत्यादिषु "पुरओ पक्खासन्ने" इत्यादिषु वा यतते, सम्यक्श्रद्धानासेवनवर्जनादिना ॥ २० ॥ ११५४ ॥

अध्ययनार्थं निगमयन्नाह—

इइ एएसु जे भिक्खू, ठाणेसु जयई सया । खिप्पं से सव्वसंसारा, विप्पमुच्चइ पंडिए ॥ ११५५ ॥ त्तिबेमि

॥ चरणविहिज्ज ॥ ३१ ॥

इत्यनेन प्रकारेण एतेषु पूर्वोक्तरूपेषु स्थानेषु असंयमादिषु यो यतते उक्तनीत्या सदा क्षिप्रं स ॥ २१ ॥ ११५५ ॥

इति चरणविधिनामाध्ययनावचूरि ॥ ३१ ॥

॥ इति श्रीउत्तराध्ययने एकत्रिंशत्तमस्य चरणविधिनामाध्ययनस्य अवचूरि समाप्ता ॥

चरणविधेराचरणफलम्

# अथ प्रमादस्थानाख्यं द्वात्रिंशमध्ययनम् ।

अनन्तरं चरणमुक्तं, तच्च प्रमादस्थानपरिहारत एवासेवितुं शक्यं, स च तत्परिज्ञानपूर्वक इति तदर्थमिदमारभ्यते, अस्य नाम प्रमादस्थानं—

अचंतकालस्स समूलयस्स, सव्वस्स दुक्खस्स उ जो प(प्र० उ)मोक्खो ।
तं भासओ मे पडिपुन्नचित्ता !, सुणेह एगग्ग(गंत पा०)हियं हियत्थं ॥ ११५६ ॥

अन्तमतिक्रान्तोऽत्यन्तो, वस्तुतश्च द्वावन्तौ—आरम्भक्षणो निष्ठाक्षणश्च, तत्रेहारम्भक्षणलक्षणोऽन्तो गृह्यते, ततोऽनादिः कालो यस्यासावत्यन्तकालस्तस्य, समूलेन—कषायाविरतिरूपेण वर्त्तत इति समूलकस्तस्य, उक्तं च—"मूलं संसारस्स उ हुंति कसाया अविरती य," सर्वस्य—अशेषस्य दुःखयतीति दुःखं—संसारस्तस्य, तोरेवार्थस्य भिन्नक्रमत्वात् यः प्रमोक्ष एव—अपगम एव तं भाषमाणस्य यथाऽसौ स्यात्तथा ब्रुवाणस्येत्यर्थः, मे—मम प्रतिपूर्णं—विषयान्तरागमनेनाखण्डितं चित्तं येषां ते प्रतिपूर्णचित्ताः शृणुत—आकर्णयत एकान्तहितं, हितस्तत्त्वतो मोक्ष एव, तदर्थम् ॥ १ ॥ ११५६ ॥

यथाप्रतिज्ञातमाह—

णाणस्स सव्व(च पा०)स्स पगासणाए, अन्नाणमोहस्स विवज्जणाए ।
रागस्स दोसस्स य संखएणं, एगंतसुक्खं समुवेइ मोक्खं ॥ ११५७ ॥



श्रवणप्रति शिष्यप्रेरणम्

ज्ञानस्य–मत्यादे सर्वस्य प्रकाशनया–निर्मलीकरणेनेत्यर्थ , अनेन ज्ञानात्मको मोक्षहेतुरुक्त , तथा अज्ञान-मत्यज्ञानादि मोहो-दर्शनमोहनीयमनयो समाहारोऽज्ञानमोह तस्य विवर्जना–परिहारो मिथ्याश्रुतश्रवणकुदृष्टिसङ्गपरित्यागादिना तया, अनेन स एव सम्यग्दर्शनात्मक उक्त , तथा रागस्य द्वेषस्य च सक्षयेण–विनाशेन, एतेन तस्यैव चारित्रात्मकस्याभिधान, रागद्वेषयोरेव कपायरूपत्वेन तदुपघातकत्वाभिधानात्, ततश्चायमर्थ -सम्यग्दर्शनज्ञानचारित्रैरेकान्तसौख्य–दु खलेशाकलङ्कितसुख समुपैति मोक्ष–अपवर्ग, अय च दु खप्रमोक्षाविनाभावीत्यनेन स एवोपलक्षित ॥ २ ॥ ११५७ ॥

तत्त्वतस्तु ज्ञानादिभिर्दु खप्रमोक्ष , परममीषा क प्राप्तिहेतु ?, उच्यते—

तस्सेस मग्गो गुरुविद्धसेवा, विवज्जणा वालजणस्स दूरा ।
सज्झायएगंतनिसेवणा य ( निवेसणाए पा० ),सुत्तत्थसचिंतणया धिई य ॥ ११५८ ॥

एका तमोक्षो पाये ज्ञान प्राप्त्युपाय

तस्य प्रागुक्तस्य मोक्षोपायस्य एप वक्ष्यमाणो मार्ग –पन्था प्राप्तिहेतु , यदुत गुरवो वृद्धाश्च–श्रुतपर्यायादिवृद्धास्तेश सेवा–पर्युपासना गुरुवृद्धसेवा, इय च गुरुकुलवासोपलक्षण, तत्र च सुप्रापाण्येव ज्ञानादीनि, यदुक्त–"नाणस्स होइ भागी थिरयरओ दसणे चरित्ते अ । धन्ना आवकहाए गुरुकुलवास न मुचति ॥ १ ॥" सत्यपि च गुरुकुलवासे कुससर्गतो न स्यादेतत्-प्राप्तिरित्याह–विवर्जना–परिहार वालजनस्य–पार्श्वस्थादे दूराद्–दूरेण, तत्सङ्गस्याप्यल्पीयसो महादोषहेतुत्वेनोक्तत्वात्, तत्परिहारोऽपि च न स्वाध्यायतत्परता विना ज्ञानाद्यवाप्तिरित्याह–स्वाध्यायस्यैकान्तेन निषेवणा–निश्चयेन अनुष्ठान, स्वाध्यायै-

कान्तनिषेवणा, सा च तत्राप्यनुप्रेक्षैव प्रधानेत्याह—सूत्रस्यार्थः—अभिधेयः, सूत्रार्थस्तस्य संचिन्तना सूत्रार्थसंचिन्तना, अस्यामपि न चित्तस्वास्थ्यं विना ज्ञानादिलाभ इत्याह—धृतिश्च—चित्तस्वास्थ्यं चित्तानुद्विग्नतेत्यर्थः ॥ ३ ॥ ११५८ ॥

यतश्चैवंविधो ज्ञानादिमार्गः तत एतानीच्छता प्राक् किं विधेयमित्याह—

आहारमिच्छे मियमेसणिज्जं, सहायमिच्छे निउणत्थ( णेह पा० )बुद्धिं ।
निकेयमिच्छिज्ज विवेगजोग्गं, समाहिकामे समणे तवस्सी ॥ ११५९ ॥

आहारं—अशनादि कमपेक्षणीयत्वात् इच्छेदपि—अभिलषेदपि मितमेषणीयमेव, आदानभोजने तु दूरापास्त एव, एवंविधाहार एव हि प्रासुकगुरुकुलवासादिसेवनादिज्ञानादिकारणान्याराधयितुं क्षमः, तथा सहायं—सहचरं इच्छेदन्तेवासिनं सतीर्थ्यं वा, निपुणा—कुशला अर्थेषु—जीवादिषु बुद्धिर्यस्येति तं, अनीदृशो हि सहायः स्वास्थ्यव्यपदेशादिना ज्ञानादिहेतुगुरुकुलसेवादिभ्रंशमेव कुर्यात्, निकेतनं—आश्रयमिच्छेत्, विवेकः स्त्र्यादिसंसर्गाभावस्तस्मै योग्यं—उचितं तदापाताद्यसम्भवेन विवेकयोग्यं, अविविक्ताश्रये हि रागादिसंभवाच्चित्तविप्लवोत्पत्तौ कुतो गुरुकुलसेवादिज्ञानादिकारणसंभवः ?, समाधिः—ज्ञानादीनां परस्परमबाधयावस्थानं तं कामयते—अभिलषतीति समाधिकामो—ज्ञानाद्यासक्त इत्यर्थः, श्रमणः—तपस्वी ॥ ४ ॥ ११५९ ॥

कालादिदोषत एवंविधसहायासंप्राप्तौ यत्कृत्यं तदाह—

न वा ( प्र० या ) लभिज्जा निउणं सहायं, गुणाहियं वा गुणओ समं वा ।
एगोवि पावाइ विवज्जयं( अणागयं पा० )तो, विहरेज्ज कामेसु असज्जमाणो ॥ ११६० ॥



समाध्यर्थं
साधुकर्तव्य-
निरूपणम्

वा–चेदर्थे ततो न चेत् लभेत्–न प्राप्नुयात् निपुण–निपुणबुद्धिं सहाय गुणै –ज्ञानादिभिरधिक गुणाधिक वा गुणतो–ज्ञानादिगुणानाश्रित्य सम वा–तुल्य, उभयत्रात्मन इति गम्य, वेति विकल्पे, तत किमित्याह–एकोऽपि–असहायोऽपि पापानि–पापहेत्वनुष्ठानानि विवर्जयन्–विशेषेण परिहरन् विहरेत्–सयमाध्वनि यायात् कामेषु–विषयेषु असजन्–प्रतिबन्धमकुर्वन्, तथाविधगीतार्थयतिविषय चेद, अन्यथैकाकिविहारस्यागमेषु निषिद्धत्वात् ॥ ५ ॥ ११६० ॥

इत्थ ज्ञानादीना दु खप्रमोक्षोपायत्वमुक्त्वेदानीं तेषामपि मोहादिक्षयहेतुत्वात्तत्क्षयस्यैव प्राधान्येन दु खप्रमोक्षहेतुत्व-ख्यापनार्थं यथा तेषा सम्भवो यथा च दु खस्य प्रसङ्गस्तेषा चाभावस्तथा वक्तुमाह—

जहा य अडप्पभवा बलागा, अड बलागप्पभव जहा य।

एमेव मोहाययण खु तण्ह, मोह च तण्हाययण वयति ॥ ११६१ ॥

यस्यैवार्थत्वात् यथैव–येन प्रकारेण अण्डप्रभवा बलाका, अण्ड च बलाकात प्रभवतीति बलाकाप्रभव यथा च, कोऽर्थ –यथा अनयो परस्परमुत्पत्तिस्थानता एवमेव–अनेनैव प्रकारेण मोह –अज्ञान, तच्चेह मिथ्यात्वदोपदुष्ट ज्ञानमेव गृह्यते, आयतन–उत्पत्तिस्थान यस्या सा मोहायतना ता, खुरेवार्थे, ततो मोहायतनामेव तृष्णा वन्दतीति योग , यथोक्तमोहाभावे ह्यवश्यम्भावी तृष्णाक्षय इति, मोह च तृष्णाऽऽयतन यस्यासौ तृष्णायतनस्त वदन्ति, तृष्णा हि सति वस्तुनि मूर्च्छा, सा चात्यन्त-दुस्त्यजेति रागप्रधाना, ततस्तयो राग उपलक्ष्यते, सति तत्र द्वेषोऽपि स्यादिति तृष्णाग्रहणेन रागद्वेषौ उक्तौ, एतयोश्चानन्तानु

मोहतृष्णा

वन्धिकपायरूपयोः सत्तायां अवश्यम्भावी मिथ्यात्वोदयः, तत्र सिद्ध एवाज्ञानरूपो मोहः, एतेन च परस्परं हेतुहेतुमद्भावाभिधानेन यथा रागादीनां सम्भवस्तथोक्तम् ॥ ६ ॥ ११६१ ॥

अथ यथैतेषां दुःखहेतुत्वं तदाह—

रागो य दोसोवि य कम्मवीयं, कम्मं च मोहप्पभवं वयंति ।
कम्मं च जाईमरणस्स मूलं, दुक्खं च जाईमरणं वयंति ॥ ११६२ ॥

रागश्च—मायालोभात्मकः द्वेषोऽपि च—क्रोधमानात्मकः, कर्मणो बीजं—कारणं कर्मबीजं, कर्म चस्य भिन्नक्रमत्वात् मोहात् प्रभवतीति मोहप्रभवं च—मोहकारणं वदन्ति, चः सर्वत्र समुच्चये, कर्म चेति पुनः जातयश्च मरणानि च जातिमरणं तस्य मूलं—कारणं दुःखं—दुःखहेतुं, चस्य पुनरर्थस्य भिन्नक्रमत्वात् जातिमरणं पुनर्वदन्ति तीर्थकराद्या इति गम्यं, जातिमरणस्यैवातिशयदुःखोत्पादकत्वात्, यदुक्तं—"मरमाणस्स जं दुक्खं, जायमाणस्स जंतुणो । तेण दुक्खेण संतत्तो, न सरति जातिमप्पणो ॥ १ ॥" ॥ ७ ॥ ११६२ ॥

यतश्चैवमतः किं स्थितमित्याह—

दुक्खं हयं जस्स न होइ मोहो, मोहो हओ जस्स न होइ तण्हा ।
तण्हा हया जस्स न होइ लोभो, लोभो हओ जस्स न किंचणाइं( णत्थि पा० ) ॥ ११६३ ॥

दुःखं—संसारमसातं वा, हतमिव हतं, केनेत्याह—यस्य न भवति मोहः, मोहस्यैव तन्मूलहेतुत्वात्, ततो हि कर्म, कर्मणश्च दुःखमित्यनन्तरमेवोक्तं, मोहो हतो यस्य न भवति तृष्णा, कोऽर्थः ?, तृष्णाया अभावान् मोहाभावः, तृष्णाया अपि कुतो हनन-



दुःखहेतु-
र्मोहः तत्क्ष-
यसाधना-
नि च

भित्याह—तृष्णा हता भवति न यस्य लोभ', कोऽर्थो ? लोभाभावात्तृष्णाभावः, स तर्हि केन हत इत्याह—लोभो हतो यस्य न
किञ्चनानि द्रव्याणि सन्तीति गम्यम् ॥ ८ ॥ ११६३ ॥ सन्त्वेव तु खस्य मोहादयो हेतवो, हननोपायस्तेषा किमयमेवोतान्यो
ऽपीत्याशङ्क्य सविस्तर तदुन्मूलनोपाय विवक्षु प्रस्तावमारचयति,

राग च दोस च तहेव मोह, उद्धत्तुकामेण समूलजाल।

जे जे उवाया पडि( अपाया परि पा० )वज्जियव्वा, ते कित्तइस्सामि अहाणुपुव्विं ॥ ११६४ ॥ तथा उद्धर्तु-

स्पष्टा, नवर, यदिह रागस्य प्रागुपादान पूर्वं तु मोहस्य तदेपा परस्परायतनत्वेन पूर्वापरभावस्यानियमात्, तथा उद्धर्तु-
कामेन—उन्मूलयितुमिच्छता सह मूलानामिव मूलाना—तीव्रकषायोदयादीना जालेन—समूहेन वर्त्तत इति समूलजालस्त, एतच्च
रागादीनां प्रत्येक विशेषण, ये ये उपायास्तदुद्धरणहेतव प्रतिपत्तव्या —अङ्गीकर्त्तव्या कर्तुमिति शेप ॥ ९ ॥ ११६४ ॥

यथाप्रतिज्ञामाह—

रसा पगाम न हु सेवियव्वा, पाय रसा दित्ति( त्त प्रा० )करा नराण ।

दित्त च कामा समभिद्दवंति, दुम जहा साउफल व पक्खी ॥ ११६५ ॥

रसा इत्यादि गाथा ११, रसा —क्षीरादिविकृतय प्रकाम—अत्यर्थं न निषेवितव्या—नोपभुक्तव्या , प्रकामग्रहण तु वातादि-
क्षोभनिवारणाय रसा निषेवितव्या एव, निष्कारणनिषेवणस्य तु निषेध इति ख्यापनार्थं, उक्त च—"अच्चाहारो न सहेइ अति
निद्धेणे विसया उदिज्जति । जायामायाहारो तपि पगाम न भुंजामि ॥ १ ॥" किमित्येवमुपदिश्यते इत्याह—यत प्राय —बाहुल्येन

रागद्वेषमोहानामुन्मूलनोपाया

रसा निषेव्यमाणा इति गम्यं दृप्तिः—धातूद्रेकस्तत्करणशीला दृप्तिकराः, यद्वा दीप्ति-दीपनं-मोहानलज्वलनं तत्करणशीला दीप्तिकराः, नराणामुपलक्षणात् स्त्रीणां च, उदीरयन्ति हि ते उपभुक्तास्तेषां मोहानलमिति, एवं च को दोष इत्याह—दृप्तं दीप्तं वा नरमिति प्रक्रमो, जातिविवक्षया वहुवचनप्रक्रमेऽपि एकवचनं, चः—पुनः कामाः—विषयाः समभिद्रवन्ति-अभिभवन्ति, कमिव क इवेत्याह—द्रुमं यथा स्वादुफलं—मधुरफलान्वितं, ( इव ) इति भिन्नक्रमस्ततः पक्षिण इव, इह च द्रुमोपमो नरादिः, स्वादुफलतातुल्यं च दृप्तत्वं दीप्तत्वं वा, पक्षिसदृशाश्च कामा इति, अनेन रसप्रकामभोजने दोष उक्तः ॥ १० ॥ ११६५ ॥

सम्प्रति सामान्येन प्रकामभोजने दोषमाह—

जहा दवग्गी पउरिंधणे वणे, समारुओ नोवसमं उवेइ ।
एविंदियग्गीवि पगामभोइणो, न बंभायरिस्स हियाय कस्सई ॥ ११६६ ॥

प्रकामरस-भोजने दोषाः

यथा दवाग्निः प्रचुरेन्धने वने—अरण्ये, वसति हि कश्चित् विध्यापकोऽपि स्यादित्येतदुपादानं, समारुतः—सवायुः नोपशमं—विध्यानमुपैति—प्राप्नोति, एवं दवाग्निवन्नोपशाम्यति, इन्द्रियशब्देन इन्द्रियजनितो राग एवोक्तस्तस्यैवानर्थहेतुत्वेनेह चिन्त्यमानत्वात्, सोऽग्निरिव धर्मवनदाहकत्वादग्निरिन्द्रियाग्निः, सोऽपि प्रकामभोजिनः—अतिमात्राहारस्य, प्रकामभोजनस्य पवनसाम्यत्वेनातीव तदुदीरकत्वाद् , अतश्चायं न ब्रह्मचारिणो हिताय—हितनिमित्तं, ब्रह्मचर्यविघातकत्वात्, कस्यचित् अतिसुस्थितस्यापि, तदनेन प्रकामभोजनस्य काक्वा परिहार्यत्वमुक्तम् ॥ ११ ॥ ११६६ ॥

इत्थ रागमुद्धर्तुकामेन यत्त्याज्य तदुक्त्वा यदतियत्नेन कर्तव्य तदाह—

विवित्तसिज्जासणजंतियाण, ओमासणाण ( ई पा० ) दमिइंदियाण ।
न रागसत्तू धरिसेइ चित्त, पराइओ वाहिरिवोसहे हिं ॥ ११६७ ॥

विविक्ता—स्त्र्यादिविकला शय्या—वसतिस्तस्यामासन तेन यन्त्रितास्तेषा, अवमाशनाना—न्यूनभोजनाना, दमितानि—वशीकृतानीन्द्रियाणि यै तथा तेषा दमितेन्द्रियाणा, न—नैव राग शत्रुरिवाभिभवहेतुतया रागशत्रुर्धर्षयति—पराभवति, किं तत्?, चित्त, किंतु स एवेत्थ पराधृष्यते इति भाव , क इव?—पराजित —पराभूतो व्याधिरिव—कुष्ठादि औषधै गुडूच्याद्यैर्देहमिति गम्यम् ॥ १२ ॥ ११६७ ॥

इन्द्रियजये स्त्र्यादिविकला वसति

अनेन विविक्तशय्यादीना काक्वा विधेयत्वमुक्त, इदानीं विविक्तशय्यासने यत्नाधानाय विपर्यये दोषमाह—

जहा बिरालावसहस्स मूले, न मूसगाण वसही पसत्था ।
एमेव इत्थीनिलयस्स मज्झे, न बंभयारिस्स खमो निवासो ॥ ११६८ ॥

यथा बिडालावसथस्य—मार्जारवसतेर्मूले—पार्श्वे न मूषकाणा वसति प्रशस्ता, अवश्य तत्र तदपायसम्भवात्, एवमेव स्त्रीणा पण्डकाद्युपलक्षणमेतत् निलयो—निवास स्त्रीनिलयस्तस्य मध्ये—अन्त न ब्रह्मचारिण क्षमो—युक्तो निवासो—वसति, तत्र ब्रह्मचर्यबाधासम्भवादिति भाव ॥ १२ ॥ ११६८ ॥

विविक्तशय्यावस्थितावपि कदाचित् स्त्रीसम्पाते यत्कृत्यं तदाह—

न रूवलावण्णविलासहासं, न जंपियं इंगिय पेहियं वा।
इत्थीण चित्तंसि निवेसइत्ता, दट्ठुं ववस्से समणे तवस्सी ॥ ११६९ ॥

न-नैव रूपं-सुस्थानता लावण्यं-नयनमनसां आह्लादको गुणः, विलासाः विशिष्टनेपथ्यरचनादयः हासः-कपोलविकासादिरेषां समाहारे रूपलावण्यविलासहासं, न जल्पितं-मन्मनोल्लापादि, इङ्गितं-अङ्गभङ्गादि-प्राकृतत्वात् विन्दुलोपः, प्रेक्षितं-कटाक्षवीक्षितादि, वा समुच्चये, स्त्रीणां सम्बन्धि चित्ते निवेश्य-अहो सुन्दरमिदमिदं चेति विकल्पतः स्थापयित्वा द्रष्टुं-इन्द्रियविषयतां नेतुं व्यवस्येत्-अध्यवस्येदिति योगः, चित्ते निवेश्येत्यनेन च रागाद्यभिसन्धिं विना एतदर्शनमपि न दोषायेति ख्याप्यते, निवेश्येति च समानकालत्वेऽपि क्त्वाप्रत्ययो'ऽक्षिणी निमील्य हसती'त्यादिवत् ॥ १४ ॥ ११६९ ॥

स्त्रीसंपाते दृष्टिनिमीलनं

किमेवमुपदिश्यते इत्याह—

अदंसणं चेव अपत्थणं च, अचिंतणं चेव अकित्तणं च।
इत्थीजणस्सारियझाणजुग्गं, हियं सया बंभवए (चेरे पा०) रयाणं ॥ ११७० ॥



अदर्शनं-इन्द्रियाविषयीकरणं, चः समुच्चये, एवः-अवधारणे, अदर्शनमेव, अप्रार्थनं च-अनभिलषणं, अचिन्तनं चैव रूपाद्यपरिभावनं अकीर्त्तनं च-अशब्दनं नामतो गुणतो वा स्त्रीजनस्य, आर्यध्यानं-धर्म्यादि तस्य योग्यं-तद्धेतुत्वेनोचितं

आर्यध्यानयोग्य, हित-पथ्य, सदा-सर्वकाल ब्रह्मचर्ये रताना-आसक्ताना, तत स्थितमेतत्-न स्त्रीणा रूपादि मनसि निवेश्य द्रष्टु व्यवस्येत् ॥ १५ ॥ ११७० ॥

ननु-"विकारहेतौ सति विक्रियन्ते, येषा न चेतासि त एव धीरा" तत्किमिति रागमुद्धर्तुकामेन विविक्तशय्यासनता विधेयेत्युच्यते ? इत्याशङ्क्याह—

काम तु देवीहिं विभूसियाइ, न चाइया खोभइउ तिगुत्ता ।
तहावि एगतहियति नचा, विवित्तवासो मुणिण पसत्थो ॥ ११७१ ॥

मुनीना विविक्तशय्या हिताय

काम तुत्ति, अनुमतमेवैतत्, यदुत देवीभिरप्यास्ता मानुषीभिरित्यपेरर्थ, भूषिताभि अलङ्कृताभिर्न-नैव, चाइअत्ति-शक्ता क्षोभयितु-चलयितु सयमादिति गम्य, तिसृभिर्गुप्तिभिर्गुप्तास्त्रिगुप्ता, अर्थात् मुनय, तथापि-यद्यप्येवविधाश्चलयितु न शक्यन्ते तदप्येकान्तहितमेतदिति ज्ञात्वा, कोऽर्थ ?, केचिदत्यन्तयोगिनोऽपि तत्सङ्गात्क्षुभ्यन्ति, ये तत्सङ्गान्न क्षुभ्यन्ति तेऽपि स्त्रीससक्तवसतिवासे "साहु तवो वणवासो" इत्याद्यवर्णादिदोषभाज स्युरिति परिभाव्य विविक्तवासो-विविक्तशय्यासनात्मको मुनीना प्रशस्त -अन्तर्भावितण्यर्थतया प्रशसित, अत स एवाश्रयणीय इति भाव ॥ १६ ॥ ११७१ ॥

एतत्समर्थनार्थमेव स्त्रीणा दुरतिक्रमत्वमाह—

मुक्खाभिकखिस्सवि माणवस्स, ससारभीरुस्स ठियस्स धम्मे ।
नेयारिस दुत्तरमत्थि लोए, जहत्थिओ बालमणोहराओ ॥ ११७२ ॥

मोक्षाभिकाङ्क्षिणोऽपि–मुक्त्यभिलाषिणोऽपि–मानवस्यापि सम्बन्धात्संसारभीरोरपि–संसारात्त्रयनशीलस्यापि, तथा अपेर्योगात् स्थितस्यापि धर्मे नैतादृशमीदृशं, दुस्तरं–दुरतिक्रमं अस्ति, लोके–जगति यथा स्त्रियो बालमनोहरा–निर्विवेकचित्ताक्षेपिण्यः दुस्तराः, दुस्तरत्वे बालमनोहरत्वं हेतुः. ततोऽतिदुस्तरत्वादासां परिहार्यत्वेन विविक्तशय्यासनमेव श्रेय इति भावः ॥ १७ ॥ ११७२ ॥

नन्वेवं स्त्रीसङ्गातिक्रमार्थमयमुपदिष्टस्तथा च शेषसङ्गातिक्रमणार्थमपि किं न कश्चिदुपाय उपदिश्यते ?, इत्याह—

एए य संगा समइक्कमित्ता, सुहुत्तरा चेव हवंति सेसा ।
जहा महासागरमुत्तरित्ता, नई भवे अवि गंगासमाणा ॥ ११७३ ॥

यद्वा स्त्रीसङ्गातिक्रमणे गुणमाह एतांश्च सङ्गान्–सम्बन्धान् प्रक्रमात् स्त्रीविषयान् समतिक्रम्य–उल्लङ्घ्य सुखोत्तराः–सुखोल्लङ्घ्याश्चैव भवन्ति शेषाः–द्रव्यादिसङ्गाः, सर्वसङ्गानां रागरूपत्वे समानेऽपि स्त्रीसङ्गानामेवैतेषु प्राधान्यादिति भावः, दृष्टान्तमाह–यथा महासागरं–स्वयम्भूरमणं उत्तीर्य नदी भवेत्सुखोत्तरैवेति गम्यं, वीर्यातिशययोगत इति भावः, अपि गङ्गासमाना गङ्गा किल महानदी तत्सदृशाप्यास्तामितरा क्षुद्रनदीत्यपेरर्थः ॥ १८ ॥ ११७३ ॥

यदुक्तं–"विवित्तसिज्जासणे"त्यादि, तत्र विविक्तावसथोक्ता. "ओमासणाण"मित्यत्रावमाशनत्वं प्रकामभोजननिषेधेन समर्थितं, दमितेन्द्रियत्वं तूत्तरत्र वक्ष्यत इत्युभयमपेक्ष्य "न रागसत्तू धरिसेइ चित्तं"मित्यत्र किमिति रागपराजयं प्रत्येवमुपदिश्यते ? इत्याशङ्क्य रागस्य दुःखहेतुत्वं दर्शयितुमाह—



स्त्रीसङ्गातिक्रमे शेषसङ्गातिक्रमत्वं सुलभम्

कामाणुगिद्धिप्पभव खु दुक्ख, सव्वस्स लोगस्स सदेवगस्स ।
ज काइय माणसिय च किंचि, तस्संतय गच्छइ वीयरागो ॥ ११७४ ॥

कामेषु-विषयेषु अनुगृद्धि –सतताभिकाङ्क्षा तस्या प्रभवो यस्य सत् कामानुगृद्धिप्रभवमेव खोरेवार्थत्वात्, किं नु? दु ख, समस्य लोकस्य सदेवकस्य-देवान्वितस्य, कतरद्दु खमित्याह–यत्कायिक रोगादि मानसिक चेष्टवियोगादिजन्य किञ्चित्-स्वल्पमपि, कदाचिदेतदभावेऽपि एतत्स्यादत आह–तस्य द्विविधस्यापि दु खस्यान्तक–पर्यन्त गच्छति वीतरागो विगतकामानुगृद्धिरित्यर्थ ॥ १९ ॥ ११७४ ॥

कामानुगृद्ध्या दु खम्

ननु कामा सुखरूपतयैवानुभूयन्ते, तत्कथ कामानुगृद्धिप्रभवमेव दु खमुच्यते—

जहा य किंपागफला मणोरमा, रसेण वन्नेण य भुज्जमाणा ।
ते खुड्डए जीविय पच्चमाणा, एओवमा कामगुणा विवागे ॥ ११७५ ॥

यथा चेति यथैव किम्पाको वृक्षविशेषस्तत्फलानि, अपेर्गम्यत्वात् मनोरमाण्यपि रसेन आस्वादेन वर्णेन-रक्तत्वादिना चाद्गन्धादिना च, भुज्यमानानि ते इति तानि लोकप्रतीतानि क्षोदयितु अध्यवसायाद्यैरुपक्रमकारणैर्विनाशयितु शक्यत इति क्षुद्र तदेवानुकम्प्य क्षुद्रक तस्मिन् सोपक्रमे जीविते-आयुषि पच्यमानानि विपाकावस्था प्राप्तानि मरणान्तदु खदायीनीति शेष, प्राकृतत्वात् लिङ्गव्यत्यय, एतदुपमा –किम्पाकफलतुल्या कामगुणा विपाके फलप्रदानकाले, कोऽर्थः?, यथा हि–तानि उपभुज्य-

मानानि मनोरमाण्यपि विपाके सोपक्रमायुषां मरणहेतुतया अतिदारुणानि, एवं कामा अपि भुज्यमाना मनोरमा अपि विपाके नरकादिदुर्गतिदुःखदायितया अत्यन्तदारुणा एव ॥ २० ॥ ११७५ ॥

एवं बहुगुणस्थानानुयायित्वेन रागस्य प्राधान्यात् केवलस्यैवोद्धरणोपायमुक्त्वा अधुना तस्यैव द्वेषसहितस्य तमभिधित्सुर्दमितेन्द्रियत्वं च व्याचिख्यासुरिदमाह—

जे इंदियाणं विसया मणुण्णा, न तेसु भावं निसिरे कयाई ।
न यामणुन्नेसु मणंपि कुज्जा, समाहिकामे समणे तवस्सी ॥ ११७६ ॥

ये इन्द्रियाणां चक्षुरादीनां विषया—रूपादयः मनोज्ञाः न तेषु विषयेषु अपेर्गम्यत्वात् भावमपि—अभिप्रायमपि प्रस्तावादिन्द्रियाणि च प्रवर्तयितुं, किं पुनस्तत्प्रवर्तनमित्यपेरर्थः, निसृजेत्—कुर्यात् कदाचित्, न चामनोज्ञेषु मनोऽपि, अत्रापीन्द्रियाणि प्रवर्त्तयितुं अप्यर्थः प्राग्वत्, कुर्यात्—विदध्यात्, तदनेन वाक्यद्वयेनापीन्द्रियदम उक्तः, समाधिः—चित्तैकाग्र्यं, स च रागद्वेषाभाव एवेति स एव तेनोपलक्ष्यते, ततस्तत्कामो रागद्वेषोद्धरणाभिलाषी ॥ २१ ॥ ११७६ ॥

इत्थं रागद्वेषोद्धरणैषिणो विषयेभ्यो निवर्त्तनमिन्द्रियाणामुपदिष्टं, अधुना त्वेतेषु तत्प्रवर्तने रागद्वेषानुद्धरणे च यो दोषस्तं प्रत्येकमिन्द्रियाणि तत्प्रसङ्गतो मनश्चाश्रित्य दर्शयितुमाह—

चक्खुस्स रूवं गहणं वयंति, तं रागहेउं तु मणुन्नमाहु ।
तं दोसहेउं अमणुन्नमाहु, समो अ जो तेसु स वीयरागो ॥ ११७७ ॥



तपस्वी दमितेन्द्रियो भवेत्

चक्खुस्सेत्यादि अष्टसप्तति सूत्राणि, तत्रापि चक्षुराश्रित्य त्रयोदश सूत्राणि, चक्षुष –चक्षुरिन्द्रियस्य रूप वर्ण संस्थान वा गृह्यते अनेनेति ग्रहण, कोऽर्थ ?, आक्षेपक, विशिष्टेन हि रूपेण चक्षुराक्षिप्यते वदन्ति–अभिदधन्ति तीर्थकराद्या इति गम्य, तत त्रिमित्याह तद् रूप राग –अभिष्वङ्गस्तद्धेतु तदुत्पादक, तु पूरणे, मनोज्ञमाहु , तथा तद् रूप द्वेषहेतुममनोज्ञमाहु , तत स्तयोश्चक्षु प्रवर्त्तने रागद्वेषसम्भवात्तदुद्धरणाशक्तिलक्षणो दोष इति भाव , आह–एव न कश्चित् सति रूपे वीतराग स्यादत आह–समस्तु–अरक्तद्विष्टतया तुल्य पुनर्य तयोर्मनोज्ञेतररूपयो स वीतराग इव तादृग्रागाभावात् वीतराग , उपलक्षणात् वीतद्वेषश्च, किमुक्त भवति ?, न तावचक्षुस्तयो प्रवर्त्तयेत् , कथञ्चित्प्रवर्त्तने वा समतामेव अवलम्बते इति भाव ॥ २२ ॥ ११७७ ॥

ननु यद्येव रूपमेव रागद्वेषजनक ततस्तदुद्धरणार्थिनस्तद्गतैव चिन्तास्तु, रूपे चक्षुर्न प्रवर्त्तयेदित्येव न तु युक्तैव चक्षुषश्चिन्ता इत्याशङ्क्याह—

रूवस्स चक्खु गहण वयति, चक्खुस्स रूव गहण वयति ।
रागस्स हेउ स( त पा० )मणुन्नमाहु, दोसस्स हेउ अमणुन्नमाहु ॥ ११७८ ॥

रूपस्य चक्षुर्गृह्णाति इति ग्रहण वदन्ति, तथा चक्षुषो रूप गृह्यत इति ग्रहण ग्राह्य वदन्ति, अनेन रूपचक्षुषोर्ग्राह्यग्राहकभाव उक्त , तथा च न ग्राहक विना ग्राह्यत्व, नापि ग्राह्य विना ग्राहकत्वमित्यनयो परस्परमुपकार्योपकारकभाव उक्त स्यात् , अनेन चानयो रागद्वेषजनने सहकारिभाव ख्याप्यते, तथा च यथा रूप रागद्वेषकारण तथा चक्षुरपीत्युक्त स्यात् , अत एव

तत्र चक्षुरिन्द्रिय स्वरूपम्

आह—रागस्य हेतुं—कारणं प्रक्रमाच्चक्षुः सह मनोज्ञेन रूपेण ग्राह्येन वर्त्तत इति समनोज्ञं—मनोज्ञरूपविषयमित्यर्थः, आहुः—ब्रुवते, दोषो—द्वेषस्तस्य हेतुममनोज्ञं अमनोज्ञरूपमाहुः ॥ २३ ॥ ११७८ ॥

इत्थं रागद्वेषोद्धरणोपायमुक्त्वा एतदनुद्धरणे को दोष इत्याह—

रूवेसु जो गिद्धिमुवेइ तिव्वं, अकालियं पावइ सो विणासं ( किलेसं पा० )।
रागाउरे से जहवा पयंगे, आलोअलोले समुवेइ मच्चुं ॥ ११७९ ॥

रूपेषु यो गृद्धिं—रागं उपैति—गच्छति तीव्रां—उत्कटां, स किमित्याह—अकाले भवं अकालिकं—यथास्थित्यायुरूपरमादर्वागेव प्राप्नोति स विनाशं—घातं, रागेणातुरो—विह्वलो रागातुरः सन् स लोकप्रतीतः यथा वेति वाशब्दस्यैवार्थत्वात् यथैव—येनैव प्रकारेण पतङ्गः—शलभः आलोकः—अतिस्निग्धदीपशिखादिदर्शनं तस्मिन् लोलः—लम्पटः समुपैति मृत्युं—प्राणत्यागं, तस्यापि ह्यालोकलोलत्वं राग एवेति भावः ॥ २४ ॥ ११७९ ॥

जे आवि दोसं समुवेइ तिव्वं, तंसि क्खणे से उ उवेइ दुक्खं ( समुवेंति सव्वं पा० )।
दुद्दंतदोसेण सएण जंतू, न किंचि रूवं अवरज्झई से ॥ ११८० ॥

यश्चेति यस्तु, अपि तस्मिन्नित्यत्र योक्ष्यते, दोषं—द्वेषं समुपैति रूपेष्विति गम्यं, तीव्रं, स किमित्याह—तस्मिन्नपि क्षणे—प्रस्तावे यस्मिन् द्वेष उत्पन्नः सः तुः पूरणे उपैति दुःखं—चित्तसन्तापादिकं, यथा द्विष्टो हि किमिदमनिष्टं मया दृष्टमिति मनसा व्याकुलीभवति परितप्यते च देहेन, यदि रूपदर्शनात् द्वेषमुपगच्छन् दुःखमुपैति ततस्तथाविधरूपदोषेणैवास्य तद्धेतुकदुःखावा-



चक्षुरिन्द्रिय-स्वरूपम्

चक्षुरिन्द्रिय-स्वरूपम्

ष्किरिति प्राप्तमित्याशङ्क्याह—दुष्ट दमन दुर्दान्त तच्च प्रक्रमात् चक्षुपस्तदेव दोपो दुर्दान्तदोपस्तेन स्वकेन—आत्मीयेन जन्तु न किञ्चित् स्वल्पमपि रूप प्रक्रमात् अमनोज्ञ अपराध्यति—दुष्यति, से—तस्य, यदि हि रूपमेवापराध्येत् तदा न कस्यचिद्दोपाभाव स्यात्, तथा च मुक्त्यभावादयो दोषा इति भाव ॥ २५ ॥ ११८० ॥

इत्थ रागद्वेपयोर्द्वयोरप्यनर्थहेतुत्वमुक्त अधुना द्वेपस्यापि रागहेतुकत्वात्स एव महानर्थमूलमिति दर्शयस्तस्य विशेपत परिहर्त्तव्यतामाह—

एगतरत्तो रुइरसि रूवे, अतालिसे से कुणई पओस ।
दुक्खस्स सपीलमुवेइ बाले, न लिप्पई तेण मुणी विरागे ॥ ११८१ ॥

एकान्तरक्तो यो न कथञ्चित् विराग याति रुचिरे रूपे, किमित्याह—अताद्दशे—अन्यादृशे स करोति, प्रदोप—द्वेप सुदरी नद इव सुरसुन्दरीरागात्सुन्दर्यां, तथा च दु खस्य सपीडन—सङ्घात उपैति बाल—अज्ञ, उक्तमेवार्थ व्यतिरेकेणाह—न लिप्यते—न श्लिष्यते तेन द्वेपकृतदु खेन मुनि विरागो—रागरहित ॥ २६ ॥ ११८१ ॥

सम्प्रति रागस्यैव पापकर्महेतुता वक्तु हिंसाद्याश्रवनिमित्तता पुनरिहैव तद्द्वारेण दु खजनकत्व च सूत्रषट्केनाह—

रुवाणुगासा( चाया पा० )णुगए य जीवे, चराचरेहिं सयणेगरूवे ।
चित्तेहिं ते परियावेइ बाले, पीलेइ अत्तट्ठगुरू किलिट्ठे ॥ ११८२ ॥

रूप प्रस्तावात् मनोज्ञ अनुगच्छति रूपानुगा सा चासौ आशा च रूपानुगाशा, रूपविपयोऽभिलाप इत्यर्थ, तदनुगतश्च

जीवः, चराचरान्–त्रसस्थावरान् हिनस्ति–विनाशयति, अनेकरूपान्–जात्यादिभेदादनेकविधान्, कांश्चित्तु चित्रैः–अनेकप्रकारैः स्वकायपरकायशस्त्रादिभिरूपायैरिति गम्यं, तान् चराचरजीवान् परितापयति–सर्वतो दुःखयति, अपरांश्च पीडयति, एकदेश-दुःखोत्पादनेन, आत्मार्थ गुरुः–स्वप्रयोजननिष्ठः क्लिष्टो–रागबाधितः ॥ २७ ॥ ११८२ ॥

अन्यच्च—

रूवाणुवाएण ( रागेण पा० ) परिग्गहेण, उप्पायणे रक्खणसंनिओगे ।
वए विओगे य कहं सुहं से, संभोगकाले य अतित्त(त्ति पा०)लाभे ? ॥ ११८३ ॥

चक्षुरिन्द्रिय-
स्वरूपम्

रूपविषयोऽनुतापः–अनुरागो रूपानुपातः तस्मिंश्च सति, णः पूरणे, परिग्रहेण–मूर्च्छात्मकेन हेतुना उत्पादने–उपार्जने रक्षणं च–अपायेभ्यो निवारणं, संनियोगश्च–स्वपरप्रयोजनेषु सम्यग्व्यापारणं रक्षणसंनियोगं तस्मिन्, व्यये–विनाशे वियोगे–विरहे सतोऽप्यनेककारणजनिते, सर्वत्र रूपस्येतिप्रक्रमः, क्व सुखं ?, न क्वचित्, किं तु सर्वत्र दुःखमेवेति भावः, से–तस्य जन्तोः, इयमत्र भावना–रूपमूर्च्छितो हि रूपवद्गजाश्वकलत्रादीनामुत्पादनरक्षणार्थं, तेषु क्लेशहेतूपायेषु जन्तुः प्रवर्त्तते, प्रवर्त्त्य च तद-पायाशङ्कया पुनः पुनः परितप्यत एवेति सिद्धमेवास्योत्पादनादिषु दुःखं, मा भूत्, उत्पादनादिषु रूपस्य सुखं, सम्भोगकाले तु भावीत्याशङ्क्याह–सम्भोगकाले च उपभोगप्रस्तावे च अतृप्तिलाभे–तृप्तिप्राप्त्यभावे सति, क्व सुखमिति सम्बन्धः, उत्तरोत्तरेच्छया हि परितप्यत एव रागी ॥ २८ ॥ ११८३ ॥

आह–एव परिग्रहाद् दु खमनुभवतस्तद्वीरुतया, ततो निवृत्तिर्दोषान्तरानारम्भो वा किमस्य स्यादित्याशङ्कयाह—

रूवे अतित्ते अ परिग्गहम्मि, सत्तोवसत्तो न उवेइ तुट्ठिं ।
अतुट्ठिदोसेण दुही परस्स, लोभाविले आययई अदत्त ॥ ११८४ ॥

रूपेऽतृप्तश्च परिग्रहे च–तद्विषयमूर्च्छात्मके सक्त –सामान्येनाऽऽसक्तिमान्, उपसक्तश्च–गाढ आसक्तस्तत सक्तश्च–पूर्वमुपसक्तश्च पश्चात् सक्तोपसक्तो नोपैति–नोपगच्छति, तुष्टि–सन्तोष, तथा चातुष्टिरेव दोपस्तेनातुष्टिदोपेण दु खी–यदि ममेदमिद च रूपवद्वस्तु स्याद् इत्याकाङ्क्षातोऽतिशयदु खवान् सन्, परस्य–अन्यस्य सम्बन्धि रूपवद्वस्त्विति गम्य, यद्वा परेषा स्व परस्व प्रक्रमात् रूपवद्वस्तु तस्मिन् लोभो–गार्ध्यं तेनाविल –कलुष परस्वलोभाविल आदत्ते–गृह्णाति अदत्त परकीयमेव रूपवस्त्विति गम्य, अनेन विशेषत परिग्रह आसक्तिरूपदोषान्तरारम्भ उक्त ॥ २९ ॥ ११८४ ॥

तत्किमस्यैतावानेव दोष उतान्योऽपीत्याशङ्कयोक्तदोषानुवादेन दोषान्तरमेवाह—

तण्हाभिभूयस्स अदत्तहारिणो, रूवे अतित्तस्स परिग्गहे य ।
मायामुसं वड्ढइ लोभदोसा, तत्थावि दुक्खा न विमुच्चई से ॥ ११८५ ॥

तृष्णाभिभूतस्य–लोभपराजितस्य, तत एवादत्त हरति–गृह्णातीत्येवशीलोऽदत्तहारी तस्य, तथा रूपे–रूपविषयो य परिग्रह स्तस्मिन्निति योग , चस्य भिन्नक्रमत्वात् अतृप्तस्य च, तत्रासन्तुष्टस्य मायाप्रधान मृषा–अलीकभाषण मायामृषा वर्द्धते–वृद्धि याति, कुतो ?, लोभदोषात्–लोभापराधात्, लुब्धो हि परस्वमादत्ते, आदाय च तद्गोपनपरो मायामृषा वक्ति, तदनेन लोभ

चक्षुरिन्द्रिय-
स्वरूपम्

एव सर्वाश्रवाणां मुख्यो हेतुरित्युक्तं, तथा रागप्रक्रमेऽपि सर्वत्र लोभाभिधानं रागेऽपि लोभांशस्यैवातिदुष्टत्वावेदकं, तत्रापि को दोष इत्याह–तत्रापि मृषाभाषणेऽपि दुःखात् न विमुच्यते–न विमुक्तिमाप्नोति, किंतु दुःख्येव स्यात् ॥ ३० ॥ ११८५ ॥

दुःखाविमुक्तिमेव भावयति—

मोसस्स पच्छा य परत्थओ य, पओगकाले य दुही दुरंते।
एवं अदत्ताणि समायअंतो, रूवे अतित्तो दुहिओ अणिस्सो ॥ ११८६ ॥

मोसस्सत्ति अनृतभाषणस्य, पश्चाच्चेदमिदं चेत् मया सुसंस्थापितमुक्तमिति पश्चात्तापः पुरस्ताच्च कथमयं मया वञ्चनीय इति चिन्ताव्याकुलत्वेन प्रयोगकाले च–तद्भाषणप्रस्तावे च नासौ ममालीकभाषितां लक्षिष्यतीति क्षोभतः दुःखी सन्, तथा दुष्टोऽन्तः–पर्यवसानमिहानेकविडम्बनातो विनाशेनाऽमुत्र च नरकादिप्राप्त्या यस्यासौ दुरन्तो भवेत् जन्तुरिति गम्यं, तदेवं मृषाद्वारेणादत्तादानस्य दुःखहेतुत्वमुक्तं, यद्वा मोसस्सत्ति मोषस्य–स्तेयस्येति व्याख्या तदा साक्षादेव तस्य दुःखहेतुत्वोक्तिः, उपसंहारमाह–एवमुक्तप्रकारेण अदत्तानि समाददानो–गृह्णन् रूपेऽतृप्तः सन् दुःखितो भवति, कीदृशः सन्नित्याह–अनिश्रो–दोषवत्तया सर्वजनोपेक्षणीय इति कस्यचित्सम्बन्धिनाऽवष्टम्भेन रहितः सन्, मैथुनरूपाश्रवोपलक्षणं चैतत्, अतिप्रसिद्धत्वाच्च रागिणां तस्य साक्षादनभिधानम् ॥ ३१ ॥ ११८६ ॥

उक्तमेवार्थं निगमयितुमाह—

रूवाणुरत्तस्स नरस्स एव, कत्तो सुह हुज्ज कयाइ किंचि ? ।
तत्थोवभोगेऽवि किलेसदुक्ख, निव्वत्तई जस्स कएण दुक्ख ॥ ११८७ ॥

रूपानुरक्तस्य नरस्य एव-पूर्वसूत्रकदम्बकोक्तप्रकारेण कुत सुख भवेत् ?, न भवेदिति भाव , किमित्येव यतस्तत्र रूपानुरागे उपभोगेऽपि-उपभोगावस्थायामपि क्लेशदु ख-अतृप्तलाभतालक्षणबाधाजनितमसात, उपभोगमेव विशिनष्टि-निर्वर्त्तयति-उत्पादयति यस्य-उपभोगस्य कृते यदर्थं, णेति वाक्यालङ्कारे, दु खमात्मन इति गम्यम् ॥ ३२ ॥ ११८७ ॥

इत्थ रागस्यानर्थहेतुतामुक्त्वा द्वेषस्यापि तामाह—

एमेव रूवमि गओ पओस, उवेइ दुक्खोहपरंपराओ ।
पदुट्ठचित्तो अ चिणाइ कम्म, ज से पुणो होइ दुह विवागे ॥ ११८८ ॥

एवमेव यथानुरक्तस्तथैव रूपे गत प्रद्वेष-द्वेष उपैति-प्राप्नोति, इहैवेति शेष , दु खौघपरम्परा-उत्तरोत्तरदु खसमूहरूपा, तथा प्रदुष्टचित्त चस्य भिन्नक्रमत्वात् चिनोति च-बध्नाति च कर्म, से-तस्य पुनर्भवति दु ख-दु खहेतुविपाक अनुभवकाले इह परत्र चेति भाव , पुनर्ग्रहणमैहिकदु खापेक्ष्य, अशुभकर्मोपचयश्च हिंसाद्याश्रवाविनाभावीति तद्धेतुत्वमनेनाक्षिप्यते ॥३३॥११८८॥

इत्थ रागद्वेषानुद्धरणे दोषमुक्त्वा तदुद्धरणे गुणमाह—

रूवे विरत्तो मणुओ विसोगो, एएण दुक्खोहपरंपरेण ।
न लिप्पई भवमज्झेऽवि सतो, जलेण वा पुक्खरिणीपलास ॥ ११८९ ॥

चक्षुरिन्द्रिय-सरूपम्

रूपे विरक्ता उपलक्षणत्वादद्विष्टश्च मनुजो-मनुष्यो विशोकः-शोकरहितः, तन्निबन्धनयो रागद्वेषयोरभावात्, एतेनानन्तरोक्तेन दुःखानामोघाः-सङ्घातास्तेषां परम्परा-सन्ततिः दुःखौघपरम्परा तया न लिप्यते-न स्पृश्यते मध्येऽपि सन् तिष्ठन्, दृष्टान्तमाह-जलेनेव, वाशब्दस्योपमार्थत्वात् पुष्करिणीपलाशं-पद्मिनीपत्रं जलमध्येऽपि सदिति शेषः ॥ ३४ ॥ ११८९ ॥

सोयस्स सद्दं गहणं वयंति, तं रागहेउं तु मणुन्नमाहु ।
तं दोसहेउं अमणुन्नमाहु, समो अ जो तेसु स वीयरागो ॥ ११९० ॥

इत्थं चक्षुराश्रित्य त्रयोदशसूत्राणि व्याख्यातानि, एवं शेषेन्द्रियाणां मनसश्च स्वस्वविषयप्रवृत्तौ रागद्वेषानुद्धरणदोषाभिधायीनि त्रयोदश त्रयोदश सूत्राणि व्याख्येयानि, नवरं श्रोतस्येति-श्रोतेन्द्रियस्य शब्दं-ध्वनिं मनोज्ञं काकलीगीतादि अमनोज्ञं खरकर्कशादि ॥ ३५ ॥ ११९० ॥

श्रोत्रेन्द्रिय-स्वरूपम्

तथा—

सद्दस्स सोयं गहणं वयंति, तं रागहेउं तु मणुन्नमाहु । तं दोसहेउं अमणुन्नमाहु, समो अ जो तेसु स वीयरागो ॥ ११९१ ॥ सद्देसु जो गेहिमुवेइ तिव्वं, अकालियं पावइ सो विणासं । रागाउरे हरिणमिउव्व मुद्धे, सद्दे अतित्ते समुवेइ मच्चुं ॥ ११९२ ॥ जे यावि दोसं समुवेइ तिव्वं, तंसि क्खणे से उ उवेइ दुक्खं । दुद्दंतदोसेण सएण जंतू, न किंचि सद्दं अवरज्झई से ॥ ११९३ ॥ एगंतरत्ते रुइरंसि सद्दे० ॥ ३९ ॥ ११९४ ॥ सद्दाणुगासाणु० ॥ ११९५ ॥ सद्दाणुवाएण परिग्गहेण० ॥ ११९६ ॥ सद्दे अतित्ते० ॥ ११९७ ॥ तण्हाभिभूयस्स०

|| ११०८ || मोसस्स पच्छा य० ११९९ || सद्दाणु० १२०० || एमेव सद्दमि० || १२०१ || सद्दे विरत्तो० || १२०२ ||

हरिणमिगव्व मुद्धेत्ति, मृग सर्वोऽपि पशुरुच्यते, हिरणस्तु कुरङ्ग एवेति तेन विशिष्यते, हरिणश्चासौ पशुश्च हरिणमृग इव मुग्ध –अनभिज्ञ सन् शब्दे–गौरिगीतात्मके अतृप्त –तदाकृष्टचित्ततया तत्रातृप्तिमान् || ३६–४७ || ११९१–१२०२ ||

घाणस्स गध गहण वयति० || १२०३ || गधस्स घाण० || १२०४ || गधेसु जो गेहिं० | रागाउरे ओसहि गधगिद्धे, सप्पे बिलाओ विव निक्खमते || १२०५ || जे यावि दोस० || १२०६ || एगतरत्तो रुइरंमि गधे० || १२०७ || गधाणु० || १२०८ || गधाणुवा० || १२०९ || गधे अतित्ते० || १२१० || तण्हा० || १२११ || मोसस्स० || १२१२ || गधाणु० || १२१३ || एमेव गधमि० || १२१४ || गधे विरत्तो० || १२१५ ||

घ्राणस्येति घ्राणेन्द्रियस्य गन्ध्यत–घ्रायत इति गन्धस्त मनोज्ञ–सुरभि अमनोज्ञ–असुरभिम् || ४९ || १२०३–१२०४ ||

तथा—औषधयो–नागदमिन्याद्यास्तासा गन्धे गृद्धो–गृद्धिमान् औषधिगन्धगृद्ध सन् इवस्य भिन्नक्रमत्वात्सर्प इव विलान्निष्क्रामन्, स हि अत्यन्तप्रियतया तद्गन्ध सोढुमशक्नुवन् विलादभिनिष्क्रामति || ६० || १२०५–१२१६ ||

घ्राणेन्द्रिय स्वरूपम्

जिब्भाए रसं गहणं० ॥ १२१६ ॥ रसस्स जीहं गहणं वयंति० ॥ १२१७ ॥ रसेसु जो गेहि०। रागाउरे वडिसविभिन्नकाए, मच्छे जहा आमिसभोगगिद्धे ॥ १२१८ ॥ गाथा १३ ॥ १२२८ ॥

जिह्वायाः—जिह्वेन्द्रियस्य रस्यते—आस्वाद्यते इति रसस्तं मनोज्ञं—मधुरादि अमनोज्ञं—कटुकादि ॥ ६१–६२॥१२१६–१२१७॥ वडिशं—प्रान्तन्यस्तामिषो लोहकीलकस्तेन विभिन्नकायो—विदारितशरीरो वडिशविभिन्नकायः मत्स्यो—मीनो यथा आमिषस्य—मांसादेर्भोगः—अभ्यवहारस्तत्र गृद्धः—अभिकाङ्क्षवान् आमिषभोगगृद्धः ॥ ६३–७३ ॥ १२१८-१२२८ ॥

कायस्स फासं गहणं वयंति० ॥ १२२९ ॥ फासस्स कायं गहणं० ॥ १२३० ॥ फासेसु जो गेहिमु०। रागाउरे सीयजलावसन्ने, गाहग्गहीए महिसे व रन्ने ॥ १२३१ ॥ एवं फासाभिलावे गाथा १३ ॥ १२४१ ॥



काय इह स्पर्शनेन्द्रियं, सर्वदेहगतत्वख्यापनार्थं चास्यैवमुक्तं, तस्य स स्पर्श्यत इति स्पर्शस्तं मनोज्ञं—मृदुप्रभृतिं अमनोज्ञं—कर्कशादि शीतं—शीतस्पर्शवत् जलं—नीरं तत्रावसन्नो—मग्नः शीतजलावसन्नः, ग्राहैः—जलचरविशेषैर्गृहीतो महिष इवारण्ये, वसति हि कदाचित् केनचिदुन्मोच्येतापीत्यरण्यग्रहणम् ७४–८६ ॥ १२२९–१२४१ ॥



मणस्स भावं गहणं० ॥ १२४२ ॥ भावस्स मणं ग० ॥ १२४३ ॥ भावेसु जो गेहिं०। रागाउरे कामगुणेसु गिद्धे, करेणुमग्गावहिए व नागे ॥ १२४४ ॥ एवं भावाभिलापे गाथा १३ ॥ १२५४ ॥

मनसः—चित्तस्य भावः—अभिप्रायः, स चेह स्मृतिगोचरस्तं ग्रहणं ग्राह्यं वदन्ति, इन्द्रियाविषयत्वात्तस्य, मनोज्ञं—मनोज्ञरूपादि-

विषय, अमनोज्ञ–तद्विपरीतविषय, एवमुत्तरत्रापि भावविषयरूपाद्यपेक्षया व्याख्येय, यद्वा स्वप्नकामदशादिषु हि मनस एव भावोपस्थापितो रूपादिरपि भाव उक्त , स मनसो ग्राह्य , स्वप्नकामदशादिषु हि मनस केवलस्य व्यापार इति ॥ ८७–८८ ॥ १२४२–१२४३ ॥ कामगुणेषु–मनोज्ञरूपादिषु गृद्ध –आसक्त , इवार्थस्य चस्य भिन्नक्रमत्वात् करेण्वा मार्गेण–निजपथेनापहृत आकृष्ट करेणुमार्गापहृतो नाग इव–हस्तीव, स हि मदान्धोऽप्यदूरवर्त्तिनीं करेणु दृष्ट्वा तद्रूपादिमोहितस्तन्मार्गानुगामितया अवगृह्यते सङ्ग्रामादिषु च प्रवेश्यते तथा च विनश्यति, आह–एव चक्षुरादीन्द्रियवशादेव गजस्य प्रवृत्तिरिति कथमस्यात्र दृष्टान्त ?, तत्त्वेन नोच्यते, प्राधान्यविवक्षया त्वेतज्ज्ञेय, यद्वा तथाविधकामदशाया चक्षुरादीन्द्रियव्यापाराभावेऽपि मन प्रवृत्तिरिति न दोष , इह चानानुपूर्व्यपि निर्देशाङ्गमितीन्द्रियाणामित्थमुपन्यास ॥ ८९–९९ ॥ १२४४–१२५४ ॥

उक्तमेवार्थं सङ्क्षेपत उपसहारव्याजेनाह—

एविंदियत्था य मणस्स अत्था, दुक्खस्स हेउ मणुयस्स रागिणो ।
ते चेव थेवपि कयाइ दुक्ख, न वीयरागस्स करिंति किंचि ॥ १२५५ ॥

एवमुक्तन्यायेन इन्द्रियार्था –चक्षुरादिविषया रूपाद्या, चस्य भिन्नक्रमत्वात् मनसोऽर्थाश्चोक्तरूपा , उपलक्षणत्वादिन्द्रिय मनासि च, दु खस्य हेतवो मनुजस्य रागिण , उपलक्षणत्वात् द्वेषिणश्च, विपर्यये गुणमाह–ते चेन्द्रियमनोऽर्था स्तोकमपि–स्वल्पमपि कदाचिद्दु ख न–नैव वीतरागस्येति विगतरागद्वेषस्य कुर्वन्ति किञ्चित् शारीर मानस च ॥ १०० ॥ १२५५ ॥ रागिण इन्द्रियार्था दु खहेतवः

ननु न कश्चन भोगेषु सत्सु वीतराग स्यादिति कथमस्य दु खाभाव ?, उच्यते—

न कामभोगा समयं उविंति, न यावि भोगा विगइं उविंति ।
जे तप्पओसी य परिग्गही य, सो तेसु मोहा विगइं उवेइ ॥ १२५६ ॥

न–नैव कामभोगा उक्तरूपाः समतां–रागद्वेषाभावरूपां उपयान्ति–उपगच्छन्ति, हेतुत्वेनेति गम्यं, तद्धेतुत्वे हि तेषां न कश्चित् रागद्वेषवान् भवेत्, न चापि भोगा भुज्यमानतया सामान्येन शब्दादयो विकृतिं–क्रोधादिरूपां, इहापि हेतुत्वेनोपयान्ति, अन्यथा न कश्चित् रागद्वेषरहितः स्यात्, कोऽनयोस्तर्हि हेतुरित्याह–यस्तत्प्रदोषी च–तेषु विषयेषु प्रद्वेषवान्, परिग्रही च–परिग्रहबुद्धिमांस्तेष्वेव रागीत्यर्थः, स तेषु विषयेषु मोहाद्रागद्वेषात्मकात् मोहनीयात् विकृतिमुपैति, रागद्वेषरहितस्तु समतामित्यर्थादुक्तम् ॥ १०१ ॥ १२५६ ॥

रागद्वेषाभावे विकृतेरभावः

किं स्वरूपां पुनरसौ विकृतिं रागद्वेषवशादुपैतीति ?, आह—

कोहं च माणं च तहेव मायं, लोभं दुगुंछं अरइं रइं च ।
हासं भयं सोगपुमित्थिवेयं, नपुंसवेयं विविहे य भावे ॥ १२५७ ॥
आवज्जई एवमणेगरूवे, एवंविहे कामगुणेसु सत्तो ।
अन्ने य एयप्पभवे विसेसे, कारुणदीणे हिरिमे वइस्से ॥ १२५८ ॥



गाथाद्वयं, क्रोधं च मानं च तथैव मायां लोभं जुगुप्सां अरतिं–अस्वास्थ्यं रतिं च–विषयासक्तिरूपां हासं–वक्त्रविकाशलक्षणं भयं शोकं च–प्रियविप्रयोगजं मनोदुःखात्मकं पुंवेदं–योषिदभिलाषं, विविधांश्च–नानाविधान् भावान्–हर्षविषादादीनभिप्रायान्

आपद्यते-प्राप्नोति, एव-अमुना रागद्वेषवत्तालक्षणेन प्रकारेण अनेकरूपान्-बहुभेदाननन्तानुबन्ध्यादिभेदेन तारतम्यभेदेन च, एवविधानुक्तरूपान् विकारानिति गम्य, कामगुणेषु सक्त-अभिष्वङ्गवान्, उपलक्षणत्वात् द्विष्टश्च, अन्यार्थैतत्प्रभवान् क्रोधादिजनितान् विशेषान् परितापदुर्गतिपातादीन्, कीदृश सन्नित्याह-कारुण्यास्पदीभूत दीन इत्यर्थ, हिरिमेत्ति-ह्रीमान् लज्जावान्, कोपाद्यापन्नो हि विनाशादिकमिहैवानुभवन् परत्र च तद्विपाक-अतिकटुक परिभावयन् प्रायोऽतिदैन्य लज्जा च भजते, तथा वइस्सेत्ति आर्षत्वात् द्वेष्य -तद्दोषदुष्टत्वात् सर्वस्याप्रीतिभाजनम् ॥ १०२-१०३ ॥ १२५७-१२५८ ॥

यतश्चैव रागद्वेषावेव दु खमूलमत प्रकारान्तरेणापि तयोरुद्धरणोपाय विवक्षुस्तद्विपर्यये दोषमाह—

कप्प न इच्छिज्ज सहायलिच्छू, पच्छाणुतावेण तवप्पभाव ।

एव विकारे अमियप्पयारे, आवज्जई इदियचोरवस्से ॥ १२५९ ॥

कल्पते-स्वाध्यायादिक्रियासु समर्थो भवतीति कल्पो-योग्यस्त, अपेर्गम्यत्वात् कल्यमपि, किं पुनरकल्प शिष्यादीति गम्य, नेच्छेत्-नाभिलषेत्, सहायलिप्सु ममाय देहसम्बाधनादि साहाय्य करिष्यतीत्यभिलाषुक सन्, तथा पश्चादिति-प्रस्तावात् व्रतस्य तपसो वा अङ्गीकारादुत्तरकालमनुताप-किमेतावन्मया कष्टमङ्गीकृतमिति चित्तसन्तापात्मको यस्य स पश्चानुताप, चादन्यादृशश्च सम्भूतियतिवत् भवान्तरे भोगस्पृहयालुस्तप प्रभाव प्रक्रमान्नेच्छेत्, यथा न शक्यमङ्गीकृत त्यक्तु, पर यद्यस्य व्रतस्य तपसो वा फलमस्ति तत एतस्मादिहैव आमर्षौषध्यादिलब्धिरस्तु, तदन्यापेक्षया अनु-भवान्तरे शक्रचक्रिविभूत्यादि भूयादिति, किमित्येव निषिध्यते इत्याह-एव-उक्तप्रकारेण विकारान्-दोषान् अमितप्रकारान्-अनेकभेदान् आपद्यते-प्राप्नोति

रागद्वेष स्वरूप तदुद्धरणो पायाश्च

इन्द्रियाण्येव चौरा धर्मसर्वस्वापहरणात्तद्वश्यः तदायत्त इन्द्रियचौरवश्यः, ईदृशस्य हि कल्प्यतपःप्रभावेच्छारूपेण प्रकारेण स्पर्शनादीन्द्रियवश्यताऽवश्यम्भाविनीति, एवं च वदतोऽयमाशयः–तदनुग्रहबुद्ध्या कल्पं पुष्टालम्बने च तपःप्रभावं च वाञ्छतोऽपि न दोषः, यद्वा कल्पमुक्तरूपं नेच्छेत्, सहायलिप्सुर्यदि कथममी मे धर्मसहायाः स्युरिति, एवमभिलापुकमपि, आस्तां अन्यमिति भावः, जिनकल्पिकापेक्षं चैतत्, एतेन रागहेतुपरिहरणमुक्तं, उपलक्षणं चैतदन्येषामपि रागहेतूनां द्वेषहेतूनां च परिहारस्य, ततः सिद्धं द्वयोरप्युद्धरणोपायानां तद्विपर्यये च दोषाणामभिधानम् ॥ १०४ ॥ १२५९ ॥ पूर्वं रागद्वेषोद्धरणोपायविपर्यये दोष उक्तः, अधुना तु तमेव दोषान्तरहेतुतोक्तिद्वारेण समर्थयति—

तओसि जायंति पओअणाइं, निमज्जिउं मोहमहन्नवंमि ।
सुहेसिणो दुक्खविणोय[ मुक्ख ]णट्ठा ( मोयणाए पो० ), तप्पच्चयं ( ओ पा० ) उज्जमए अरागी ॥ १२६० ॥

ततो-विकारापत्तेरनन्तरं से-तस्य जायन्ते-उत्पद्यन्ते प्रयोजनानि–विषयसेवनप्राणिहिंसादीनि, अन्तर्भावितण्यर्थत्वान्निमज्जितुं प्रक्रमात्तमेव जन्तुं मोहमहार्णवे, कोऽर्थो ?, यैर्मोहमहार्णवनिमग्न इव जन्तुः क्रियते, स ह्युत्पन्नविकारतया मूढ एवासीत्, विषयासेवनादिप्रयोजनैश्च सुतरां मुह्यति, कीदृशस्यैतानि स्युरित्याह–सुखैषिणः–सुखाभिलषणशीलस्य, दुःखनोदनार्थ–दुःखपरिहारार्थं, सुखैषितायां हि दुःखपरिहाराय विषयसेवनादिप्रयोजनसम्भव इति भावः, कदाचिदेवंविधप्रयोजनादपि तत्रायमुदासीन एव स्यादित्याशङ्क्याह तत्प्रत्ययं–उक्तरूपप्रयोजननिमित्तं चस्यैवार्थत्वात् उद्यच्छत्येव, कोऽर्थः ? तत्प्रवृत्तावुत्सहत एव रागी–रागवान्, उपलक्षणत्वात् द्वेषी च सन्, रागद्वेषयोरेव सर्वानर्थमूलत्वात् ॥ १०५ ॥ १२६० ॥

रागद्वेषा अनर्थहेतू

कुतस्तयोरेव सर्वानर्थहेतुत्वमित्याशङ्क्याह—

विरज्जमाणस्स य इंदियत्था, सद्दा( वण्णा पा० )इया तावइयप्पगारा ।
न तस्स सव्वेऽवि मणुन्नय वा, निव्वत्तयती अमणुन्नय वा ॥ १२६१ ॥

विरज्यमाणस्य, उपलक्षणाद्द्विपतश्च पुन इन्द्रियार्था–शब्दादिका, तावन्त इति यावन्तो लोके प्रतीता प्रकारा खरमधुरादिभेदा येषा ते तावत्प्रकारा, बहुभेदा इत्यर्थ, न तस्य मनुजस्य सर्वेऽपि–समस्ता अपि मनोज्ञता निर्वर्त्तयन्ति–जनयन्ति अमनोज्ञता वा, किन्तु रागद्वेषवत एव, कोऽर्थ –? स्वरूपेण हि रूपादयो न मनोज्ञता अमनोज्ञता वा कर्तुमात्मन क्षमा, किन्तु रक्तेतरप्रतिपत्रध्यवसायवशात्, उक्त चान्यैरपि–"परिव्राट्कामुकशूनामेकस्या प्रमदातनौ । कुणप कामिनी भक्ष्यमिति तिस्रो विकल्पना ॥ १ ॥" ततो वीतरागस्य तन्निर्वर्त्तनहेतुभावात् कथममी मनोज्ञता अमनोज्ञता वा निर्वर्त्तयेयु ?, तद्भावे च कथ विपयसेवनाक्रोशदानादिप्रयोजनोत्पत्तिरिति ?, पूर्व सति मनोज्ञत्वेऽमनोज्ञत्वे च समस्य रूपादीना अकिञ्चित्करत्व मुक्त, इह तु मनोज्ञत्वामनोज्ञत्वेऽपि तादृशस्य न भवत इत्युच्यते इति पूर्वस्माद्विशेष ॥ १०६ ॥ १२६१ ॥ रागद्वेषाभावे इन्द्रियार्थानामकिञ्चित्करत्वम्

तदेव रागाद्युद्धरणोपायानुक्त्वोपसहरन्नाह–

एव ससकप्पविकप्पणासु ( सो पा० ), सजायई समयमुवट्ठियस्स ।
अत्थे च सकप्पयओ तओ से, पहीयए कामगुणेसु तण्हा ॥ १२६२ ॥

एव–उक्तप्रकारेण स्वस्य–आत्मन सकल्पा –प्रक्रमात् रागद्वेपमोहरूपाध्यवसायास्तेपा विकल्पना –सकलदोपमूलत्वादिपरि

भावनाः स्वसङ्कल्पविकल्पनास्तासु उपस्थितस्य–उद्यतस्येति सम्बन्धः, किमित्याह–सञ्जायते–समुत्पद्यते, समयंति आर्षत्वात् समतां–माध्यस्थ्यं, तथा अर्थान्–जीवादीन् चस्य भिन्नक्रमत्वात् सङ्कल्पयतश्च–शुभध्यानविषयतया अध्यवस्यतः, तत इति समतायाः, से–तस्य साधोः प्रहीयते–प्रकर्षेण हानिं याति, काऽसौ ?, कामगुणादिषु–रूपादिषु तृष्णा–अभिलाषो लोभ इत्यर्थः, समतायां हि उत्तरोत्तरगुणस्थानावाप्त्या क्षीयत एव लोभ इति, यद्वा एवं–उक्तप्रकारेण समकं–एककालमुपस्थितस्य–उद्यतस्य रागाद्युद्धरणोपायेष्विति प्रक्रमः, किमित्याह–स्वसंकल्पनां–आत्मसम्बन्धिनां रागाद्यध्यवसायानां विकल्पना–विशेषेण छेदनं, आशु–शीघ्रं सञ्जायते–भवति, तथा च को गुणः ? इत्याह–अर्थान्–रूपादीन् असङ्कल्पयतो–रागादिविषयतया अनध्यवस्यतः, तत इति सङ्कल्पविकल्पनातः से–तस्य प्रहीयते कामगुणेषु तृष्णा ॥ १०७ ॥ १२६२ ॥

कीदृशः सन् किं विधत्त इत्याह—

सो वीयरागो कयसव्वकिच्चो, खवेइ नाणावरणं खणेणं ।
तहेव जं दरिसणमावरेइ, जं चंतरायं पकरेइ कम्मं ॥ १२६३ ॥

स प्रहीणतृष्णो-वीतरागद्वेषः स्यात्, तृष्णा हि लोभः, तत्क्षये च क्षीणकषायगुणस्थानावाप्तिरिति, तथा कृतसर्वकृत्य इव कृतसर्वकृत्यः, प्राप्तप्रायत्वादनेन मुक्तेः क्षपयति–क्षयं नयति, ज्ञानावरणं क्षणेन–समयेन तथैव यद्दर्शनं–चक्षुर्दर्शनाद्यावृणोति–स्थगयति दर्शनावरणमित्यर्थः, यच्चान्तरायं–दानादिलब्धौ विघ्नं प्रकरोति कर्म अन्तरायनामकमित्यर्थः ॥ १०८ ॥ १२६३ ॥

प्रमाद-स्थानम-ध्ययनम् ३२

रागद्वेषाभावे तृष्णाया अभावः ततो घातिकर्मा-भावश्च

तत्क्षयाच्च क गुणमवाप्नोतीत्याह—

सव्व तओ जाणइ पासई य, अमोहणो होइ निरतराए ।
अणासवे झाणसमाहिजुत्तो, आउक्खए मुक्खमुवेइ सुद्धे ॥ १२६४ ॥

सर्वं ततो ज्ञानावरणादिकर्मक्षयात् जानाति विशेषरूपतया, पश्यति च सामान्यरूपतया, तथा चामोहनो-मोहरहितो भवति, निरन्तरायो-निर्गतान्तरायोऽनाश्रव , ध्यान-शुक्लध्यान तेन समाधि-परमस्वास्थ्य तेन युक्त-सहितो ध्यानसमाधियुक्त , आयुष उपलक्षणाद् नामगोत्रवेद्याना च क्षये सति मोक्षमुपैति, शुद्धो-विगतकर्ममल ॥ १०९ ॥ १२६४ ॥

मोक्षगतश्च यादृशः स्यात्तदाह—

सो तस्स सव्वस्स दुहस्स मुक्खो, ज बाहई सयय जंतुमेय ।
दीहामयविप्पमुक्को पसत्थो, तो होइ अचतसुही कयत्थो ॥ १२६५ ॥

स मोक्षप्राप्तो जन्तु सुब्व्यत्ययात् तस्मात् जातिजरामरणरूपत्वेन प्रतिपादितात् सर्वस्मात् दु खात् मुक्त पृथग्भूत , य कीदृगित्याह-यद्दु ख बाधते-पीडयति सतत-अनवरत जन्तु एत प्रत्यक्ष, दीर्घाणि यानि स्थितित प्रक्रमात् कर्माणि तान्यामया इव-रोगा इव विविधबाधाविधायितया तेभ्यो विप्रमुक्तो दीर्घामयविप्रमुक्त , अत एव प्रशस्त-प्रशसार्ह , तत किमित्याह-तो इति ततो दीर्घामयविप्रमोक्षाद्भवति, अन्त-अतिक्रान्त अत्यन्त तादृग् सुखमस्यास्तीति स , अत एव कृतार्थ ॥ ११० ॥ १२६५ ॥

घातिक्षयात् क्रमेण मोक्षप्राप्ति

सर्वाध्ययनार्थं निगमयितुमाह—

अणाइकालप्पभवस्स एसो, सव्वस्स दुक्खस्स पमुक्ख( संसारचक्कस्स विमोक्ख पा० )मग्गो।
वियाहिओ जं समुविच सत्ता, कमेण अच्चंतसुही भवंति ॥ १२६६ ॥ त्तिबेमि ॥

॥ पमायट्ठाणं ॥ ३२ ॥

अनादिकालप्रभवस्य—उत्पन्नस्य, एष पूर्वोक्तः, सर्वस्य दुःखस्य प्रमोक्षमार्ग उपायो व्याख्यातः, यः कीदृगित्याह—यं दुःख-प्रमोक्षमार्गं समुपेत्य—सम्यक् प्रतिपद्य सत्त्वाः—प्राणिनः क्रमेण उत्तरोत्तरगुणप्रतिपत्तिरूपेणात्यन्तसुखिनो भवन्ति ॥१११॥१२६६॥

इति प्रमादस्थानाध्ययनावचूरिः ॥ ३२ ॥

॥ इति श्रीउत्तराध्ययने द्वात्रिंशमस्य प्रमादस्थानाध्ययनस्य अवचूरिः समाप्ता ॥



प्रमादस्थान-
परिहारेण
मोक्षप्राप्तिः

# अथ कर्मप्रकृतिनाम त्रयस्त्रिंशत्तममध्ययनम् ।

कर्माष्टक भणनप्रतिज्ञा

अनन्तराध्ययने प्रमादस्थानान्युक्तानि, तैश्च कर्म बध्यते, तस्य च का प्रकृतय ? कियती वा स्थितिरित्यादि संदेहापनोदायेदमारभ्यते, अस्य च कर्मप्रकृतिरिति नाम—

अट्ठ कम्माइं वुच्छामि, आणुपुव्विं जहक्कम (सुणेह मे पा०) । जेहिं बद्धे अय जीवे, ससारे परिव(य पा०)त्तए ॥ १२६७ ॥

अष्टेति अष्टसङ्ख्यानि क्रियन्ते—मिथ्यात्वादिभिर्हेतुभिर्जीवेनेति कर्माणि वक्ष्यामि सुब्व्यत्ययादानुपूर्व्या, इय च पश्चानुपूर्व्यादिभिरपि स्यादित्याह—यथाक्रम—क्रमानतिक्रमेण पूर्वानुपूर्व्येत्यर्थ, यै कर्मभि बद्ध—श्लिष्ट अय जीव ससारे परिवर्त्ततेऽज्ञातादिविविधपर्यायानुभवनतोऽन्यथा भवति ॥ १ ॥ १२६७ ॥

यथाप्रतिज्ञातमाह—

नाणस्सावरणिज्ज, दसणावरण तहा । वेयणिज्ज तहा मोह, आउकम्म तहेव य ॥ १२६८ ॥

नामकम्म च गोय च, अतराय तहेव य । एवमेयाइं कम्माइं, अट्ठेव य समासओ ॥ १२६९ ॥

गाथा २, ज्ञान आव्रियते—सदप्याच्छाद्यते अनेन पटेनेव रविप्रकाश इत्यावरणीय, दर्शनमाव्रियते वस्तुनि प्रतीहारेणेव नृपदर्शनमनेनेति दर्श०, तथा वेद्यते—सुखदु खतया अनुभूयते लिह्यमानमधुलिप्तासिधारावदिति वेद०, तथा मोहयति जाना-

नमपि मद्यपानवद्विचित्तताजननेनेति मोहस्तं, आयति–आगच्छति स्वकर्मासनरकादेर्निष्क्रमितुमनसोऽप्यात्मनो निगडवत्प्रतिवन्धकतामित्यायुस्तदेव कर्म, तथैव च, नमयति गत्याद्यनेकभावानुभवनं प्रत्यात्मानं चित्रकर इव हस्त्यादिभावं प्रति रेखाकृतिमिति नामकर्म, चः समुच्चये, गीयते–शब्द्यते उच्चावचैः शब्दैः कुलालादिवद् मृद्द्रव्यमत आत्मेति गोत्रं च, अन्तरा दातृग्राहकयोर्भाण्डागारिकवद्विघ्नहेतुतया अयते–गच्छतीत्यन्तरायं, तथैव च सर्वत्रासदपि कर्मेति सम्बध्यते, उपसंहारमाह–एवमेतानि कर्माणि अष्टैव, तुः पूरणे समासतः–सङ्क्षेपेण, विस्तरस्तु यावन्तो जन्तुभेदास्तान्यपि तावन्तीत्यनन्तान्येवेति भावः, अत्र च ज्ञानदर्शनस्वतत्त्वोऽयमात्मा इत्यन्तरङ्गत्वात्तयोरादितस्तदावरणोपादानं, तुल्येऽपि तयोरन्तरङ्गत्वे ज्ञानोपयोग एव सर्वलब्धीनामवाप्तिरतो ज्ञानस्य प्राधान्यात्तदावरणस्य प्राग्, तदनु दर्शनावरणस्य, ततः केवलिनोऽपि सातवन्धोऽस्तीति व्यापित्वाद्वेदनीयस्य, ततोऽपि प्रायः संसारिणामिष्टानिष्टविषयसम्बन्धात् सुखदुःखे स्यातां, इष्टानिष्टता च रागद्वेषाभ्यां, तद्रूपं च प्रायो मोहनीयमिति तस्य, ततश्चैतत्प्रकर्षापकर्षभावित्वादायुर्निवन्धनानां वह्वारम्भपरिग्रहत्वादीनां तदुर्ध्वं चायुष्कमिति तस्य, तदुदयश्च प्रायो गत्यादिनामोदयाविनाभावीति ततो नाम्नः, ततोऽपि च नरकादिनामोदयसहभाव्येव गोत्रोदय इति गोत्रस्य, ततश्चोच्चनीचभेदभिन्नात्प्रायो दानादिलब्धिभावाभावौ तयोश्चान्तरायक्षयोदयावन्तरङ्गहेतू इति तदनु अन्तरायस्येति ॥ २–३ ॥ १२६८–६९ ॥

कर्मणो मूलप्रकृतीरुक्त्वोत्तरप्रकृतीराह—

**नाणावरणं पंचविहं, सुअं आभिणिवोहियं। ओहिनाणं तईयं, मणनाणं च केवलं ॥ १२७० ॥**

कर्माष्टकस्वरूपम्

गाथा १२, ज्ञानावरण पञ्चविध–पञ्चप्रकार, तच्च कथ पञ्चविधमित्याशङ्कायां आवार्यभेदादेवेहावरणभेद इत्याशयेनेहावार्यस्य ज्ञानस्य भेदानाह–श्रुत, आभिनिबोधिक–मतिज्ञान, अवधिज्ञान तृतीय, मनोज्ञान च, केवल–केवलज्ञानम् ॥ ४ ॥ १२७० ॥

निद्दा तहेव पयला निद्दानिद्दा य पयलपयला य । तत्तो य थीणगिद्धी पचमा होइ नायव्वा ॥ १२७१ ॥

निद्राण निद्रा–सुखप्रतिबोधा, तथैवेति–तेनैव निद्रावत्किञ्चित् शुभरूपताप्रकारेण प्रचलत्यस्यामासीनोऽपि प्रचला, यदुक्त "पयला होइ ठिअस्स" त्ति, निद्रानिद्रा चातिशयनिद्रा तु खप्रतिबोधात्मिका, अतिशयख्यापनार्थं द्विरुच्चारण, प्रचला २ चातिशयप्रचला, सा हि चङ्क्रम्यमाणस्यापि स्यात्, चशब्दावुभयत्र तुल्यताख्यापकौ, द्वे अपि ह्यशुभतया तुल्ये एवेति, तत प्रकृष्टतराशुभानुभावतया ताभ्य उपरिवर्त्तिनीत्यर्थ', चस्य भिन्नक्रमत्वात् स्त्याना–संहतोपचिता गृद्धिर्यस्या स्त्यानगृद्धिश्च, एतदुदये वासुदेवबलार्द्धबल प्रबलरागद्वेषोदयवाश्च जन्तुर्जायते, अत एव च परिचिन्तितार्थसाधन्यसावुच्यते, तु पूरणे, पञ्चमी भवति ज्ञातव्या ॥ ५ ॥ १२७१ ॥

चक्खुमचक्खुओहिस्स दसणे केवले य आवरणे । एव तु नवविगप्प नायव्व दसणावरण ॥ १२७२ ॥

मोऽलाक्षणिक , ततश्चक्षुश्चाचक्षुश्चावधिश्च चक्षुरचक्षुरवधीति तस्य दर्शने–स्वस्वविषयसामान्यपरिच्छेदे दर्शने इति प्रत्येक योज्यते, तथा केवले च–प्रक्रमात् केवलदर्शने सर्वद्रव्यपर्यायाणा सामान्यावबोधे, आवरण चक्षुर्दर्शनादिविषय, एव अनेन निद्रापञ्चविधत्वचक्षुर्दर्शनावरणादिचतुर्विधात्मकेन प्रकारेण तु–पूरणे नव विकल्पा–भेदा यस्य तन्नवविकल्प ज्ञातव्य दर्शनावरणम् ॥ ६ ॥ १२७२ ॥

ज्ञानदर्शनावरणभेदाः

वेयणियंपि हु (य) दुविहं, सायमसायं च आहियं। सायस्स उ बहूभेया, एमेवासायस्सवि ॥ १२७३ ॥

वेदनीयं-वेदनीयकर्मापि, चः पूरणे, द्विविधं-द्विभेदं, सातं-सुखं शारीरं मानसं च, इहोपचारात्तन्निबन्धनं कर्म्माप्येवमुक्तं, असातं चैतद्विपरीतं आख्यातं तीर्थकृद्भिरिति शेषः, तोरप्यर्थत्वात्सातस्यापि बहवः-भेदाः, न केवलं ज्ञानदर्शनयोरित्यपेरर्थः, ते च तद्धेतुभूतभूतानुकम्पादीनां बहुभेदत्वात्, एवमेव बहव एव भेदा असातस्यापि, दुःखशोकतापादितद्धेतुबहुविधत्वादेव ॥७॥१२७३॥

मोहणीयंपि य दुविहं, दंसणे चरणे तहा। दंसणे तिविहं वुत्तं, चरणे दुविहं भवे ॥ १२७४ ॥

मोहनीयमपि द्विविधं, द्वैविध्यमाह-दर्शने-तत्त्वरुचिरूपे चरणे-चारित्रे, तथा च, कोऽर्थः ?, दर्शनमोहनीयं चारित्रमोहनीयं च, तत्र दर्शने-दर्शनविषयं प्रक्रमात् मोहनीयं त्रिविधमुक्तं, चरणे-चरणविषयं मोहनीयं द्विविधं भवेत् ॥ ८ ॥ १२७४ ॥



यथा दर्शनमोहनीयत्रैविध्यं तथाह—

सम्मत्तं चेव मिच्छत्तं, सम्मामिच्छत्तमेव य। एयाओ तिन्नि पयडीओ, मोहणिज्जस्स दंसणे ॥ १२७५ ॥

सम्यग् भावः सम्यक्त्वं-शुद्धदलिकरूपं यदुदये तत्त्वरुचिः स्यात्, चैवेति पूरणे, मिथ्यात्वम्-अशुद्धदलिकरूपं, यतस्तत्त्वे अतत्त्वमतत्त्वे तत्त्वमिति बुद्धिरुत्पद्यते, सम्यग्मिथ्यात्वमेव च-शुद्धाशुद्धदलिकरूपं, यत् उभयस्वभावता जन्तोः स्यात्, इह च सम्यक्त्वादयो जीवधर्माः तद्धेतुत्वाच्च दलिकेष्वेतद्व्यपदेशः, एताः पूर्वोक्तास्तिस्रः प्रकृतयो मोहनीयस्य दर्शने-दर्शनविषयस्य ॥९॥१२७५॥



चरित्तमोहणं कम्मं, दुविहं तु वियाहियं (चारित्तमोहणिज्जं दुविहं, वोच्छामि अणुपुव्वसो पा०)।
कसायमोहणिज्जं च, नोकसायं तहेव य ॥ १२७६ ॥

चरित्रे मुह्यतेऽनेनेति चरित्रमोहन कर्म उत्तरत्र तुशब्दस्य भिन्नक्रमत्वात् पुनर्द्विविध व्याख्यात, कथमित्याह–कषाया – क्रोधादयस्तद्रूपेण वेद्यते–अनुभूयते यत्तत्कषायवेदनीय, च समुच्चये, नोकषायमिति प्रस्तावात् नोकषायवेदनीय, तथा–समुच्चये, एवेति पूरणे ॥ १० ॥ १२७६ ॥

अनयोरपि भेदानाह—

सोलसविहभेएण, कम्म तु कसायज । सत्तविह नवविह वा, कम्म नो कसायज ॥ १२७७ ॥

चारित्रमोहनीयनामायुकर्मणा भेदा

षोडशविध –षोडशप्रकारो यो भेदो–नानात्व तेन, लक्षणे तृतीया, यद्वा षोडशविध भेदेन, प्राकृतत्वात् बिन्दुलोप , कर्म, तु पुनरर्थे भिन्नक्रमश्च, कषायेभ्यो जायते इति कषायज कषायवेदनीयमित्यर्थ , प्राकृतत्वात् बिन्दुलोपात् सप्तविध नवविध वा कर्म पुनर्नोकषायज–नोकषायवेदनीय, तत्र सप्तविध हास्य१रत्य२रति३भय४शोक५जुगुप्सा ६ षट् वेदश्च, सामान्यविवक्षयैक एवेति, पुस्त्रीनपुसकेति वेदत्रयविवक्षाया तु षड्भिस्त्रयो मीलिता नव भवन्तीति नवविधम् ॥ ११ ॥ १२७७ ॥

नेरइयतिरिक्खाऊ, मणुस्साउ तहेव य । देवाऊय चउत्थ तु, आउकम्म चउव्विह ॥ १२७८ ॥

आयु शब्द प्रत्येकशब्दे योज्यस्ततो नैरयिकायु , तिर्यञ्च –एकेन्द्रियादयस्तेषामायुस्तिर्यगायु , मनुष्यायु , तथैव च तद्भावावस्थितिहेतुतयैव, देवायु चतुर्थं, तु पूरणे, एव चायुष्कम चतुर्विधम् ॥ १२ ॥ १२७८ ॥

नामकम्म दुविह, सुहमसुह च आहिय । सुहस्स उ बहू भेया, एमेव य असुहस्सवि ॥ १२७९ ॥

उ० ४८ नामकर्म द्विविध, कथमित्याह–शोभते सर्वावस्थासु अनेनात्मेति शुभ अशुभ च–तद्विपरीत व्याख्यात, शुभस्य त्विति

शुभस्यापि वहवो भेदाः, एवमेवाशुभस्यापि, तदपि बहुभेदमिति भावः, तत्रोत्तरभेदतः शुभनाम्नोऽनन्तभेदत्वेऽपि मध्यमविव-
क्षया मनुष्यगतिदेवगत्यादयः सप्तत्रिंशद्भेदाः, तथा अशुभनाम्नोऽपि मध्यमविवक्षया नरकगतितिर्यग्गत्यादिचतुस्त्रिंशद्भेदाः
॥ १३ ॥ १२७९ ॥

गोयं कम्मं दुविहं, उच्चं नीयं च आहियं। उच्चं अट्ठविहं होइ, एवं नीयंपि आहियं ॥ १२८० ॥

गोत्रं कर्म द्विविधं, उच्चमिक्ष्वाकुजात्यादि, नीचं तद्विपरीतं आख्यातं, तत्रोच्चम्–उच्चैर्गोत्रं अष्टविधं भवति, एवं नीचमपि नीचैर्गोत्रमपि आख्यातं, अष्टविधत्वमुच्चनीचैर्गोत्रयोर्वन्धहेत्वष्टविधत्वाद्, अष्टौ हि जात्यमदादय उच्चैर्गोत्रस्य वन्धहेतवः, तावन्त एव जातिमदादयो नीचैर्गोत्रस्य ॥ १४ ॥ १२८० ॥

दाणे लाभे य भोगे य, उवभोगे वीरिए तहा। पंचविहमन्तरायं, समासेण विवाहियं ॥ १२८१ ॥

दाने लाभे च भोगे–सकृद्भोग्यपुष्पाहारादिविषये, उपभोगे–पुनःपुनरुपभोग्यभवनाङ्गनादिविषये, तथा विशेषेण ईर्यते–चेष्ट्यते अनेनेति वीर्यं तस्मिन्, तथा समुच्चये, सर्वत्र अन्तरायमिति प्रक्रमः, ततश्च विषयभेदात्पञ्चविधमन्तरायं समासेन व्याख्यातं, तत्र दानान्तरायं–यत् सति विशिष्टे गृहीतरि देये च वस्तुनि तत्फलमवगच्छतोऽपि दानप्रवृत्तिमुपहन्ति, यत्पुनर्विशिष्टेऽपि दातरि यावन्निपुणेऽपि याचितरि उपलब्धिउपघातकृल्लाभान्तरायं, भोगान्तरायं तु सति विभवादौ सम्पद्यमाने वा आहारमाल्यादौ यद्वशात् न भुङ्क्ते, उपभोगान्तरायं तु यस्योदयात्सदपि वस्त्रालङ्कारादि नोपभुङ्क्ते, वीर्यान्तरायं यद्वशात् वलवान् नीरुग्वयः-स्थोऽपि तृणकुब्जीकरणेऽप्यसमर्थः ॥ १५ ॥ १२८१ ॥



गोत्रान्तरा-ययोर्भेदाः

प्रदेशाग्र स्वरूपम्

इत्थ प्रकृतयोऽभिहिता , सम्प्रति एतन्निगमनायोत्तरग्रन्थसम्बन्धनाय चाह—

एयाओ मूलपयडीओ, उत्तराओ अ आहिया। पएसग्ग खित्तकाले य, भाव चादुत्तर सुण ॥ १२८२ ॥

एता अनन्तरोक्ता ज्ञानावरणादिरूपा मूलप्रकृतयस्तथा उत्तरा उत्तरप्रकृतयश्च श्रुतावरणाद्या , चशब्द श्रुतादीना अप्यक्षरानक्षरादिबहुभेदसूचक आख्याता , प्रदेशा –परमाणवस्तेषामग्र परिमाण प्रदेशाग्र, क्षेत्रकालौ च, तत्र च क्षेत्र–आकाश-कालश्च बद्धस्य कर्मणो जीवप्रदेशाविचटनात्मक स्थितिकाल , भाव च–अनुभागलक्षण कर्मण पर्याय चतु स्थानिकत्रिस्थान, कादिरसमिति यावत्, अत उत्तरमिति अत –प्रकृत्यभिधानादूर्ध्व शृणु कथ्यमानमिति शेष ॥ १६ ॥ १२८२ ॥

तत्र प्रदेशाग्रमाह—

सव्वेसिं चेव कम्माण, पएसग्गमणतग ।

गठियसत्ताईय ( गठि( प )सत्ताऽणाइ पा०), अतो सिद्धाण आहिय ॥ १२८३ ॥

च –पूरणे, एवोऽप्यर्थे , तत सर्वेषामपि कर्मणा ज्ञानावरणादीना प्रदेशाग्र–परमाणुपरिमाण, अनन्तमेव अनन्तक अनन्ताणुनिष्पन्नत्वात्तद्वर्गणाना, तच्चानन्तक ग्रन्थिरिव ग्रन्थि –घनरागद्वेषपरिणामस्त गच्छन्ति ग्रन्थिगास्ते च ते सत्त्वाश्च ग्रन्थिसत्त्वा , ये ग्रन्थिदेश गत्वाऽपि तद्भेदाविधानेन न कदाचिदुपरिष्टाद्गन्तार , ते चाभव्या एवात्र गृह्यन्ते, तानतीत–तेभ्योऽनन्तगुणत्वेनातिक्रान्त ग्रन्थिगसत्त्वातीत, तथा अन्त सिद्धानामाख्यात, सिद्धेभ्यो हि कर्मपरमाणवोऽनन्तभाग एव, तदपेक्षया सिद्धानामनन्तगुणत्वात्, अत सङ्ख्यामपेक्ष्य सिद्धान्तर्वर्त्ति तदनन्तकमुच्यते, एकसमयग्राह्यकर्मपरमाण्वपेक्ष चैतत् ॥१७॥१२८३

स्याता, न त्वेकश , तन्निमित्तकश्च कर्मवन्ध इति सोऽपि सर्वेणैवात्मना, ग्रहणपूर्वकत्वाच्च वन्धस्य तदप्येवमेव, यद्वा तद्गृहीत सत् केन सह कियत् कथ वा वद्ध स्यादित्याह–सुब्व्यत्ययात् सर्वैरपि प्रदेशै प्रक्रमादात्मन सर्व ज्ञानावरणादि सर्वेण गम्यत्वात् प्रकृतिस्थित्यादिना प्रकारेण वद्धक–क्षीरोदकवदात्मप्रदेशै श्लिष्टम् ॥ १८ ॥ १२८४ ॥

सम्प्रति कालमाह—

उदहीसरिसनामाण, तीसई कोडिकोडीओ। उक्कोसिया होइ ठिई, अतमुहुत्त जहन्निया ॥ १२८५ ॥

उदहीत्यादि गाथा ५, उदधिना सदृग् नाम येषा तानि सागरोपमाणि तेषा त्रिंशत्कोटीकोट्य उत्कृष्टा स्थिति –अवस्थान भवति, तथा मुहूर्तस्यान्तर अन्तर्मुहूर्त्तं न्यूनमित्यर्थ , जघन्यैव जघन्यिका प्रक्रमात् स्थिति ॥ १९ ॥१२८५ ॥

केषामित्याह—

आवरणिज्जाण दुण्हपि, वेयणिज्जे तहेव य। अतराए य कम्ममि, ठिई एसा वियाहिया ॥ १२८६ ॥

आवरणीययोर्ज्ञानदर्शनविषययोर्द्वयोरपि, वेदनीये तथैव च, अन्तराये च कर्मणि स्थितिरेषा व्याख्याता, इह च षष्ठीप्रक्रमे ऽपि वेदनीय इत्यादौ सप्तम्यभिधान तत् अनयोरर्थस्य तत्त्वतोऽभिन्नत्वात्, अत्र वेदनीयस्यापि जघन्या स्थितिरन्तर्मुहूर्त्तमानैवोक्ता, अन्ये तु द्वादशमुहूर्त्तमानैवैतामिच्छन्ति, तदाशय न विद्म ॥ २० ॥ १२८६ ॥

उयहीसरिसनामाण, सत्तरि कोडिकोडिओ। मोहणिज्जस्स उक्कोसा, अतमुहुत्त जहन्निया ॥ १२८७ ॥

उदधिसदृशनाम्ना सागरोपमाणा सप्तति कोटीकोट्य मोहनीयस्य ॥ २१ ॥ १२८७ ॥

तित्तीससागरोवमा, उक्कोसेणं वियाहिया। ठिई उ आउकम्मस्स, अंतमुहुत्तं जहन्निया ॥ १२८८ ॥

त्रयस्त्रिंशत्सागरोपमाणि आर्षत्वात् सुपो लुक्, उत्कृष्टेन व्याख्याता स्थितिः, तुः पूरणे, आयुः कर्मणः ॥ २२ ॥ १२८८ ॥

उदहीसरिसनामाणं, वीसइं कोडिकोडिओ। नामगोआण उक्कोसा, अट्ठमुहुत्ता (प्र.अंतमुहुत्तं) जहन्निया ॥१२८९॥

उदधिसदृशनाम्नां विंशतिकोटीकोट्यः नामगोत्रयोरुत्कृष्टा, अष्टमुहूर्त्ता जघन्यिका ॥ २३ ॥ १२८९ ॥

इत्थं मूलप्रकृतिविषया उत्कृष्टा जघन्या च स्थितिः सूत्रकारेणोक्ता, उत्तरविषया तु कर्मग्रन्थादिभ्यो ज्ञेया, अथ भावमाह—

अनुभाग-स्वरूपं प्रदेशाग्रस्वरूपं च

सिद्धाणणंतभागो, अणुभागा हवंति उ। सव्वेसुवि पएसग्गं, सव्वजीवेसु (स) इच्छियं ॥ १२९० ॥

सिद्धानामनन्तभागवर्त्तित्वादनन्तभागोऽनुभागा–रसविशेषा भवन्ति, तुः पूरणे, अयं चानन्तभागोऽनन्तसङ्ख्य एव, अनन्तानामप्यनन्तभेदत्वादित्यनेनैषामानन्त्यमेवेत्थमुक्तं, सम्प्रति प्रदेशपरिमाणमाह–सर्वेष्वपि प्रक्रमादनुभागेषु प्रदिश्यन्त इति प्रदेशा–बुद्ध्या विभज्यमानास्तदविभागैकप्रदेशास्तेषामग्रं–परिमाणं प्रदेशाग्रं सव्व० सर्वजीवेभ्यो भव्याभव्येभ्योऽतिक्रान्तं, ततोऽपि तेषामनन्तगुणत्वेनाधिकत्वात् ॥ २४ ॥ १२९० ॥

एवं प्रकृतिप्रदर्शनेन प्रकृतिबन्धप्रदेशाग्राभिधानेन च प्रदेशबन्धं कालोक्त्या स्थितिबन्धं अनेन चानुभागमभिधाय यदर्थमेते प्ररूपितास्तदुपदर्शयन्नुपसंहारव्याजेनोपदेष्टुमाह—



तम्हा एएसि कम्माणं, अणुभागे वियाणिया। एएसिं संवरे चेव, खवणे य जए बुहे ॥ १२९१ ॥ त्तिबेमि ॥

॥ कम्मपयडी ॥ ३३ ॥

यस्मादेवंविधा प्रकृतिबन्धास्ततस्मादेतेषां कर्मणां नानावर्णादीनामनुभागानुपलक्षणत्वात् प्रकृतिबन्धादींश्च विज्ञाय-विशेषेण कटुकविपाकबन्धलक्षणेन भवहेतुत्वलक्षणेनावबुद्ध्वा, अनुभागानामेव साक्षादुपादानं एषामेवाशुभानां प्रायो भव निर्वेदहेतुत्वात्, एतेषां कर्मणां संवरणे-अनुपात्तानां निरोधे, च समुच्चये, एवस्य भिन्नक्रमत्वात् क्षपणे च उपात्तानां निर्जरणे यतेतैव-यत्नं कुर्यात् बुद्धो-विद्वान् ॥ २५ ॥ १२९१ ॥

इति कर्मप्रकृत्याध्ययनावचूरि समाप्ता ॥ ३३ ॥

॥ इति श्रीउत्तराध्ययने त्रयस्त्रिंशत्तमस्य
कर्मप्रकृत्याख्याध्ययनस्य अवचूरि समाप्ता ॥

सरणानि
ऐ मुणि

# अथ लेश्याख्यं चतुस्त्रिंशमध्ययनम् ।



अनन्तराध्ययने कर्मप्रकृतय उक्ताः, तत्स्थितिश्च लेश्यावशत इत्यतस्ता अत्रोच्यन्ते—

लेसज्झयणं पवक्खामि, आणुपुव्विं जहक्कमं। छण्हंपि कम्मलेसाणं, अणुभावे सुणेहि मे ॥ १२९२ ॥ दारगाहा ॥

लेश्याध्ययनमिदं लिश्यते–श्लिश्यते आत्मा कर्मणा सहानयेति लेश्या–कृष्णादिद्रव्यसाचिव्यादात्मनः परिणामविशेषः, यदुक्तं–"कृष्णादिद्रव्यसाचिव्यात्परिणामो य आत्मनः । स्फटिकस्येव तत्रायं, लेश्या शब्दः प्रवर्त्तते ॥ १ ॥" इति, तदभिधायकमध्ययनं लेश्याध्ययनं, तत् प्रवक्ष्यामि प्रकर्षेण, तासामेव नामवर्णादिनिरूपणात्मकेनाभिधास्ये आनुपूर्व्या–यथाक्रममिति प्राग्वत् । तत्र षण्णामपि कर्मलेश्यानां–कर्मस्थितिविधातृतत्तद्विशिष्टपुद्गलरूपाणां अनुभावान्–रसविशेषान् श्रृणुत मे–मम कथयत इति शेषः ॥ १ ॥ १२९२ ॥

लेश्यानां नामादिप्ररूपणप्रतिज्ञा

तदनुभावाश्च नामादिप्ररूपणातः कथिता एव स्युरिति तद्द्वारमाह—

नामाइं वण्णरसगंधफासपरिणामलक्खणं ठाणं। ठिइं गइं च आउं, लेसाणं तु सुणेह मे ॥ १२९३ ॥ दारगाहा ॥

नामानि, वर्णः–कृष्णादिः, रसः तिक्तादिः, गन्धः सुरभ्यादिः, स्पर्शः कर्कशादिः, परिणामो–जघन्यादिः, लक्षणं पञ्चाश्रवसेवनादि, एषां समाहारे वर्णरसगन्धस्पर्शपरिणालक्षणं, स्थानमुत्कर्षापकर्षरूपं स्थितिं–अवस्थानकालं, गतिं च नरकादिकां यतो

या प्राप्यते आयु –जीवित यावत्यायुषि अवशिष्यमाणे आगामि भवलेश्यापरिणामस्तदिह गृह्यते, लेश्याना, तु पूरणे, शेष प्राग्वत् ॥ २ ॥ १२९३ ॥



तत्र यथोद्देश निर्देश इति न्यायात्पूर्वं नामान्याह—

किण्हा नीला य काऊ य, तेऊ पम्हा तहेव य । सुक्का लेसा य छट्टा उ, नामाइं तु जहक्कम ॥ १२९४ ॥

किण्हा स्पष्टा ॥ ३ ॥ १२९४ ॥

आसा वर्णानाह—

जीमूतनिद्धसकासा, गवलरिट्ठगसंनिभा । खंजंजणनयणनिभा, किण्हलेसा उ वण्णओ ॥ १२९५ ॥

प्राकृतत्वात् स्निग्धश्चासौ सजलत्वेन जीमूतश्च–मेघस्तद्वत्सम्यकाशते–वर्णत प्रकाशत इति स्निग्धजीमूतसकाशा, तत्सदृशी त्यर्थ , तथा गवल–महिषशृङ्ग रिष्टक –काक फलविशेषो वा तत्संनिभा–तच्छाया, खञ्जन–स्नेहाभ्यक्तशकटाक्षघर्षणोद्भूत अञ्जन कज्जल, नयन–लोचन उपचारात्तदेकदेशस्तन्मध्यवर्त्ता कृष्णसारस्तंनिभा–तत्समा कृष्णलेश्या, तुरेवार्थो भिन्नक्रमस्ततो वर्णत एव–वर्णमेवाश्रित्य, न तु रसादीन्, एवमग्रेऽपि ॥ ४ ॥ ११९५ ॥

नीलासोगसकासा, चासपिच्छसमप्पभा । वेरुलियनिद्धसंकासा, नीललेसा उ वण्णओ ॥ १२९६ ॥

नीलश्चासावशोकश्च–वृक्षविशेषो नीलाशोकसकाशा, रक्ताशोकव्यवच्छेदार्थं च नीलविशेषण चास –पक्षिविशेषस्तस्य पिच्छ

पतत्रं तत्समप्रभा–द्युतिः, प्राकृतत्वात्, स्निग्धो–दीप्तो वैडूर्यमणिविशेषस्तत्सङ्काशा–तत्सदृशी नीललेश्या तु वर्णतो नीलेति भावः ॥ ५ ॥ १२९६ ॥

अयसीपुप्फसंकासा, कोइलच्छद( प्र० वि )संनिभा। पारेवयगीवनिभा, काउलेसा उ वण्णओ १२९७ ॥

अतसी धान्यविशेपस्तत्पुष्पसङ्काशा, कोकिलच्छदः–तैलकण्टकस्तत्संनिभा, कोइलच्छवि इति पाठे तु कोकिलः–अन्यपुष्टस्तस्य छविस्तत्संनिभा, पारापतस्य ग्रीवा तन्निभाः, कापोतलेश्या तु वर्णतः, किञ्चित्कृष्णा किञ्चिच्च लोहितेति भावः ॥ १२९७ ॥

हिंगुलुयधाउसंकासा, तरुणाइच्चसंनिभा।

सुयतुंडपईवनिभा ( डालत्तदीवाभा, डग्गसंकासा पा० ) तेउलेसा उ वण्णओ ॥ १२९८ ॥

हिङ्गुलकः प्रतीतः, धातुः–पापाणधात्वादिस्तत्संकाशा, तरुणः–अभिनवोदित आदित्यस्तत्संनिभा, शुकस्य तुण्डं–मुखं तच्च प्रदीपश्च तन्निभा वा, तेजोलेश्या तु वर्णतो रक्तेत्यर्थः ॥ ७ ॥ १२९८ ॥

हरियालभेयसंकासा, हलिद्दाभेदसंनिभा। सणासणकुसुमनिभा, पम्हलेसा उ वण्णओ ॥ १२९९ ॥

हरितालस्य भेदो–द्विधात्वं तत्संकाशा, भिन्नस्य हि वर्णप्रकर्षः स्यादिति भेदग्रहणं, हरिद्रेह पिण्डहरिद्रा तस्या भेदस्तत्संनिभा, सणो-धान्यविशेपः असनो–वीयकस्तयोः कुसुमं तन्निभा, पद्मलेश्या तु वर्णतः पीतेत्यर्थः ॥ ८ ॥ १२९९ ॥

संखंककुंदसंकासा, खीरतूलक(प्र, धार पा० )समप्पभा। रययहारसंकासा, सुक्कलेसा उ वण्णओ॥ १३०० ॥



लेश्यानां वर्णाः

शङ्ख प्रतीत अङ्को–मणिविशेष कुन्द –कुन्दपुष्प तत्सङ्काशा, क्षीरपूरो–दुग्धप्रवाहस्तत्समप्रभा, रजत–रूप्य हारो–मुक्ताकलापस्तत्सङ्काशा शुक्ललेश्या तु वर्णत शुक्लेत्यर्थ ॥ ९ ॥ १३०० ॥

इत्युक्तो वर्ण , सम्प्रति रसमाह—

जह कडुयतुम्बरसो निम्बरसो कडुयरोहिणिरसो वा। इत्तोवि अणतगुणो रसो उ कण्हाइ नायव्वो ॥ १३०१ ॥

जहेत्यादि सूत्रपद्क, यथेति यादृक् कटुकतुम्बकस्य रस –आस्वाद कटुकतुम्बकरसो निम्बरस प्रतीत , कटुका चासौ रोहिणी च त्वग्विशेष कटुकरोहिणी, कटुकाव्यभिचारित्वेऽपि विशेषणोपादान अतिशयख्यापक तद् रसो वा औषधिविशेषो वा कटुकेह गृह्यते, यथेति सर्वत्रानुवर्त्यते, इतोऽपि कटुकतुम्बकरसादेरपि अनन्तेन–अनन्तराशिना गुणन यस्यासौ रसस्तु कृष्णाया कृष्णलेश्याया ज्ञातव्य , अतिकटुक इति भाव ॥ १० ॥ १३०१ ॥

जह तिकडुयस्स य रसो तिक्खो जह हत्थिपिप्पलीए वा। इत्तोवि अणतगुणो रसो उ नीलाइ नायव्वो १३०२

यथा यादृश त्रिकटुकस्य प्रसिद्धस्य रस , तीक्ष्ण –कटुर्यथा हस्तिपिप्पल्या वा–गजपिप्पल्या वाऽतोऽपि त्रिकटुकरसादेरनन्तगुणो रसस्तु नीलाया ज्ञातव्य , अतितीक्ष्ण इत्यर्थ ॥ ११ ॥ १३०२ ॥

जह तरुणअम्बयरसो तुवर( द्र पा० )कवित्थस्स वावि जारिसओ।
इत्तोवि अणतगुणो रसो उ काऊइ नायव्वो ॥ १३०३ ॥

यथा तरुण–अपरिपक्व तच्च तदाम्रक च–आम्रफल तद्रस , तुवर सकषाय अर्थादपक्व तच्च तत्कपित्थफल तुवरकपित्थ तस्य,

लेश्याना रसा

वा विकल्पे, अपिः पूरणे, यादृशको रस इति प्रक्रमः, इतोऽप्यनन्तगुणो रसस्तु कापोताया ज्ञातव्यः, अतिशयकषाय इत्याशयः ॥ १२ ॥ १३०३ ॥

जह परिणयंबगरसो पक्ककवित्थस्स वावि जारिसओ । इत्तोवि अणंतगुणो रसो उ तेऊइ नायव्वो ॥ १३०४ ॥

यथा परिणतं–परिपक्कं यदाम्रकं तद्रसः पक्ककपित्थस्य वाऽपि यादृशको रस इति प्रक्रमः, अतोऽप्यनन्तगुणो रसस्तु तैजस्या ज्ञातव्यः, अम्लः किञ्चिन्मधुरश्च ॥ १३ ॥ १३०४ ॥

लेश्यानां रसाः

वरवारुणीइ व रसो विविहाण व आसवाण जारिसओ ।
महुमेरगस्स व रसो इत्तो पम्हाइ परएणं (इत्तोवि अणंतगुणो रसो उ पम्हाइ नायव्वो पा०) ॥१३०५॥

वरवारुण्याः–प्रधानसुराया वा रसो यादृशक इति योगः, विविधानां वा आसवानां–पुष्पप्रभवमद्यानां यादृशो रसः, मधु–मद्यविशेषो मैरेयं–सरकस्तयोः समाहारे मधुमैरेयं तस्य वा रसो यादृशः, इतो वरवारुण्यादिरसात्पद्मायाः प्रक्रमात् रसः, परकेणंति–अनन्तगुणत्वात्तदतिक्रमेण वर्त्तते इति शेषः, अयं च किञ्चिदम्लकषायो माधुर्यवांश्चेति भावनीयम् ॥ १४ ॥ १३०५ ॥

खज्जूरमुद्दियरसो खीररसो खंडसक्कररसो वा । इत्तो उ अणंतगुणो रसो उ सुक्काइ नायव्वो ॥ १३०६ ॥

खर्जूरश्च प्रतीतो मुद्रीका च–द्राक्षा एतद्रसः, तथा क्षीररसः प्रतीतः, खण्डं–च इक्षुविकारः शर्करा च–कासादिप्रभवा तद् रसो वा यादृश इति शेषः, इतोऽप्यनन्तगुणो रसस्तु शुक्लाया ज्ञातव्यः, अत्यन्तमधुर इत्यर्थः ॥ १५ ॥ १३०६ ॥

उक्तो रस , सम्प्रति गन्धमाह—

जह गोमडस्स गधो सुणगमडस्स व जहा अहिमडस्स ।
इत्तो वि अणतगुणो लेसाण अप्पसत्थाण ॥ १३०७ ॥

यथा गवा मृतक-शरीर गोमृतक तस्य गन्धश्च, श्वमृतकस्य वा यथा, अहि-सर्पस्तन्मृतकस्य, गन्ध इति सम्बन्ध , सूत्रत्वात्कशब्दलोपे इतोऽप्येतत्प्रकारादपि गन्धादनन्तगुणो लेश्यानामप्रशस्ताना-अशुभाना कृष्णनीलकापोताना गन्ध इति प्रक्रम , आसामप्रशस्तत्वविशेषादनुक्तोऽपि गन्धस्य विशेषो ज्ञेय ॥ १६ ॥ १३०७ ॥

जह सुरहिकुसुमगधो गधवासाण(गधणा च पा० )पिस्समाणाण ।
इत्तो वि अणतगुणो पसत्थलेसाण तिण्हपि ॥ १३०८ ॥

लेश्याना गन्धा

यथा सुरभिकुसुमाना-जातिकेतक्यादिसम्बन्धिना सुगन्धिपुष्पाना गन्ध-परिमल सुरभिकुसुमगन्ध , तथा गन्धाश्च कोष्ठपुटपाकनिष्पन्ना वासाश्चेतरे गन्धवासा , इह चैतदङ्गान्येवोपचारादेनमुक्तानि तेषा, पिष्यमाणाना-चूर्ण्यमानाना यथा गन्ध इति प्रक्रम , तथा चातिप्रबल प्रादुर्भवतीत्येवमुक्त, इतोऽप्येतत्प्रकारादपि गन्धादनन्तगुणः प्रशस्तलेश्याना तिसृणामपि तैजसीपद्मशुक्लाना गन्ध इति प्रक्रम , इहाप्यासा प्रशस्तत्वविशेषादनुक्तो गन्धविशेषो ज्ञातव्य ॥ १७ ॥ १३०८ ॥

सम्प्रति स्पर्शनमाह—

जह करगयस्स फासो गोजिब्भाए व सागपत्ताण । इत्तोवि अणतगुणो लेसाण अप्पसत्थाण ॥ १३०९ ॥

यथा क्रकचस्य–करपत्रस्य स्पर्शः, गोर्जिह्वा गोजिह्वा तस्या यथा वा शाको–वृक्षविशेषस्तत्पत्राणां स्पर्श इति प्रक्रमः, अतोऽपि स्पर्शादनन्तगुणोऽति–अतिशायितया यथाक्रमं लेश्यानां अप्रशस्तानां आद्यानां तिसृणां प्रक्रमात्स्पर्शः ॥ १८ ॥ १३०९ ॥

**जह बूरस्स वि फासो नवणीयस्स व सिरीसकुसुमाणं। इत्तोवि अणंतगुणो पसत्थलेसाण तिण्हंपि ॥ १३१० ॥**

यथा बूरस्य वा प्रतीतस्य म्रक्षणस्य शिरीषो–वृक्षविशेषस्तत्कुसुमानामुभयत्र यथा स्पर्श इति प्रक्रमः, अतोऽप्यनन्तगुणो यथाक्रमं प्रशस्तलेश्यानां तिसृणामपि स्पर्श इति प्रक्रमः, इह च यदनेकदृष्टान्तोपादानं तन्नानादेशजशिष्यानुग्रहार्थं क्वचिद्धि किञ्चित्प्रतीतमिति, यथा निगदितोदाहरणेषु वर्णादितारतम्यसम्भवाल्लेश्यानां स्वस्थानेऽपि वर्णादिवैचित्र्यज्ञापनार्थम् ॥ १९ ॥ १३१० ॥

परिणामद्वारमाह—

**तिविहो व नवविहो वा सत्तावीसइविहिक्कसीओ वा। दुसओ तेयालो वा लेसाणं होइ परिणामो ॥ १३११ ॥**

त्रिविधो वा नवविधो वा, विधशब्दस्य चोभयत्रसम्बन्धात्सप्तविंशतिविध एकाशीतिविधो वा, अत्रापि विधशब्दस्य सम्बन्धात् त्रिचत्वारिंशद्द्विशतविधो वा लेश्यानां भवति परिणामस्तद्रूपगमनात्मकः, इह त्रिविधो जघन्यमध्यमोत्तमभेदेन, नवविधो यदेषामपि जघन्यादीनां स्वस्थानतारतम्यचिन्तायां प्रत्येकं जघन्यादित्रयेण गुणनात्, एवं पुनः पुनस्त्रिकगुणनया २७ विधत्वं ८१ विधत्वं, २४३ विधत्वं च भावनीयं, उपलक्षणं चैतदेवं, तारतम्यचिन्तायां सङ्ख्यानियमाभावात् ॥ २० ॥ १३११ ॥



लेश्यानां स्पर्शपरिणामौ

सम्प्रति लक्षणमाह—

पचासवप्पम( चु पा० )त्तो तीहिं अगुत्तो छसू अविरओ य। तिव्वारम्भपरिणओ खुद्दो साहस्सिओ नरो
( निद्धंधसपरिणामो निस्ससो अजिइंदिओ पा० ) ॥ १३१२ ॥

पञ्चाश्रवा –हिंसाद्यास्तेषु प्रवृत्तः, अतस्त्रिभि प्रस्तावात् मनोवाक्कायैरगुप्त –अनियन्त्रितो मनोगुप्त्यादिरहित इत्यर्थ , तथा षट्सु पृथ्वीकायादिषु अविरत –अनिवृत्त , तदुपमर्दकत्वादेरिति गम्य, अथ वा तीव्रारम्भोऽपि स्यादत आह–तीव्रा –उत्कटा स्वरूपतोऽध्यवसायतो वा ये आरम्भा –सावद्यव्यापारास्तत्परिणत –तत्प्रवृत्त्या तदात्मता गत क्षुद्र –सर्वस्याहितैषी कार्पण्य युक्तो वा, सहसा अपर्यालोच्य गुणदोषान् प्रवर्त्तत इति साहसिकश्चौर्यादिकृदित्यर्थ , नर उपलक्षण स्त्र्यादिर्वा ॥२१॥१३१२॥ कृष्णलेश्याया लक्षणम्

निद्धंधसपरिणामो, निस्ससो अजिइंदिओ ( तिव्वारम्भपरिणओ खुद्दो साहस्सिओ नरो पा० )।
एयजोगसमाउत्तो कण्हलेस तु परिणमे ॥ १३१३ ॥

निद्धंधसत्ति अत्यन्तमैहिकामुष्मिकापायशङ्काविकलोऽत्यन्त जन्तुबाधानपेक्षो वा परिणामो यस्य स , नृशसो–निस्तृशो जीवान् विहिंसन् मनागपि न शङ्कते, नि शसो वा परप्रशसारहित , उपसहारमाह–एते च ते मनोवाक्कायव्यापारा एतद्योगा –पञ्चाश्रव प्रवृत्तत्वादयस्तै समिति भृशमाङिव्याभिव्याप्त्या युक्त –अन्वित एतद्योगसमायुक्त , तोरेवार्थत्वात् कृष्णलेश्यामेव परिणमेत्, तद्द्रव्यसाचिव्येन तथाविधद्रव्यसम्पर्कात् स्फटिकवत्, तदुपरञ्जनात् तद्रूपता भजेत्, एतेन पञ्चाश्रवप्रवृत्तत्वादीना भाव

मिथ्यादृष्टिरनार्य उत्प्रासक च–यथा पर उत्प्रास्यते दुष्ट च–रागादिदोषवत् यथा स्यादेव वदनशील उत्प्रासकदुष्टवादी, च समुच्चये, स्तेन –चौर च –प्राग्वत् अपि चेति पूरणे, मत्सर –परसम्पदसहन सति वा वित्ते त्यागाभावस्तद्वान् मत्सरी, एतद्योगसमायुक्त कापोतलेश्या तुरिति पुन परिणमेत् ॥ २५, २६ ॥ १३१६–१७ ॥

नीआवित्ती अचवले, अमाई अकुऊहले। विणीयविणए दंते, जोगव उवहाणव ॥ १३१८ ॥

नीचैर्वृत्ति कायवाग्मनोभिरनुत्सिक्त अचपल चापलानुपेत –अमायी मायानन्वित , अकुतूहल –कुहुकादिष्वकौतुकवान्, अत एव विनीतविनय –स्वभ्यस्तगुर्वाद्युचितप्रतिपत्ति , दान्त –इन्द्रियनोइन्द्रियदमेन, योग –स्वाध्यायादिव्यापारस्तद्वान्, उपधानवान्–विहितशास्त्रोपचार ॥ २७ ॥ १३१८ ॥

पियधम्मे दढधम्मे, वज्जभीरू हिए(या पा० )सए (अणासवे पा० )।
एयजोगसमाउत्तो, तेउलेस तु परिणमे ॥ १३१९ ॥

तेजोपद्म-लेश्ययो-र्लक्षणम्

प्रियधर्मा–अभिरुचितधर्मानुष्ठान , दृढधर्मा अङ्गीकृतव्रतादिनिर्वाहक , किमित्येत ?, यतो वर्ज्य–प्राकृतत्वात् अलोपे अवद्य वा उभयत्र पाप तद्भीरु , हितैषको–मुक्तिगवेषक:, शेष प्राग्वत् ॥ २८ ॥ १३१९ ॥

पयणुकोहमाणो य, मायालोभे य पयणुए। पसतचित्ते दतप्पा, जोगव उवहाणव ॥ १३२० ॥

प्रतनू–अतीवाल्पौ क्रोधमानौ यस्य स तथा, च पूरणे, माया लोभश्च प्रतनुकौ यस्येति शेष , अत एव प्रशान्त–प्रकर्षेणो पशमवत् चित्तमस्येति प्रशान्तचित्त , दान्त अहितप्रवृत्तिनिषेधाद् वशीकृत आत्मा येन स दान्तात्मा ॥ २९ ॥ १३२० ॥

तहा य पयणुवाई य, उवसंते जिइंदिए। एयजोगसमाउत्तो, पम्हलेसं तु परिणमे ॥ १३२१ ॥

प्रतनुवादी-स्वल्पभापकः, चः अग्रे योक्ष्यते, उपशांतः अनुद्भटतयोपशान्ताकृतिः, जितेन्द्रियश्च-वशीकृताक्षः ॥ ३० ॥१३२१॥

अट्टरुद्दाणि वज्जित्ता, धम्मसुक्काणि साहए। पसंतचित्ते दंतप्पा ( झायई।
विणीयविनओ दंतो पा० ) समिए गुत्ते य गुत्तिसु ॥ १३२२ ॥

आर्त्तरौद्रे वर्जयित्वा, धर्मशुक्ले ध्यायति, यः कीदृशः सन्नित्याह-प्रशान्तचित्तः-दान्तात्मा समितः-समितिमान् गुप्तश्च-निरुद्धसर्वात्मव्यापारो गुप्तिभिः-मनोगुप्त्यादिभिः, तृतीयार्थे सप्तमी ॥ ३१ ॥ १३२२ ॥

सरागे वीयरागे वा, उवसंते ( सुद्धजोए पा० ) जिइंदिए। एयजोगसमाउत्तो, सुक्कलेसं तु परिणमे ॥ १३२३ ॥

स च सरागोऽक्षीणानुपशान्तकपायतया वीतरागो वा ततोऽन्य उपशान्तः, शेपं स्पष्टं, इह च शुभलेश्यासु केपाञ्चिद्विशेपणानां पुनरुपादानेऽपि लेश्यान्तरविपयत्वादपौनरुक्त्यं, पूर्वपूर्वापेक्षयोत्तरोत्तरेपां विशुद्धितः प्रकृतं प्रभावनीयं, विशिष्टलेश्या वाऽपेक्ष्यैवं लक्षणाभिधानमिति न देवादिभिर्व्यभिचारः शङ्क्यः ॥ ३२ ॥ १३२३ ॥

सम्प्रति स्थानद्वारमाह—

अस्संखिज्जाणोसप्पिणीण उस्सप्पिणीण जे समया। संखाईया (असंखेज्जा पा०)लोगा लेसाणं हवंति ठाणाइं॥१३२४॥

असङ्ख्येयानां-सङ्ख्यातीतानां अवसर्पिणीनां ये समयाः कियन्त इत्याह—सङ्ख्यातीतालोकाः, कोऽर्थः? असङ्ख्येयलोकाकाशप्रदेशपरिमाणानि लेश्यानां भवन्ति स्थानानि प्रकर्षापकर्पकृतानि, अशुभानां सङ्क्लेशरूपाणि शुभानां च विशुद्धिरूपाणि,



शुक्ललेश्याया लक्षणं लेश्यानां स्थानानि च।

तत्परिमाणानीति शेष , यद्वा असङ्ख्येयोत्सपिण्यवसर्पिणीना ये समया गम्यमानत्वात् तावन्ति लेश्याना भवन्ति स्थानानीति कालतोऽसङ्ख्याता लोका इति क्षेत्रत स्थानमानमेवोक्तम् ॥ ३३ ॥ १३२४ ॥

स्थितिमाह—

मुहुत्तद्ध तु जहन्ना तित्तीसा सागरा मुहुत्तऽहिया। उक्कोसा होइ ठिई नायव्वा किण्हलेसाए ॥ १३२५ ॥

गाथा ६, मुहूर्त्तस्यार्द्धो मुहूर्त्तार्द्धस्त कालात्यन्तसयोगे द्वितीया, समविभागस्य अविवक्षितत्वात्, अन्तर्मुहूर्त्तमित्यर्थ , तुरेवार्थ , जघन्या, त्रयस्त्रिंशत्सागरा इति सागरोपमाणि , इहोत्तरत्र च मुहूर्त्तशब्देन मुहूर्त्तैकदेश एवोक्त , ततश्चान्तर्मुहूर्त्ता धिकानि, उत्कृष्टा स्थितिरिति ज्ञातव्या, कृष्णलेश्याया , इह चान्तर्मुहूर्त्तस्यासङ्ख्येयभेदत्वादन्तर्मुहूर्त्तशब्देन पूर्वोत्तरभवसम्ब न्ध्यन्तर्मुहूर्त्तद्वयमुक्त, एवमुत्तरत्रापि ॥ ३४ ॥ १३२५ ॥

मुहुत्तद्ध तु जहन्ना दसउदहिपलियमसखभागमब्भहिआ । उक्कोसा होइ ठिई नायव्वा नीललेसाए ॥ १३२६ ॥

कृष्णनील-कपोतलेश्याना स्थिति

तथा दश उदधय उदध्युपमानि-सागरोपमाणीत्यर्थ , पल्योपमासङ्ख्येयभागाधिकानि, उत्कृष्टा भवति स्थितिर्ज्ञातव्या, नील लेश्याया , ननु अस्या धूम्रप्रभोपरितनप्रस्तटे एव सम्भवस्तत्र च, "अतोमुहुत्तमि गए" इत्यादिवक्ष्यमाणन्यायत पूर्वोत्तरभवान्त र्मुहूर्त्तद्वयेनाधिकाऽसौ किं नोक्ता ?, उच्यते—उक्तैव, पल्योपमासङ्ख्येयभाग एव तस्याप्यन्तर्मुहूर्त्तद्वयस्यान्तर्भावात् , तदसङ्ख्येय-भागाना चासङ्ख्येयभेदत्वात्, एवमुत्तरत्रापि भावनीयम् ॥ ३५ ॥ १३२६ ॥

मुहुत्तद्ध तु जहन्ना तिण्णुदही पलियमसखभागमब्भहिआ । उक्कोसा होइ ठिई नायव्वा काउलेसाए ॥ १३२७ ॥

गाथा ४ स्पष्टा, नवरं त्रय उदधयः–सागरोपमाणि ॥ ३६ ॥ १३२७ ॥

मुहुत्तद्धं तु जहन्ना दोण्हुदही पलियमसंखभागमब्भहिआ।
उक्कोसा होइ ठिई नायव्वा तेउलेसाए ॥ १३२८ ॥ द्वावुदधी द्वे सागरोपमे ॥ ३७ ॥ १३२८ ॥

मुहुत्तद्धं तु ( द्धा उ पा॰ ) जहन्ना दसउदही होइ मुहुत्तमब्भहिआ।
उक्कोसा होइ ठिई नायव्वा पम्हलेसाए ॥ १३२९ ॥

मुहुत्तद्धं तु जहन्ना तित्तीसं सागरा मुहुत्तहिया। उक्कोसा होइ ठिई नायव्वा सुक्कलेसाए ॥ १३३० ॥
त्रयस्त्रिंशत्सागरोपमाणि ॥ ३८–३९ ॥ १३२९–३० ॥

प्रकृतमुपसंहरन्नुत्तरग्रन्थसम्बन्धमाह —

एसा खलु लेसाणं ओहेण ठिई उ वण्णिया होइ। चउसुवि गईसु इत्तो लेसाण ठिई उ वुच्छामि ॥ १३३१ ॥
स्पष्टा, नवरं, ओघेन–सामान्येन गतिभेदाविवक्षयेतियावत्, तुः पूरणे, चतसृष्वपि गतिषु नरकगत्यादिषु प्रत्येकमिति शेषः, अत इति ओघस्थितिवर्णनानन्तरम् ॥ ४० ॥ १३३१ ॥

प्रतिज्ञातमेवाह—

दसवाससहस्साइं काऊइ ठिई जहन्निया होइ। तिन्नोदही पलिय असंखेज्जभागं च उक्कोसा ॥ १३३२ ॥
दसेत्यादिसूत्राणि १५, दशवर्षसहस्राणि कापोतायाः स्थितिर्जघन्यिका भवति, त्रय उदधयः, सूत्रत्वात् पल्योपमासङ्ख्येयभागं



तेजोपद्मशुक्ल-लेश्यानां स्थितिः

चोत्कृष्टा, इय च जघन्या रत्नप्रभाया, तस्या हि जघन्यतोऽपि दशवर्षसहस्राण्यायुरिति, उत्कृष्टा च वालुकाप्रभाया, तत्राप्युपरितनप्रस्तटनारकाणामेतावत्स्थितिकानामसाविति भावनीयम् ॥ ४१ ॥ १३३२ ॥

तिण्णुदहीपलिओवममसंखभागो जहन्ननीलठिई । दसउदहीपलिओवममसंखभाग च उक्कोसा ॥ १३३३ ॥

त्रय उदधय मस्यालाक्षणिकत्वात् चस्य गम्यत्वाच्च पल्योपमासङ्ख्येयभागश्च जघन्या नीलाया स्थिति , दशोदधय पल्योपमासङ्ख्येयभागश्चोत्कृष्टा, इहापि जघन्या वालुकाप्रभायामेतावत्स्थितिकानामेव, उत्कृष्टा च धूमप्रभायामुपरितनप्रस्तटनारकाणा, तत्रापि येषामेतावती स्थितिरिति मन्तव्यम् ॥ ४२ ॥ १३३३ ॥

दसउदहीपलिओवममसंखभाग जहन्निया होइ । तित्तीससागराउ उक्कोसा होइ किण्हाए ॥ १३३४ ॥

दशोदधयस्तथा पल्योपमासङ्ख्येयभागो जघन्यिका भवति प्रक्रमात् स्थिति , कृष्णाया इति सम्बन्ध अस्याश्च, धूमप्रभायामेतावत्स्थितिकानामेव त्रयस्त्रिंशत्सागरोपमाणि उत्कृष्टा भवति, कृष्णाया स्थितिरिति प्रक्रम , इय च महातम प्रभाया तत्रैवैतावत्प्रमाणस्यायुष सम्भवात्, इह च नारकाणामुत्तरत्र च देवाना द्रव्यलेश्यास्थितिरित्येव चिन्त्यते तद्भावलेश्याना परिवर्त्तमानतया अन्यथापि स्थिते सम्भवात्, उक्त हि—"देवाण नारयाण य दव्वलेसा हवंति एयाओ । भावपरावत्तीए सुरनेरइआण छल्लेसा ॥ १ ॥" ४३ ॥ १३३४ ॥

नैरयिकाणा लेश्यास्थिति

पूर्वोक्त हि निगमयन्नुत्तरग्रन्थ प्रस्तावयन्नाह—

एसा नेरईयाण लेसाण ठिई उ वण्णिया होइ । तेण पर वुच्छामि तिरियमणुस्साण देवाण ॥ १३३५ ॥

एषा पूर्वोक्ता निरये भवा नैरयिकास्तत्सम्बन्धिनीनां लेश्यानां स्थितिः, तुः पूरणे वर्णिता-ख्याता भवति, तेणेति सूत्रत्वात्ततः परमित्यग्रतोऽपि वक्ष्यामि प्रक्रमात् लेश्यानां स्थितिं तिर्यङ्मनुष्याणां तथा देवानाम् ॥ ४४ ॥ १३३५ ॥

यथा प्रतिज्ञातमाह—

अंतोमुहुत्तमद्धं लेसाण ठिई जहिं जहिं जा उ । तिरियाण नराणं वा वज्जित्ता केवलं लेसं ॥ १३३६ ॥

अन्तर्मुहूर्त्ता-अन्तर्मुहूर्त्तकालं स्थितिर्जघन्योत्कृष्टा वेति शेषः, कतरासामित्याह-यस्मिन् २ इति पृथ्वीकायादौ सम्मूर्च्छिम-मनुष्यादौ च याः कृष्णाद्याः, तुः पूरणे, तिरश्चां मनुष्याणां च मध्ये सम्भवति तासां, एता हि क्वचित् काश्चित्सम्भवन्ति, यथा पृथ्वीजलवनस्पतिकायिकानां कृष्णाद्यास्तेजोलेश्यान्ताश्चतस्रो लेश्याः, तेजोवाय्वोः, द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियाणां च तिस्रः, पञ्चेन्द्रियतिरश्चां मनुष्याणां च षट् सम्मूर्च्छिममनुष्याणां तिस्रः, ननु एवं शुक्ललेश्याया अप्यन्तर्मुहूर्त्तमेव स्थितिः प्राप्तेत्याशङ्क्याह-वर्जयित्वा केवलां शुद्धां-शुक्ललेश्याम् ॥ ४५ ॥ १३३६ ॥

तिर्यङ्म-
नुष्याणां
लेश्यास्थितिः

अस्याः स्थितिमाह—

मुहुत्तद्धं तु जहन्ना उक्कोसा होइ पुव्वकोडी उ । नवहिं वरिसेहिं ऊणा नायव्वा सुक्कलेसाए ॥ १३३७ ॥

प्राग्वत्, अन्तर्मुहूर्त्तमेव, उत्कृष्टा भवति पूर्वकोटी नवभिर्वर्षैर्न्यूना ज्ञातव्या शुक्लायाः स्थितिरिति प्रक्रमः, इह यद्यपि कश्चित् पूर्वकोट्यायुरष्टवार्षिक एव व्रतपरिणाममवाप्नोति, तथापि नैतावद्वयःस्थस्य वर्षपर्यायादर्वाक् शुक्ललेश्यायाः सम्भव इति नवभिर्वर्षैरूना पूर्वकोटिरुच्यते ॥ ४६ ॥ १३३७ ॥

एसा तिरियनराण लेसाण ठिई उ वण्णिया होइ। तेण पर वुच्छामि लेसाण ठिई उ देवाण ॥ १३३८ ॥

एसा० स्पष्टा ॥ ४७ ॥ १३३८ ॥

प्रतिज्ञातमाह—

दसवाससहस्साइ किण्हाए ठिई जहन्निया होइ। पलियमसखिज्जइमो उक्कोसो होइ किण्हाए ॥ १३३९ ॥

दशवर्षसहस्राणि कृष्णाया स्थितिर्जघन्यिका भवति, भवनपतिव्यन्तरेषु चास्या सम्भव, पल्योपमासङ्ख्येयतम प्रस्तावाद् भाग उत्कृष्टा भवति कृष्णाया स्थितिरिति प्रक्रम, इयमपि तेषामेवोत्कृष्टा द्रष्टव्या ॥ ४८ ॥ १३३९ ॥

जा किण्हाइ ठिई खलु उक्कोसा सा उ समयमब्भहिआ। जहन्नेण नीलाए पलियमसख च उक्कोसा ॥ १३४० ॥

या कृष्णाया स्थिति खलुर्वाक्यालङ्कारे उत्कृष्टा सा तु-सैव समयाभ्यधिका जघन्येन नीलाया, सूत्रत्वात् पल्योपमासङ्ख्येयश्च भाग, उत्कृष्टा स्थिति, नवर बृहत्तमोऽयमसङ्ख्येयभागो ग्राह्य ॥ ४९ ॥ १३४० ॥

जा नीलाइ ठिई खलु उक्कोसा सा उ समयमब्भहिया। जहन्नेण काऊए पलियमसख च उक्कोसा ॥ १३४१ ॥

या नीलाया स्थिति खलु उत्कृष्टा सैव समयाभ्यधिका जघन्येन कापोताया पल्योपमासङ्ख्येयश्च भाग उत्कृष्टा स्थिति, एतावदायुपामेव भवनपतिव्यन्तराणामिमे ज्ञेये, इहापि पूर्वस्मात् बृहत्तमोऽय भागो ग्राह्य ॥ ५० ॥ १३४१ ॥

इत्थ निकायद्वयभाविनीमाद्यलेश्यात्रयस्थितिमुक्त्वा सर्वनिकायभाविनीं तेजोलेश्यास्थितिमभिधातु प्रतिज्ञातमाह—

तेण पर वुच्छामी तेऊलेसा जहा सुरगणाण। भवणवइवाणमतरजोइसवेमाणियाण च ॥ १३४२ ॥

देवाना लेश्यास्थिति

ततः परं वक्ष्यामि, तेजोलेश्यां यथेति यथा येनावस्थाप्रकारेण सुरगणानां भवति तथेति शेषः, सुरगणानां—चतुर्निकाया-नामित्यर्थः, चः पूरणे ॥ ५१ ॥ १३४२ ॥

प्रतिज्ञातमेवाह—

पलिओवमं जहन्ना उक्कोसा सागरा उ दुण्हऽहिया । पलियमसंखिज्जेणं होइ भागेण तेऊए ॥ १३४३ ॥

पल्योपमं जघन्या, उत्कृष्टा सागरत्ति-सागरोपमे, तुरेवार्थः, द्वे-द्विसंख्ये अधिके-अर्गले, कियतेत्याह—पल्योपमासंख्येयेन भागेनेति योगः, भवति तैजस्याः स्थितिरिति प्रक्रमः, इयं च सामान्योपक्रमेऽपि वैमानिकनिकायविषयतयैव ज्ञेया, तत्र सौधर्मे-शानदेवानां जघन्यत उत्कृष्टतश्चैतावदायुषः सम्भवात्, उपलक्षणं चैतत् शेषनिकायतेजोलेश्यास्थितेः, ततश्च भवनपति-व्यन्तराणां जघन्यतो दशवर्षसहस्राणि, उत्कृष्टतस्तु भवनपतीनां सागरोपममधिकं, व्यन्तराणां च पल्योपमं, ज्योतिषां तु जघन्यत पल्योपमाष्टभागः, उत्कृष्टतस्तु वर्षलक्षाधिकं पल्योपमं, एतावन्मात्राया एवैषां जघन्यत उत्कृष्टतश्चायुःस्थितेः सम्भवात् ॥ ५२ ॥ १३४३ ॥



दसवाससहस्साइं तेऊइ ठिई जहन्निया होइ (जा काऊइ ठिई खलु उक्कोसा
सा उ समयमब्भहिया पा० ) । दुन्नुदही पलिओवमअसंखभागं च उक्कोसा ॥ १३४४ ॥ 

दसवासेत्यादि स्पष्टमेव, नवरं, अनेन निकायभेदमङ्गीकृत्यैव लेश्यास्थितिरुक्ता ॥ ५३ ॥ १३४४ ॥

देवाना लेश्यास्थिति

पद्माया स्थितिमाह—

जा तेऊइ ठिई खलु उक्कोसा सा उ समयमब्भहिया। जहन्नेण पम्हाए दस मुहुत्ताऽहियाइ उक्कोसा ॥१३४५॥

या तैजस्या स्थिति खलु उत्कृष्टा सा उत्तिन्सैव समयाभ्यधिका जघन्येन पद्माया स्थितिरिति प्रक्रम, दश तु—दशैव प्रस्तावात् सागराणि मुहूर्त्ताधिकानि उत्कृष्टा, इय च जघन्या सनत्कुमारे उत्कृष्टा च ब्रह्मलोके, अनयोरेतावदायु सम्भवात्, आह—यदीहान्तर्मुहूर्त्तमधिकमुच्यते, तत पूर्वत्रापि किं न तदधिकमुक्त?, देवभवलेश्याया एव तत्र विवक्षितत्वात्, प्रतिज्ञान हि "तेण पर वुच्छामि, लेसाण ठिई उ देवाण"ति, ननु एव हीहान्तर्मुहूर्त्ताधिकत्व विरुध्यते?, न, अभिप्रायापरिज्ञानात्, अत्र हि प्राग्युत्तरभवलेश्यापि "अतोमुहुत्तमि गए" इति वचनात्, देवसम्बन्धिन्येवेति प्रदर्शनार्थमित्थमुक्तमिति न विरोध ॥५४॥१३४५॥

शुक्लाया स्थितिमाह—

जा पम्हाइ ठिई खलु उक्कोसा सा उ समयमब्भहिया। जहन्नेण सुक्काए तित्तीसमुहुत्तमब्भहिया ॥१३४६॥

त्रयस्त्रिंशन्मुहूर्त्ताभ्यधिकानि सागराण्युत्कृष्टेति च गम्य, अत्र जघन्या लान्तके, उत्कृष्टा तु लान्तकादारभ्य यावत्सर्वार्थसिद्धेषु, अत्रैतावदायुष सम्भवात् ॥ ५५ ॥ १३४६ ॥

सम्प्रति गतिद्वारमाह—

किण्हा नीला काऊ तिन्निवि लेसाउ अहम्मलेसाउ। एयाहि तिहिवि जीवो दुग्गइ उववज्जई ॥ १३४७॥

गाथा २, तिस्रोऽप्येता अधर्मलेश्याः, पापोपादानहेतुत्वात्, यद्येवं ततः किमित्याह–एताभिः पूर्वोक्ताभिः तिसृभिरपि कृष्णादिलेश्याभिर्जीवो दुर्गतिं उपपद्यते–प्राप्नोति, यद्वा सुव्यत्ययात् दुर्गतावुत्पद्यते–जायते, सङ्क्लिष्टेन तत्प्रायोग्यायुष एव तद्वतां वन्धसम्भवादिति ॥ ५६ ॥ १३४७ ॥

तेउ पम्हा सुक्का तिन्निवि एयाउ ( या अधम्मलेसाउ पा० ) धम्मलेसाउ।
एयाहि तिहिवि जीवो सुग्गइं उववज्जई ॥ १३४८ ॥

तथा तैजसी पद्मा शुक्का तिस्रोऽप्येता धर्मप्रधाना लेश्या धर्मलेश्याः, विशुद्धत्वेनासां धर्महेतुत्वात्, अत एव एताभिस्तिसृभिरपि तैजस्यादिलेश्याभिर्जीवः सुगतिं मुक्तिं चोपपद्यते, यद्वा प्राग्वत् सुगतावुत्पद्यते–जायते, तादृगायुर्बन्धतः सकलकर्मापगमाच्च ॥ ५७ ॥ १३४८ ॥

साम्प्रतमायुर्द्वारावसरः, तत्र च यस्यां लेश्यायां यदायुषो मानं तत् स्थितिद्वारे एवार्थादुक्तं, इह तु इदमुच्यते–अवश्यं हि जन्तुर्यल्लेश्येपूत्पत्स्यते तल्लेश्य एव म्रियते, तथा चागमः–“जल्लेसाइं दव्वाइं परिआइत्ता कालं करेइ तल्लेसो उववज्जइ”त्ति। तत्र जन्मान्तरभाविलेश्यायाः किं प्रथमसमये परभवायुष उदयः आहोस्विच्चरमसमये अन्यथा वा ?, इति संशयापनोदायाह—

लेसाहिं सव्वाहिं पढमे समयंमि परिणयाहिं तु।
न हु कस्सइ उववत्ति( नवि कस्सवि उववाओ पा० ) परे भवे अत्थि जीवस्स ॥ १३४९ ॥



जन्मान्तरोपपत्तौ लेश्याया अधिकारः

लेसाहिमित्यादि गाथात्रय, लेश्याभि सर्वाभिरिति कृष्णादिपञ्चिरप्याद्ये समये तत्प्रतिपत्तिकालापेक्षया परिणताभि प्रस्तावात् आत्मरूपतामापन्नाभिर्लक्षितस्य, तु पूरणे, न हु नैव कस्यापि उपपात परे-अन्यस्मिन् भवेऽपि जीवस्य ॥५८॥१३४९॥

जन्मान्तरोपपत्तौ लेश्या या अधिकार

लेसाहिं सव्वाहिं चरमे समयम्मि परिणयाहिं तु। न हु कस्सइ उववत्ति परे भवे अत्थि जीवस्स ॥ १३५० ॥

लेश्याभि सर्वाभिश्चरमे समये परिणताभि तु -पूरणे न हु-नैव, कस्याप्युपपात परे भवे भवति जीवस्य ॥ ५९ ॥ १३५० ॥

कदा तर्हि? इत्याह—

अतमुहुत्तम्मि गए अतमुहुत्तम्मि सेसए चेव। लेसाहि परिणयाहिं जीवा गच्छंति परलोय ॥ १३५१ ॥

अन्तर्मुहूर्ते गते एव-अतिक्रान्ते एव, तथा अन्तर्मुहूर्ते शेषके एव अनतिक्रमाने एव लेश्याभि परिणताभिरुपलक्षिता जीवा गच्छन्ति परलोक-भवान्तर, इत्थ चैतन्मृतिकाले भाविभवलेश्याया उत्पत्तिकाले चातीतभवलेश्याया अन्तर्मुहूर्तमवश्यम्भावात्, अनेन चान्तर्मुहूर्तावशेषे आयुषि परभवलेश्यापरिणाम इत्युक्त स्यात् ॥ ६० ॥ १३५१ ॥

इत्थ लेश्याना नामाद्युक्त्वा साम्प्रतमध्ययनार्थमुपसहरन्नुपदेशमाह—

तम्हा एयासि लेसाण, अणुभाव वियाणिया। अप्पसत्थाउ वज्जित्ता, पसत्थाओ अहिट्ठए मुणि ॥१३५२॥त्तिबेमि॥

॥ लेसज्झयण ॥ ३४ ॥

यस्मात् एता अप्रशस्ता दुर्गतिहेतवः प्रशस्ताश्च सुगतिहेतवस्तस्मात् एतासां पूर्वोक्तानां लेश्यानामनुभागं उत्कृष्टं विज्ञाय-विशेषेणावबुध्य अप्रशस्ताः-कृष्णाद्यास्तिस्रो वर्जयित्वा, प्रशस्ताः-तेजस्याद्यास्तिस्रोऽधितिष्ठेत्-भावप्रतिपत्त्या आश्रयेत् मुनिरिति शेषः ॥ ६१ ॥ १३६२ ॥

लेशाख्य चतुस्त्रिंश-मध्ययनम् ३४

लेश्याध्ययनोपसंहारे मुनेरुपदेशः

इति लेश्याध्ययनावचूरिः ॥ ३४ ॥

॥ इति श्रीउत्तराध्ययने चतुस्त्रिंशत्तमस्य लेश्याध्ययनस्य अवचूरिः समाप्ता ॥

# अथ अनगारमार्गगतिरितिनाम पञ्चत्रिंशत्तममध्ययनम् ।

अनगारमार्गगतिकथनप्रतिज्ञा

अनन्तराध्ययने अशुभानुभावलेश्यात्यागत शुभानुभावा एव लेश्या अधिष्ठितव्या इत्युक्त, एतच्च भिक्षुगुणव्यवस्थितेन कर्तुं शक्य, तद्व्यवस्थान च तत्परिज्ञानत इति तदर्थमिदमारभ्यते, अनगारमार्गगतिरितिनाम—

सुणेह मे एगग्गमणा, मग्गं सव्वं (बुद्धेहिं) देसियं । जमायरंतो भिक्खू, दुक्खाणंतकरो भवे ॥ १३५३ ॥

श्रुणुत–आकर्णयत मे–मम कथयत इति शेष, एकाग्रमनस–अनन्यगतचित्ता सन्त, शिष्या इति शेष, किं तदित्याह–मार्गं प्रक्रमात् मुक्ते बुद्धै–अवगतयथावद्वस्तुतत्त्वैरर्हद्भि देशित–प्रतिपादित अर्थत सूत्रतश्च, तमेव विशेषयति–य मार्गं आचरन्–आसेवमानो भिक्षु–मुनि दु खाना अन्त–पर्यन्तस्तत्करणशीलोऽन्तकरो भवेत्, सकलकर्मनिर्मूलनादिति भाव, तदनेनासेव्यासेवकसम्बन्धेनानगारसम्बन्धित्व मार्गस्य तत्फल च मुक्तिगतिरिति दर्शित, ततश्चानगारमार्गं तद्गतिं च श्रुणुत इत्यर्थादुक्त भवति ॥ १ ॥ १३५३ ॥

यथा प्रतिज्ञातमाह—

गिहवासं परिच्चज्जा, पव्वज्जामस्सिए मुणी । इमे संगे वियाणिज्जा, जेहिं सज्जंति माणवा ॥ १३५४ ॥

गिहवासमित्यादि २० सूत्राणि, गृहवास–गृहावस्थान यद्वा गृहमेव पारवश्यहेतुतया पाशो गृहपाशस्त परित्यज–परिहृत्य

प्रव्रज्यां–सर्वविरतिरूपां आश्रितः–प्रतिपन्नो मुनिः इमान् प्रतिप्राणि प्रतीततया प्रत्यक्षान् सङ्गान्–पुत्रकलत्रपौत्रादीन् प्रतिबन्धान् विजानीयात्–भवहेतवोऽमी इति विशेषेणावबुध्येत, ज्ञानस्य च विरतिफलत्वात् प्रत्याचक्षीतेत्युक्तं भवति, सङ्गशब्दव्युत्पत्तिमाह–सुब्व्यत्ययाद्येषु सज्यन्ते–प्रतिबध्यन्ते कर्मणेति गम्यं, के ते ? मानवा–मानुषा उपलक्षणत्वादन्येऽपि जन्तवः ॥ २ ॥ १३५४॥

तहेव हिंसं अलियं, चोज्जं अब्बंभसेवणं । इच्छाकामं च लोभं च, संजओ परिवज्जए ॥ १३५५ ॥

तथेति समुच्चये एवः पूरणे, हिंसां–प्राणव्यपरोपणं, अलीकं–अनृतभाषणं, चौर्यं–अदत्तादानं, अब्रह्मसेवनं–मैथुनाचरणं, इच्छारूपः काम इच्छाकामस्तं च–अप्राप्तवस्तुकाङ्क्षारूपं लोभं च–लब्धवस्तुविषयगृध्यात्मकं, अनेनोभयेनापि परिग्रह उक्तः, ततः परिग्रहं च, संयतः–यतिः परिवर्जयेत्–परिहरेत्, अनेन मूलगुणा उक्ताः ॥ ३ ॥ १३५५ ॥

मूलगुणव्यवस्थितस्यापि चावश्यमाश्रयाहाराभ्यां प्रयोजनं, तयोश्च तदतिचारहेतुत्वमपि कदाचित्स्यादिति मन्वानस्तत्परिहाराय सूत्रपञ्चकेन तावदाश्रयचिन्तां प्रति यतते—

मणोहरं चित्तघरं, मल्लधूवणवासियं । सकवाडं पंडरुल्लोयं, मणसावि न पत्थए ॥ १३५६ ॥

मनोहरं–चित्ताक्षेपकं, किं तत् ? प्रधानं गृहं चित्रगृहं, तदपि कीदृशं ? माल्यैः–ग्रथितपुष्पैः धूपनैश्च–कालागुरुतुरुष्कादिसम्बन्धिभिर्वासितं–सुरभीकृतं माल्यधूपेन वासितं, सकपाटं–कपाटसहितं, तदपि पाण्डुरोल्लोचं–श्वेतवस्त्रभूषितं मनसापि, आस्तां वचसा, न प्रार्थयेत्–न अभिलषेत्, किं पुनस्तत्र तिष्ठेदिति भावः ॥ ४ ॥ १३५६ ॥

किमेतदुपदिश्यते इत्याह—

इंदियाणि उ भिक्खुस्स, तारिसम्मि उवस्सए । दुक्कराइ तु धारेउ ( निवारेउ पा० ), कामरागविवड्ढणे ॥१३५७॥

इन्द्रियाणि—चक्षुरादीनि तुरिति यस्मात् भिक्षो —अनगारस्य तादृशे—तथाभूते उपाश्रये दु खेन क्रियन्ते—करोते सर्वधा-त्वर्थात् शक्यन्ते इति दुष्कराणि, दुरशकानीत्यर्थ , निवारयितु—नियन्त्रयितु, स्वस्वविषयप्रवृत्तेरिति गम्य, कीदृशि ? कामा—इष्टा इन्द्रियविषयास्तेषु राग —अभिष्वङ्गस्तस्य विवर्द्धने—विशेषवृद्धिहेतौ कामरागविवर्द्धने ॥ ५ ॥ १३५७ ॥

तर्हि क्व स्थातव्यमित्याह—

सुसाणे सुन्नगारे वा, रुक्खमूले व इक्कओ ( एगया पा० ) ।
पइरिके ( पारक्के पा० ) परकडे वा, वास तत्थऽभिरोयए ॥ १३५८ ॥

श्मशाने—प्रेतभूमौ, शून्यागारे—उद्वसभूमौ, वा विकल्पे, वृक्षमूले वा समीपे, एकक —रागद्वेषविकल —असहायो वा, तथा विधयोग्यताया, पइरिके—देशी भाषया एकान्ते स्त्र्याद्यसङ्कुले, परै कृते—निष्पादिते, स्वार्थमिति गम्य, वा समुच्चये, वास—अवस्थान, तत्र श्मशानादौ अभिरोचयेत्—प्रतिभासयेत्, अर्थात् आत्मने, भिक्षुरित्युत्तरेण योग ॥ ६ ॥ १३५८ ॥

फासुयम्मि अणाबाहे, इत्थीहिं अणभिद्दुए । तत्थ सकप्पए वास, भिक्खू परमसजए ॥ १३५९ ॥

प्रासुके—अचित्तीभूतभूभागे, तथा असती बाधा आत्मन परेषा च गन्तुकसत्त्वाना गृहस्थाना च यस्मिन्, स्त्रीभिरुपलक्षणा त्पण्डकादिभिश्चानभिद्रुते—अनुपद्रुते, तदुपद्रवरहित इत्यर्थ , एतानि हि मुक्तिपथप्रतिपन्थित्वेन तत्प्रवृत्तानामुपद्रवहेतुभूतानीत्येव

मभिधानं, तत्र प्रागुक्ते श्मशानादौ सम्यक् कल्पयेत्–कुर्यात् सङ्कल्पयेत्, कं ?, वासं, भिक्षणशीलो भिक्षुः स च शाक्यादिरपि स्यादत आह–परमः–प्रधानः, स चेह सर्वप्रधानत्वात् मोक्षस्तदर्थं सम्यग् यतते इति परमसंयतो, जिनमार्गप्रतिपन्न इत्युक्तं भवति, प्राग् वासं तत्राभिरोचयेत् इत्युक्ते रुचिमात्रेणैव कश्चित्तुष्येदिति तत्र सङ्कल्पयेत् वासमित्युक्तम् ॥ ७ ॥ १३५९ ॥

ननु इह किं परकृत इति विशेषणमुक्तं ? इत्याशङ्क्याह—

न सयं गिहाइं कुव्विज्जा, नेव अन्नेहिं कारए । गिहकम्मसमारंभे, भूयाणं दिस्सए वहो ॥ १३६० ॥

न स्वयं–आत्मना गृहाणि उपाश्रयरूपाणि कुर्वीत–विदधीत, नैवान्यैर्गृहस्थादिभिः कारयेत्–विधापयेत्, उपलक्षणात् नापि कुर्वन्तमनुमन्येत, किमिति ?, यतः गृहनिष्पत्त्यर्थं कर्म गृहकर्म इष्टकामृदानयनादि तस्य समारम्भः–प्रवर्त्तनं गृहकर्मसमारम्भस्तस्मिन् भूतानां एकेन्द्रियादिप्राणिनां दृश्यते कोऽसौ ?, वधः–विनाशः ॥ ८ ॥ १३६० ॥

केषामित्याह—

तसाणं थावराणं च, सुहुमाणं बायराण य । तम्हा गिहसमारंभं, संजओ परिवज्जए ॥ १३६१ ॥

त्रसानां–द्वीन्द्रियादीनां, स्थावराणां–पृथिव्याद्येकेन्द्रियाणां, चः समुच्चये, तेषामपि सूक्ष्माणां देहापेक्षया, न जीवप्रदेशापेक्षया, तस्यामूर्त्ततया एवं प्राय व्यवहाराभावात्, बादराणां चैवमेव स्थूलानां, उपसंहर्त्तुमाह–तम्हत्ति यस्मादेवं भूतवधस्तस्मात् गृहसमारम्भं संयतः–सम्यग् हिंसादिभिरुपरतः अनगार इत्यर्थः, परिवर्जयेत् ॥ ९ ॥ १३६१ ॥

इत्यमाश्रयचिन्ता विधायाहारचिन्तामाह—

तहेव भत्तपाणेसु, पयणे पयावणेसु य। पाणभूयदयट्ठाए, न पए ण पयावए ॥ १३६२ ॥

तथैव-तेनैव प्रकारेण भक्तानि च-शाल्योदनादीनि पानानि च पय प्रभृतीनि भक्तपानानि तेषु, पचनानि-स्वय विक्लेदापादनक्वथनानि पाचनानि च तान्येवान्यै पचनपाचनानि तेषु च भूतवधो दृश्यत इति प्रक्रम, तत किमित्याह-प्राणा-द्वीन्द्रियादय भूतानि-पृथिव्यादीनि तेषा रक्षण प्राणभूतदया तदर्थ-तद्धेतो, कोऽर्थ? पचनपाचनप्रवृत्ताना य सम्भवी जीवोपघात स मा भूदिति न पचेत् स्वय भक्तादीनि, प्रक्रमात् नापि पाचयेत् तदेवान्यै ॥ १३६२ ॥

अमुमेवार्थं स्पष्टतरमाह—

जलधन्ननिस्सिया जीवा, पुढवीकट्ठनिस्सिया। हम्मति भत्तपाणेसु, तम्हा भिक्खू न पयावए ॥ १३६३ ॥

जल च धान्य च-शाल्यादि तन्निश्रिता जलधान्यनिश्रितास्तत्रान्यत्र चोत्पद्य ये तन्निश्रया स्थिता पूतरकभुजगेलिकापिपीलिकाद्या, उपलक्षणत्वात्तद्रूपाश्च जीवा -प्राणिन, पृथ्वीकायनिश्रिता एकेन्द्रियाद्या हन्यन्ते भक्तपानेषु प्रक्रमात् पच्यमानादिषु, यत एव तस्माद् भिक्षु अपेर्गम्यत्वात् पाचयेदपि न, किं पुन स्वय पचेत्, अनुमतिनिषेधोपलक्षण चैतत् ॥ ११ ॥ १३६३ ॥

विसप्पे सव्वओ धारे, बहुपाणविणासणे। नत्थि जोइसमे सत्थे, तम्हा जोई न दीवए ॥ १३६४ ॥

किच विसर्पति-स्वल्पमपि बहुभवतीति विसर्प्प सर्वत -सर्वासु दिक्षु धारेव धारा जीवविनाशिका शक्तिरस्येति सर्वतो धार सर्वदिग्जन्तूपघातकरत्वात्, अत एव बहुप्राणविनाशन-अनेकजीवजीवितव्यपरोपक, नास्ति ज्योति सम-अग्नितुल्य शस्त्रमन्य

दिति गम्यं, तस्याविसर्पित्वादसर्वतो धारत्वात् अल्पजन्तुहन्तृत्वाच्चेति भावः, प्राकृतत्वात्सर्वत्र लिङ्गव्यत्ययः, यस्मादेवं तस्मात् ज्योतिः—अग्निं न दीपयेत्—न ज्वालयेत्, अनेनाग्निज्वलनाविनाभावित्वात् पचनस्य परिहार एवोक्तः, इत्थं च विशेषप्रक्रमेऽपि सामान्याभिधानं प्रसङ्गतः शीतापनोदादिप्रयोजनेनापि तदारम्भनिषेधार्थं, आधाकर्माद्यविशुद्धिकोटिपरिहारार्थं, तदपरिहारे हि अवश्यम्भावी पचनानुमत्यादिप्रसङ्गः ॥ १२ ॥ १३६४ ॥

अथ जीववधाभावात् करोतु क्रयविक्रयौ यतिरिति कस्यचिदाशङ्का स्यादतस्तदपनोदाय हिरण्यादिपरिग्रहनिषेधपूर्वं तयोर्निषेधमाह—

हिरण्णं च जायरूवं च, मणसावि न पत्थए। समलिट्ठुकंचणे भिक्खू, विरए कयविक्कए ॥ १३६५ ॥

हिरण्यं—स्वर्णं जातरूपं—रूप्यं चः—अनुक्ताशेषधनधान्यादिसमुच्चये, मनसापि आस्तां वाचा, अपेर्गम्यत्वात्, प्रार्थयेदपि न ममामुकं स्यादिति, किं पुनः परिगृह्णीयादित्यपेरर्थः, कीदृशः सन् समे—प्रतिबन्धाभावातुल्ये लेष्टुकाञ्चने यस्य सः, एवंविधश्च सन् भिक्षुर्विरतः—निवृत्तः स्यादिति शेषः, कुतः?, क्रयश्च—मूल्येनान्यसत्कस्य वस्तुनो ग्रहणं विक्रयश्च—आत्मवस्तुनोऽन्यस्य दानं क्रयविक्रयं तस्मात्, पञ्चम्यर्थे सप्तमी ॥ १३ ॥ १३६५ ॥

किमित्येवमत आह—

किणंतो कइओ होइ, विक्किणंतो अ वाणिओ। कयविक्कयंमि वट्टंतो, भिक्खू हवइ तारिसो ॥ १३६६ ॥

क्रीणन्—परकीयं वस्तु मूल्येनाऽऽददानः क्रयोऽस्यास्तीति क्रयिको भवति, तथाविधेतरलोकसदृशः स्यात्, विक्रीणंश्च—स्वकीयं

वस्तु तथैव परस्य ददानो वणिग् भवतीति योगो, वाणिज्यप्रवृत्तत्वादिति भाव, अत एव क्रयविक्रये वर्त्तमान–प्रवर्त्तमानो भिक्षुर्न भवति तादृशो, गम्यत्वाध्याहृश सूत्रे अभिहितो भावभिक्षुरिति भाव ॥ १४ ॥ १२६६ ॥

तत किमित्याह—

भिक्खियव्व न केयव्व, भिक्खूणा भिक्खवित्तिणा। कयविक्कओ महादोसो, भिक्खावित्ती सुहावहा ॥१२६७॥

भिक्षितव्य–याचितव्य, तथाविध वस्तु इति गम्य, न–नैव क्रेतव्य–मूल्येन ग्रहीतव्य, केन ?, भिक्षुणा, कीदृशा ?, भिक्षया वृत्ति–निर्वहण यस्यासौ भिक्षावृत्ति तेन, क्रयविक्रयमेव महादोष उक्तरीत्या लिङ्गव्यत्यय प्राग्वत्, भिक्षावृत्ति शुभ इह परलोकयो कल्याण–सुख च आहयति–प्रापयतीति शुभावहा सुखावहा वा, अनेन क्रीतपरिहार उक्त, स चादोषविशुद्धिकोटीगतदोषोपलक्षणम् ॥ १५ ॥ १२६७ ॥

भिक्षितव्यमुक्त, तच्च दानश्रद्धादिमति वेश्मनि क्वचिदेकत्रैव स्यादत आह—

समुयाण उञ्छमेसिज्जा, जहासुत्तमणिंदिय। लाभालाभमि सतुट्ठे, पिंडवाय चरे मुणी (गवेसए पा०) ॥१२६८॥

समुदान भैक्ष्य नत्वेकभिक्षा, तच्च उञ्छ–अन्यान्यग्रहात्स्वल्पमात्रामीलनात् एषयेत्–गवेषयेत्, तच्चोत्सूत्रमपि स्यादत आह–यथासूत्र–आगमानतिक्रमेण, अत एव अनिन्दित, तथा लाभालाभे सन्तुष्ट–ओदनादे प्राप्तावप्राप्तौ च सन्तोषवान्, न तु वाञ्छाविधुरितचित्त, इह लाभे वाञ्छा उत्तरोत्तरवस्तुविषया, पिण्ड्यत इति पिण्डो–भिक्षा तस्य पात–पतन प्रक्रमात्पात्रे अस्मिन्निति पिण्डपात–भिक्षाऽऽटन तच्चरेत्–आसेवेत, वाक्यान्तरत्वादपौनरुक्त्यम् ॥ १६ ॥ १२६८ ॥

इत्थं च पिण्डमवाप्य यथा भुञ्जीत तथाह—

अलोलो न रसे गिद्धो, जिब्भादंतो अमुच्छिओ । न रसट्ठाए भुंजिज्जा, जवणट्ठाए महामुणी ॥ १३६९ ॥

अलोलः—सरसान्ने प्राप्ते न लाम्पट्यवान्, न रसे—स्निग्धादौ गृद्धः—प्राप्ते अभिकाङ्क्षावान्, कथं चैवंविधो ?, यतः प्राकृतत्वात् दान्ता—वशीकृता जिह्वा—रसना येनासौ दान्तजिह्वः, अत एव अमूर्च्छितः सन्निधेरकरणेन तत्काले वा अभिष्वङ्गाभावेन, एवंविधश्च सन् न—नैव रसार्थ—सरसमिदमहमास्वादयामीति, यद्वा रसो—धातुविशेषः स चाशेषधातूपलक्षणं ततस्तदुपचयः स्यादित्येवमर्थं न भुञ्जीत, किमर्थं तर्हीत्याह—यापना—निर्वाहः, स चार्थात् संयमस्य, तदर्थं, महामुनिः—तपस्वी, अनेन पिण्डविशुद्धिरुक्ता ॥ १७ ॥ १३६९ ॥

तदेवमादौ मूलगुणान् विधेयतया अभिधाय, तत्प्रतिपालनार्थमाश्रयाहारचिन्ताद्वारेणोत्तरगुणांश्च सम्प्रति मूलोत्तरगुणस्थितः, तत एवात्मनि उत्पन्नबहुमानः कश्चिदर्चनाद्यपि प्रार्थयेदिति तन्निषेधार्थमाह—

अच्चणं रयणं चेव, वंदणं पूअणं तहा । इड्डीसक्कारसम्माणं, मणसावि न पत्थए ॥ १३७० ॥

अर्चनां—पुष्पादिभिः पूजां, रचनां—निषद्यादिविषयां स्वस्तिकादिन्यासात्मिकां वा, चः समुच्चये, एवः अवधारणे नेत्यनेन सम्भन्त्स्यते, वन्दनं—नमस्तुभ्यमिति वाचा स्तवनं, पूजनं—विशिष्टवस्त्रादिभिः प्रतिलाभनं, तथेति समुच्चये, ऋद्धिश्च—श्रावकोपकरणादिसम्पद् आमर्पौषध्यादिरूपा वा सत्कारश्चार्घप्रदानादिः सन्मानश्चाभ्युत्थानादि, ऋद्धिसत्कारसन्मानं तत् मनसापि, आस्तां वचसा, नैव प्रार्थयेत्, ममैवं स्यादिति अभिलषेत् ॥ १८ ॥ १३७० ॥



अनगारमार्गगतिः

किं पुन कुर्यादित्याह—

सुक्क झाण झियाइज्जा, अणियाणे अकिंचणे। वोसट्ठकाए विहरिज्जा, जाव कालस्स पज्जओ ॥ १३७१ ॥

शुक्लध्यान यथा स्यादेव ध्यायेत्–चिन्तयेत् अनिदान –अविद्यमाननिदान अकिंचन , व्युत्सृष्ट काय –शरीर येन स तथा, विहरेत्–अप्रतिबद्धविहारितयेति गम्य, यावदिति मर्यादाया कालस्य–मृत्यो पर्याय –परिपाटी प्रस्ताव इत्यर्थो यावन्मरणसमय , प्रक्रमप्राप्तो भवतीति भाव ॥ १९ ॥ १३७१ ॥

एवंविधो यावदायुर्विहृत्य मरणसमये यत्कृत्वा यत्फलमवाप्नोति तदाह—

निज्जूहिऊण आहार, कालधम्मे उवट्ठिए। चइऊण माणुस बुंदिं, पहू दुक्खा विमुच्चई ॥ १३७२ ॥

परित्यज्य आहार–अशनादिसंलेखनाक्रमेणैव न झगिति, झगिति तत्करणे बहुतरदोषसम्भवात्, तथा चागम –"देहम्मि असंलिहिए सहसा धाऊहिं खिज्जमाणेहिं" इत्यादि, कदा ?, कालधर्मे–आयु क्षयरूपे मृत्युस्वभावे उपस्थिते–प्रत्यासन्नीभूते, त्यक्त्वा–अपहाय मानुषीं–मनुष्यसम्बन्धिनीं बोन्दिं–शरीर, प्रभुर्वीर्यान्तरायक्षयतो विशिष्टसामर्थ्यवान् दु खै शारीरमानसै विमुच्यते–विशेषेण त्यज्यते, तद्धेतुकर्माभावादिति भाव ॥ २० ॥ १३७२ ॥

कर्माभावाद् दु खाभाव

कीदृश सन्नित्याह—

निम्ममो निरहकारो, वीयराओ अणासवो। सपत्तो केवल नाण, सासय परिनिव्वुडे ॥ १३७३ ॥ त्तिबेमि ॥

॥ अणगारमग्ग ॥ ३५ ॥

निर्ममः—अपगतममीकारः, निरहङ्कारः—अहममुकजातीय इत्याद्यहङ्काररहितः, ईदृक्षः कुतो ?, यतो वीतरागः—विगतरागद्वेषः, तथा अनाश्रवः—कर्माश्रवरहितः, मिथ्यात्वादितद्धेत्वभावात्, सम्प्राप्तः केवलज्ञानं शाश्वतं कदाचिदव्यवच्छेदात् परिनिर्वृतः अस्वास्थ्यहेतुकर्माभावतः स्वस्थीभूतः ॥ २१ ॥ १३७३ ॥

इति अनगारमार्गगत्यध्ययनावचूरिः ॥ ३५ ॥

॥ इति श्रीउत्तराध्ययने पञ्चत्रिंशत्तमस्य अनगारमार्ग-
गत्यध्ययनस्य अवचूरिः समाप्ता ॥



तती मोक्षः

# अथ जीवाजीवविभक्तिरितिनाम षट्त्रिंशत्तममध्ययनम् ।

अनन्तराध्ययने हिंसापरिवर्जनादयो भिक्षुगुणा उक्ता, ते च जीवाजीवस्वरूपपरिज्ञाने सत्येवासेवितु शक्यन्ते इति तज्ज्ञापनार्थमिदमारभ्यते, अस्य च जीवाजीवविभक्तिरिति नाम—

जीवाजीवविभत्तिं मे, सुणेहेगमणा इओ। ज जाणिऊण भिक्खू ( समणो पा० ), सम्म जयइ सजमे ॥ १३७४ ॥

जीवाजीवाना विभजन विभक्ति–तत्तद्भेदादिदर्शनतो विभागेनावस्थापन जीवाजीवविभक्तिस्ता, शृणुत, शिष्या इति शेष, मे–मम कथयत इति गम्य, कीदृशा सन्त ?, एक मतान्तरोक्तजीवाजीवविभक्त्यावगतत्वेन मन–चित्त येषा ते एकमनस, इहैव श्रद्धानवन्त इत्यर्थ, इत–अस्मादनन्तराध्ययनादनन्तर, या जीवाजीवविभक्तिं ज्ञात्वा भिक्षु–मुनि सम्यक्–प्रशस्त यथा स्यादेव यतते–यत्नवान् भवति, क्व ? सयमे ॥ १ ॥ १३७४ ॥

जीवाजीवविभक्तिज्ञानमिव लोकालोकविभक्तिज्ञानमपि सयमयतनाया विषयतयोपयुज्यते एवेत्याह—

जीवा चेव अजीवा य, एस लोए वियाहिए। अजीवदेसमागासे, अलोए से वियाहिए ॥ १३७५ ॥

जीवाश्चाजीवाश्च, कोऽर्थ ?–जीवाजीवरूप, एष प्रतीतो लोको व्याख्यातो–विशेषेणोक्त, तीर्थकृदाद्यैरिति गम्य, अजीव इत्यनेनाजीवसमुदाय उपलक्ष्यते, स च धर्माधर्माकाशपुद्गलात्मक, तस्य देश अश, अजीवदेश आकाशमलोक स व्याख्यातो, धर्मास्तिकायादिवृत्तिरहितस्याकाशस्यैवालोकत्वात् ॥ २ ॥ १३७५ ॥

जीवाजीव प्ररूपण-प्रतिज्ञा

जीवाजीवानां विभक्तिः प्ररूपणाद्वारेणैवेति तां विधित्सुर्यथाऽसौ स्यात्तथाह—

दव्वओ खित्तओ चेव, कालओ भावओ तहा ( प्र०दव्वओ खित्तकालेहिं भावओ पज्जवेहि य )।
परूवणा तेसि भवे, जीवाणमजीवाण य ॥ १३७६ ॥

द्रव्यतः–द्रव्यमाश्रित्य इदमियच्चेदं द्रव्यं, क्षेत्रतश्चैवेदमियति क्षेत्रे, कालतः–इदमियत्स्थितिकं, भावत इमे अस्य पर्यायाः, तथेति समुच्चये, प्ररूपणा–यथास्वं भेदाद्यभिधानद्वारेण स्वरूपोपदर्शनं, तेषां भवेत्–स्यात्, जीवानामजीवानां चेति ॥३॥१३७६

तत्र स्वल्पवक्तव्यत्वात् द्रव्यतोऽजीवप्ररूपणामाह—

रूविणो चेवऽरूवी य, अजीवा दुविहा भवे। अरूवी दसहा वुत्ता, रूविणोऽवि चउव्विहा ॥ १३७७ ॥

गाथा ३, रूपं–स्पर्शाद्याश्रया मूर्त्तिस्तदेषां एषु वा अस्तीति रूपिणः, चः समुच्चये, एव पूरणे, अकारप्रश्लेषात् वचनव्यत्ययाच्च अरूपिणश्च, अजीवा द्विविधाः भवेयुः, तत्राप्यरूपिणो दशधा उक्ताः, पश्चात् निर्दिष्टत्वेऽपि चोक्तन्यायादनन्तराद्वा अमीषां पूर्वमुपादानं, रूपिणोऽपि पुनः चतुर्द्धा–चतुष्प्रकाराः, उभयत्राजीवा इति प्रक्रमः ॥ ४ ॥ १३७७ ॥

तत्रारूपिणो दशविधानाह—

धम्मत्थिकाए तद्देसे, तप्पएसे य आहिए। अधम्मे तस्स देसे य, तप्पएसे य आहिए ॥ १३७८ ॥

गाथा २, धारयति जीवपुद्गलान् गतिपरिणतांस्तत्तत्स्वभावत्वे इति धर्मः स चासौ अस्तीनां–प्रदेशानां कायश्च–सङ्घातश्च धर्मास्तिकायः तस्य धर्मास्तिकायस्य १, देशस्त्रिभागचतुर्भागादिस्तद्देशः २, तथा तस्य प्रदेशो–निरंशो भागस्तत्प्रदेशः ३, चः



अजीवभेदाः
धर्मास्ति-
कायानां
भेदाश्च

समुच्चये ३, आख्यात –कथित , न धारयति गतिपरिणतानपि जीवपुद्गलास्तत्स्वभावत्वेनावस्थापयति स्थित्युपष्टम्भकत्वात्तस्येत्यधम , पदेऽपि–पदैकदेशदर्शनात् अधर्मास्तिकाय ४, तस्यत्यधर्मास्तिकायस्य देश उक्तरूप ५, तत्प्रदेशश्चोक्तरूप एव ६, आख्यात ॥ ५ ॥ १३७८ ॥

तथा—

आगासे तस्स देसे य, तप्पएसे य आहिए । अद्धासमए चेव, अरूवी दसहा भवे ॥ १३७९ ॥

आङिति मर्यादया स्वस्वभावापरित्यागरूपया काशन्ते–स्वरूपेणावभासन्ते अस्मिन् पदार्थो इत्याकाश, यद्वा आङिति सर्वभावाभिव्याप्त्या काशते इत्याकाश तदेवास्तिकाय ७, तद्देश ८, तत्प्रदेशश्च ९, अद्धा–कालस्तद्रूप समय –अद्धासमय , निर्विभागत्वाचास्य न देशप्रदेशसम्भव १०, आवलिकादयस्तु पूर्वसमयनिरोधेनैवोत्तरसमयसद्भाव इति तत्त्वत समुदयसमित्याद्यसम्भवेन व्यवहारार्थमेव कल्पिता इतीह नोक्ता , उपसहारमाह–अरूपिणो दशधेति–दशप्रकारा भवेयु , एषा च यथाक्रम गतिस्थित्यवगाहोपष्टम्भकत्व वर्त्तना च लक्षण ज्ञेयम् ॥ ६ ॥ १३७९ ॥

सम्प्रत्येतानेव क्षेत्रत आह—

धम्माधम्मे य दोऽवेए, लोगमित्ता वियाहिया । लोगालोगे य आगासे, समए समयखित्तिए ॥ १३८० ॥

धर्माधर्मो–धर्मास्तिकायाधर्मास्तिकायौ, च पूरणे, द्वावप्येतौ लोकमात्रौ–लोकपरिमाणौ व्याख्यातौ, एतदवष्टब्धाकाशदेशस्यैव लोकत्वात्, तथा लोके अलोके चाकाश, सर्वगतत्वात्तस्य, समय इत्यद्धासमय समयोपलक्षित क्षेत्र समयक्षेत्र–अर्द्ध-

आकाशादीना भेदाः धर्मास्तिकायादीना क्षेत्र च

तृतीयद्वीपसमुद्रास्तद्विषयभूतमस्यास्तीति समयक्षेत्रिकः तत्परतस्तस्यासम्भवात्, तन्मूलत्वादावलिकादिकल्पनायास्तेऽप्येतावत्क्षेत्रवर्त्तिन एव, तथा चोक्तं-"समयावलिकापक्षमासर्त्वयनसञ्ज्ञिताः। नृलोक एव कालस्य, वृत्तिर्नान्यत्र कुत्रचित्॥" ॥ ७ ॥ १३८० ॥

एतानेव कालत आह—

धम्माधम्मागासा, तिन्निवि एए अणाइया। अपज्जवसिया चेव, सव्वद्धं तु वियाहिया ॥ १३८१ ॥

समएवि संतइं पप्प, एवमेव (एमेव संतइं पप्प समएवि पा०) वियाहिए।

आएसं पप्प साईए, सपज्जवसिएवि य ॥ १३८२ ॥

धर्माधर्माकाशानि त्रीण्यप्येतानि न विद्यते आदिरेषामित्यनादिकानि, इतः कालात् प्रभृति अमूनि प्रवृत्तानीत्यसम्भवात्, न पर्यवसितानि-अपर्यवसितानि-अनन्तानीत्यर्थः, न हि कुतश्चित् कालात्परत एतानि न भविष्यन्तीति सम्भवः, तथा च तोरेवार्थत्वात् सर्वाद्धामेव-सर्वकालमेव, सर्वदा स्वस्वरूपापरित्यागतो नित्यानीत्यर्थः, व्याख्यातानि-कथितानि, सर्वत्रसूत्रत्वात् लिङ्गव्यत्ययः, समयोऽपि सन्ततिं-अपरापरोत्पत्तिरूपप्रवाहात्मिकां प्राप्य-आश्रित्य एवमेव अनाद्यपर्यवसितत्वलक्षणेनैव प्रकारेण आख्यातः-प्ररूपितः, आदेशं विशेषं-प्रतिनियतव्यक्त्यात्मकं प्राप्य-अङ्गीकृत्य सादिकः सपर्यवसितः, अपिः समुच्चये, चः पुनरर्थो भिन्नक्रमश्च, आदेशं पुनः प्राप्येत्यर्थः, विशेषापेक्षया ह्यभूत्वायं भवति, भूत्वा च न भवतीति सादिनिऽधन उच्यते ॥ ८,९ ॥ १३८१-८२ ॥

एवमजीवानां अरूपिणां द्रव्यक्षेत्रकालैः प्ररूपणा कृता, सम्प्रति भावप्ररूपणावसरः, तत्र चामूर्त्तत्वेन नामीषां पर्याया



धर्मास्तिका-
यादीनां
कालमानम्

रूपिपर्याया इत्र वर्णादय प्ररूप्यमाणा अपि सवित्तिमानेतु शक्या , अनुमानतस्तु इतरथापि द्रव्यस्य पर्यायविकलस्यासम्भवात् गम्यन्त एवेति तत्प्ररूपणामनादृत्य द्रव्यतो रूपिण प्ररूपयितुमाह—

खधा य खधदेसा य, तप्पएसा तहेव य । परमाणुणो अ बोद्धव्वा, रूविणो अ चउव्विहा ॥ १३८३ ॥

स्कन्दन्ति—शुष्यन्ति धीयन्ते च—पोष्यन्ते च पुद्गलाना विचटनेन चटनेन चेति स्कन्धा , च समुच्चये, स्कन्धाना देशा — भागा स्कन्धदेशाश्च तेषा स्कन्धाना प्रदेशा—निरशा भागास्तत्प्रदेशा , तथैव चेति समुच्चये, बोद्धव्या —ज्ञातव्या , रूपिण , च पुनश्चतुष्प्रकारा, इह च देशप्रदेशाना स्कन्धेषु एवान्तर्भावात् स्कन्धा परमाणवश्चेति समासतो द्वावेव रूपिद्रव्यभेदौ ॥ १० ॥ १३८३ ॥

तयोश्च किं लक्षणमाह—

एगत्तेण पुहुत्तेण, खधा य परमाणु य ।

लोएगदेसे लोए अ, भइअव्वा ते उ खित्तओ । एत्तो कालविभाग तु, तेसि वुच्छ चउव्विह ॥ १३८४ ॥

गाथार्द्ध, एकत्वेन—समानपरिणतिरूपेण पृथक्त्वेन परमाण्वन्तरैरसङ्घातरूपेण लक्ष्यन्ते इति शेष , के एवमित्याह—स्कन्धा , चस्य भिन्नक्रमत्वात् परमाणवश्च, स्कन्धा हि सहतानेकपरमाणुरूपा , परमाणवश्च परमाण्वन्तरैरसहतिभाज , सम्प्रति एतानेव क्षेत्रत आह—लोए सूत्रार्द्ध, लोकस्य—चतुर्दशरज्ज्वात्मकस्य एकदेश—एकद्व्यादिसङ्ख्यातासङ्ख्यातप्रदेशात्मक प्रतिनियतो भागो लोकैकदेशस्तस्मिन्, लोके वा भक्तव्या—भजनीया दर्शनीया ते इति स्कन्धा परमाणवश्च, तु पूरणे, क्षेत्रत —क्षेत्रमाश्रित्य, अत्र

रूपिद्रव्य भेदा तेषा लक्षण च

चाविशेषोक्तावपि परमाणूनामेकदेश एवावस्थानात् स्कन्धविषयैव भजना ज्ञेया, ते हि विचित्रत्वात् परिणतेर्बहुतरप्रदेशोपचिता अपि केचिदेकप्रदेशे तिष्ठन्ति, अन्ये तु सङ्ख्येयेष्वसङ्ख्येयेषु च प्रदेशेषु यावत्सकललोकेऽपि, तथाविधाऽचित्तमहास्कन्धवद्भवेयुरितो भजनीया उच्यन्ते, इतः क्षेत्रप्ररूपणातोऽनन्तरमिति गम्यं, कालविभागे तु कालभेदं पुनः, तेषां स्कन्धादीनां वक्ष्ये, चतुर्विधं साद्यनादिसपर्यवसितापर्यवसितभेदेनानन्तरमेव वक्ष्यमाणेन, इदं सूत्रं पट्ट् पदं गाथेत्युच्यते, दशधर्मवत् ॥११॥१३८४॥

यथा प्रतिज्ञातमाह—

संतइं पप्प तेऽणाई, अप्पज्जवसिआवि अ। ठिइं पडुच्च साईआ, सपज्जवसिआवि अ ॥ १३८५ ॥

सन्ततिमुक्तरूपां प्राप्य—आश्रित्य ते स्कन्धाः परमाणवश्च अनादयः अपर्यवसिता अपि च, नहि ते कदाचित् प्रवाहतो न भूता न वा न भविष्यन्तीति, स्थितिं—प्रतिनियतक्षेत्रावस्थानरूपां प्रतीत्य—अङ्गीकृत्य, सादिकाः सपर्यवसिता अपि च, तदपेक्षया हि प्रथमतस्तथाऽस्थित्वैवावतिष्ठन्ते अवस्थाय च न पुनर्न भवन्तीत्यभिप्रायः ॥ १२ ॥ १३८५ ॥

सादिसपर्यवसितत्वेऽपि कियत्कालमेषामवस्थितिरित्याह—

असंखकालमुक्कोसं, इक्कं समयं जहन्नयं। अजीवाण य रूवीणं, ठिई एसा विआहिआ ॥ १३८६ ॥

असङ्ख्यकालं उत्कृष्टा, एकं समयं जघन्यका, अजीवानां रूपिणां पुद्गलानामित्यर्थः, स्थितिरेषा व्याख्याता, जघन्यत एकसमयादुत्कृष्टतश्चासङ्ख्येयकालात्परतोऽवश्यमेव विघटनात् ॥ १३ ॥ १३८६ ॥

इत्थं कालद्वारमाश्रित्य स्थितिरुक्ता, सम्प्रति तु कालद्वारान्तर्गतमेवान्तरमाह—



तेषां स्थितिः

रूपिद्रव्याणा-
मन्तरम्

अणतकालमुक्कोस, इक्क समय जहण्णय। अजीवाण य रूवीण, अतरेय विजाहिअ ॥ १३८७ ॥

अनन्तकालमुत्कृष्ट, एक समय जघन्यक, अजीवाना रूपिणा, अन्तर विवक्षितक्षेत्रावस्थिते प्रच्युताना पुनस्तत्प्राप्तेर्व्य-वधान, एतदुक्तरूप व्याख्यात, तेषा हि विवक्षितक्षेत्रावस्थिते प्रच्युताना कदाचित्समयावलिकादिसङ्ख्यातकालतोऽसङ्ख्यात-कालाद्वा पल्योपमादेर्यावदनन्तकालादपि सम्भवतीति ॥ १४ ॥ १३८७ ॥

एतानेव भावत आह—

वन्नओ गधओ चेव, रसओ फासओ तहा। सठाणओ य विन्नेओ, परिणामो तेसि पचहा ॥ १३८८ ॥ वन्नओ परिणया जे उ, पचहा ते पकित्तिया। किण्हा नीला य लोहिया, हालिद्दा सुक्किला तहा ॥ १३८९ ॥ गधओ परिणया जे य, दुविहा ते वियाहिया। सुब्भिगधपरिणामा, दुब्भिगधा तहेव य ॥ १३९० ॥ रसओ परिणया जे उ, पचहा ते पकित्तिया। तित्त कडुयकसाया, अबिला महुरा तहा ॥ १३९१ ॥ फासओ परिणया जे उ, अट्ठहा ते पकित्तिया। कक्खडा मउया चेव, गुरुया लहुया तहा ॥ १३९२ ॥ सीया उण्हा य निद्धा य, तहा लुक्खा य आहिया। इति फासपरिणया एए, पुग्गला समुदाहिया ॥ १३९३ ॥ सठाणपरिणया जे उ, पचहा ते पकित्तिया। परिमडला य वट्टा य, तसा चउरसमायया ॥ १३९४ ॥ वण्णओ जे भवे किण्हे, भइए से उ गधओ। रसओ फासओ चेव, भइए सठाणओवि य ॥ १३९५ ॥ वण्णओ जे भवे नीले, भइए० ॥ १३९६ ॥ वण्णओ लोहिए जे उ, भइए० ॥ १३९७ ॥ वण्णओ पीअए जे उ, भइए० ॥ १३९८ ॥ वण्णओ सुक्किले जे उ,

भइए० ॥ १३९९ ॥ गंधओ जे भवे सुब्भी, भइए० ॥ १४०० ॥ गंधओ जे भवे दुब्भी, भइए० ॥ १४०१ ॥ रसओ तित्तओ जे उ, भइए० ॥ १४०२ ॥ रसओ कडुए जे उ, भइए० ॥ १४०३ ॥ रसओ कसाए जे उ, भइए० ॥ १४०४ ॥ रसओ अंबिले जे उ, भइए० ॥ १४०५ ॥ रसओ महुरए जे उ, भइए० ॥ १४०६ ॥ फासओ कक्खडे जे उ, भइए० ॥ १४०७ ॥ फासओ मउए जे उ, भइए० ॥ १४०८ ॥ फासओ गुरुए जे उ, भइए० ॥ १४०९ ॥ फासओ लहुए जे उ, भइए० ॥ १४१० ॥ फासओ सीअए जे उ, भइए० ॥ १४११ ॥ फासओ उण्हए जे उ, भइए० ॥ १४१२ ॥ फासओ निद्धए जे उ, भइए० ॥ १४१३ ॥ फासओ लुक्खए जे उ, भइए० ॥ १४१४ ॥ परिमंडलसंठाणे, भइए० ॥ १४१५ ॥ संठाणओ भवे वट्टे, भइए० ॥ १४१६ ॥ संठाणओ भवे तंसे, भइए० ॥ १४१७ ॥ संठाणओ य चउरंसे, भइए० ॥ १४१८ ॥ जे आययसंठाणे, भइए० ॥ १४१९ ॥

वण्णओ इत्यादि गाथा ३२, वर्णतो गन्धतश्चैव रसतः स्पर्शतस्तथा संस्थानतश्च, अयमर्थो वर्णादीन् पञ्चाश्रित्य विज्ञेयः—ज्ञातव्यः परिणामः—स्वरूपावस्थितानामेव वर्णाद्यन्यथाभवनरूपः तेषां परमाणूनां पञ्चधा—पञ्चप्रकारो भेदहेतोर्वर्णाद्युपाधेः पञ्चविधत्वादिति भावः ॥ १५ ॥ १३८८ ॥

प्रत्येकमेषामेवोत्तरभेदानाह—

वर्णतः परिणताः वर्णपरिणामभाज इत्यर्थः, ये अण्वादयः, तुः पूरणे, पञ्चधा ते प्रकीर्त्तिताः—प्रकर्षेण संदेहापनेतृत्वलक्षणेन

सशब्दिता, तानेवाह-कृष्णा कज्जलादिवत्, नीला नील्यादिवत्, लोहिता हिङ्गुलकादिवत्, हरिद्रा हरिद्रादिवत्, शुक्ला शङ्खादिवत्, तथेति समुच्चये ॥ १६ ॥ १३८९ ॥

गधेत्यादि स्पष्ट, नवर, सुरभिर्गन्धो यस्मिन् स तथाविध परिणामो येषा ते सुरभिगन्धपरिणामा श्रीखण्डादिवत्, दुरभिगन्धो येषा ते दुरभिगन्धा लसुनादिवत्, ॥ १७ ॥ १३९० ॥

तिक्ताश्च कोसातक्यादिवत्, कटुकाश्च शुण्ठ्यादिवत्, कशायाश्चापरिपक्वकपित्थादिवत्, तिक्तकटुककशाया, आम्ला आम्लवेतसादिवत् ॥ १८ ॥ १३९१ ॥

कर्कशा पाषाणादिवत्, मृदवो हसरुतादिवत्, गुरवो हीरकादिवत् ॥ १९ ॥ १३९२ ॥

शीता मृणालादिवत्, उष्णा वह्न्यादिवत्, स्निग्धा घृतादिवत्, रूक्षा भूत्यादिवत्, उपसहारमाह-इतीत्यमुना प्रकारेण सर्वपरिणता एते स्कन्धादय पूरणगलनधर्माण पुद्गला समुदाहृता-सम्यक्प्रतिपादिता तीर्थकृदादिभिरिति शेष ॥२०॥१३९३

सतिष्ठन्ते एभि स्कन्धादय इति सस्थानानि तद्रूपेण परिणता सस्थानपरिणता, परिमण्डला वहिर्वृत्तताभाजोऽन्त शुपिरा वलयवत्, त एवान्त पूर्णा वृत्ता कुलालचक्रवत्, त्र्यस्रा-त्रिकोणा शृङ्गाटकादिवत्, चतुरस्रा-चतुष्कोणा स्तम्भाधारकुम्भिकावत्, आयता-दीर्घा दण्डादिवत् ॥ २१ ॥ १३९४ ॥

सम्प्रत्येषामेव परस्परसम्बन्धमाह—

वर्णतो य स्कन्धादिर्भवेत् कृष्ण भाज्य से उत्ति स पुनर्गन्धत गन्धमाश्रित्य, सुरभिगन्धो दुर्गन्धो वा स्यात्, न तु नियतगन्ध

एवेति भावः, एवं रसतः स्पर्शतश्चैव भाज्यः, संस्थानतोऽपि च, अन्यतररसादियोग्यो वाऽसौ स्यादिति हृदयं, अत्र च गन्धौ द्वौ, रसाः पञ्च, स्पर्शा अष्टौ, एते च मीलिता विंशतिरित्येक एव कृष्णवर्ण एतावतो भङ्गकान् लभते, एवं नीलोऽपि २०, एवं लोहितोऽपि २०, पीतक इति हारिद्रोऽपि २०, शुक्लोऽपि २० भङ्गकान् लभते, इति पञ्चभिरपि वर्णैः लब्धं शतम् २२–२६ ॥ १३९५–९९ ॥

गन्धतो यः स्कन्धादिर्भवेत् सुरभिः भाज्यः स तु वर्णतः, अन्यतरकृष्णादिवर्णवान् स्यादिति भावः, एवं रसतः स्पर्शतश्चैव भाज्यः, संस्थानतोऽपि च, इह च रसादयोऽष्टादश, तेऽपि पञ्चभिर्वर्णैर्मीलितैस्त्रयोविंशतिर्भवन्ति, एवं दुर्गन्धविषया अप्येतावन्त एव, ततश्च गन्धद्वयेन लब्धा भङ्गानां षट्चत्वारिंशत् ॥ २७–२८ ॥ १४००–१ ॥

रूपिद्रव्याणां भावतः प्ररूपणा

रसतस्तिक्तको यस्तु स्कन्धादिः भाज्यः, स तु वर्णतो गन्धतः स्पर्शतश्चैव भाज्यः संस्थानतोऽपि च, इह चोक्तन्यायतो विंशतिर्भङ्गास्तिक्तेनावाप्यन्ते २०, एवं कटुकेन २० कषायेन २० आम्लेन २० मधुरेण चैतावन्त एवावाप्यन्ते, एवं रसपञ्चकसंयोगे लब्धं शतम् १०० ॥ २९–३३ ॥ १४०२–६ ॥

स्पर्शतः कर्कशो यस्तु स्कन्धादिर्भाज्यः, स तु वर्णतो गन्धतो रसतश्चैव भाज्यः, संस्थानतोऽपि च, इह चोक्तन्यायतो वर्णादयः सप्तदशेति तद्योगतस्तावन्त एवेति भङ्गानाप्नोति कर्कशः १७, एवं मृदुः १७, गुरुः १७, लघुः १७, शीत १७, उष्णः १७, स्निग्धः १७, रूक्षः १७, एतन्मीलने च जातं षट्त्रिंशं शतम् १३६ ॥ ३४–४१ ॥ १४०७–१४ ॥



परिमण्डलसंस्थाने यो वर्त्तते इति शेषः भाज्यः स तु सामान्यप्रक्रमेऽपि स्कन्धः, परमाणूनां संस्थानाभावात्, वर्णतो-

गन्धतो रसतश्चैव भाज्य , स्पर्शतोऽपि च, अत्र चोक्तनीत्या वर्णादयो विंशतिस्तद्योगात्परिमण्डलेन विंशतिरेव भङ्गा लभ्यन्ते, एव वृत्तेन २०, त्र्यस्रेण २०, चतुरस्रेण २०, आयतेन २० च, प्रत्येकमेतावन्त एव भङ्गका प्राप्यन्ते इति सस्थानपञ्चकभङ्गसयोगे लब्ध शत १००, एव वर्णगन्धरसस्पर्शसस्थानाना सकलभङ्गसङ्कलनातो जातानि द्व्यशीत्यधिकानि चत्वारिशतानि ४८२, सर्वत्र जातावेकवचन, परिस्थूरन्यायतश्चैतदुच्यते, अन्यथा प्रत्येकमप्येषा तारतम्यतो नानात्वादनन्ता एव भङ्गका सम्भवन्ति, इत्थ चैतत्परिणामवैचित्र्य केवलागमप्रमाणावसेय इति न स्वमतिकल्पितहेतुभिश्चित्तमाकुलीकर्त्तव्यमिति ॥ ४२-४६ ॥ १४१५-१९ ॥

सम्प्रत्युपसहारद्वारेणोत्तरग्रन्थसम्बन्धमाह—

एसा अजीवविभत्ती, समासेण वियाहिया । इत्तो जीवविभत्तिं, वुच्छामि अणुपुव्वसो ॥ १४२० ॥

एषा—अनन्तरोक्ता अजीवविभक्ति समासेन—सङ्क्षेपेण व्याख्याता, इत इति—अजीवविभक्तिव्याख्यानन्तर जीवविभक्ति वक्ष्यामि आनुपूर्व्या ॥ ४७ ॥ १४२० ॥ यथाप्रतिज्ञातमाह—

ससारत्था य सिद्धा य, दुविहा जीवा वियाहिया ।
सिद्धा णेगविहा वुत्ता, त ( दुविहा जीवा भवन्ति । तत्थाणेगवहा सिद्धा ते पा० ) मे कित्तयओ सुण ॥ १४२१ ॥

ससरति उपलक्षणादवतिष्ठन्ते, अस्मिन्निति ससारो गतिचतुष्टयात्मक , तिष्ठन्ति इति ससारस्था —नरकादिगतिवर्त्तिन , च पुन , सिद्धाश्च सकलकर्मक्षयात् मुक्तिपदप्राप्ता , द्विविधा उपदर्शितभेदात् द्विभेदा जीवा व्याख्याता , तत्र सिद्धा —अनेकप्रकारा उक्ता , तमिति सूत्रत्वात्तान् मे-मम कथयत शृणुत अल्पवक्तव्यत्वाच्च पश्चान्निर्देशोऽपि पूर्वं सिद्धभेदाभिधानमदुष्टमिति॥४८॥१४२१

जीवविभक्ति-
प्ररूपण
प्रतिज्ञा
द्विविधा
जीवाश्च

अनेकविधत्वमेषामुपाधिभेदात्, तानाह—

इत्थीपुरिससिद्धा य, तहेव य नपुंसगा। सलिंगे अन्नलिंगे य, गिहिलिंगे तहेव य ॥ १४२२ ॥

सिद्धः शब्दप्रत्येकमभिसम्बध्यते, ततः स्त्रियश्च ते पूर्वपर्यायापेक्षया सिद्धाश्च स्त्रीसिद्धाः, एवं पुरुषसिद्धाः तथैव च, इहोत्तरत्र च प्रक्रमेण सिद्धशब्दयोगात् नपुंसकसिद्धाः, स्वलिङ्गसिद्धाः, स्वलिङ्गञ्च रजोहरणमुखवस्त्रिकादिरूपं, अन्यलिङ्गे—एतदपेक्षया भिन्नलिङ्गे शाक्यादिसम्बन्धिनि सिद्धाः, गृहिलिङ्गे—गृहस्थवेषे सिद्धा मरुदेवीवत्, तथैवेत्युक्तसमुच्चये, चकारस्तु तीर्थसिद्धाद्यनुक्तभेदसंसूचकः ॥ ४९ ॥ १४२२ ॥

सिद्धानां भेदा अवगाहना क्षेत्रञ्च

सम्प्रति सिद्धानेवावगाहनातः क्षेत्रतश्चाह—

उक्कोसोगाहणाए य, जहन्नमज्झिमाइ य। उड्ढं अहे य तिरियं च, समुद्दंमि जलंमि य ॥ १४२३ ॥

उत्कृष्टा—महती सा चासाववगाहना च—शरीरं सा तथा तस्यामुत्कृष्टावगाहनायां—पञ्चधनुःशतमानायां सिद्धाः, चः समुच्चये, अवगाहनायामिति प्रक्रमात् प्रत्येकं योगात् जघन्यावगाहनायां—द्विहस्तमानशरीररूपायां सिद्धाः, मध्यमावगाहनायां चोक्तरूपोत्कृष्टजघन्यावगाहनान्तरालवर्त्तिन्यां सिद्धाः, ऊर्ध्वं—ऊर्ध्वलोके मेरुचूलिकादौ सिद्धाः, तत्रापि केषाञ्चित् सिद्धप्रतिमावन्दनाद्यर्थं गतानां चारणश्रमणादीनां मुक्त्यवाप्तेः सम्भवात्, अधश्च—अधोलौकिकग्रामरूपे सिद्धाः, तिर्यग् लोके च—अर्द्धतृतीयद्वीपसमुद्ररूपे, तत्रापि केचित्समुद्रे सिद्धाः, जले च—नद्यादिसम्बन्धिनि सिद्धाः, भूभूधराद्यशेषास्पदोपलक्षणमेतत्, अर्द्धतृतीयद्वीपसमुद्रेषु हि न क्वचित् मुक्त्यवाप्तिनिषेध इति ॥ ५० ॥ १४२३ ॥

इत्थ स्त्रीसिद्धादीनभिवदता स्त्रीत्वादिषु सिद्धिसम्भव उक्त, सम्प्रति तत्रापि क कियन्त सिद्धयन्तीत्याशङ्क्याह—

क कियन्त सिद्धयन्ति ?

दस य नपुसएसु, वीस इत्थियासु य। पुरिसेसु य अट्ठसय, समएणेगेण सिज्झई ॥ १४२४ ॥ चत्तारि य गिहिलिंगे, अन्नलिंगे दसेव य। सलिंगेण य अट्ठसय, समएणेगेण सिज्झई ॥ १४२५ ॥ उक्कोसोगाहणाए उ, सिज्झते जुगव दुवे। चत्तारि जहन्नाए, जवमज्झट्ठुत्तर सय ॥ १४२६ ॥ चउरुड्ढलोए य दुवे समुद्दे, तओ जले वीसमहे तहेव। सय च अट्ठुत्तर तिरियलोए, समएणेगेण उ सिज्झई धुव ॥ १४२७ ॥ (चउरो उड्ढलोगमि, वीसपहुत्त अहे भवे। सय अट्ठोत्तर तिरिए, एगसमएण सिज्झई ॥ १ ॥ दुवे समुद्दे सिज्झती, सेसजलेसु ततो जणा। एसा उ सिज्झणा भणिया, पुव्वभाव पडुच्च उ ॥ २ ॥ पा०)

गाथा ४, दश २ सङ्ख्या, च उत्तरापेक्षया समुच्चये, नपुसकेषु—वर्द्धितचिर्पितादिषु, विंशति स्त्रीषु च पुरुषेषु चाष्टभिरधिक शत समयेन—निर्विभागकालरूपेणैकेन—एकसङ्ख्येन सिद्धयन्ति निष्ठितार्था भवन्ति ॥ ५१ ॥ १४२४ ॥ चत्वारो गृहिलिङ्गे, दशैव चान्यलिङ्गे, स्वलिङ्गेन चाष्टशतम् ॥ ५२ ॥ १४२५ ॥ उत्कृष्टावगाहनाया तु सिद्धयतो युगपद्—एककाल द्वौ—द्विसङ्ख्यौ, चत्वारः चतु सङ्ख्या जघन्यावगाहनाया, यवमध्यमिन यवमध्य—मध्यमावगाहना तस्या १०८, यवमध्यत्व चैषा मध्यमावगाहनाया उत्कृष्टजघन्यावगाहनयोर्मध्यवर्त्तित्वात्तदपेक्षया च बहुतरसङ्ख्यात्वेनास्या स्थूलतयैव भासमानत्वात् ॥ ५३ ॥ १४२६ ॥ चत्वार ऊर्ध्वलोके च द्वौ समुद्रे त्रयो जले विंशतिरध इति—अधोलोके, तथैव—तेनैव प्रकारेण शत चाष्टोत्तर अष्टाधिक तिर्यग् लोके, इह तुशब्दश्चशब्दश्च कचित् पूरणे कचिच्च पुनरर्थे व्याख्येय ॥ ५४ ॥ १४२७ ॥

इत्थं पूर्वभावप्रज्ञापनीयनयापेक्षयाऽनेकधा सिद्धा उक्ताः, सम्प्रति प्रत्युत्पन्नभावप्रज्ञापनीयनयापेक्षया तेषामेव प्रतिघातादिप्रतिपादनायाह—

कहिं पडिहया सिद्धा ?, कहिं सिद्धा पइट्ठिया ? । कहिं बुंदिं चइत्ताणं, कत्थ गंतूण सिज्झई ? ॥ १४२८ ॥

अलोए पडिहया सिद्धा, लोयग्गे य पइट्ठिया । इहं बुंदिं चइत्ता णं, तत्थ गंतूण सिज्झई ॥ १४२९ ॥

गाथा २, कस्मिन् स्थाने प्रतिहताः—स्खलिताः—निरुद्धगतय इत्यर्थः सिद्धाः ?, कस्मिन् सिद्धाः प्रतिष्ठिताः ?, साद्यनन्तं कालं स्थिताः, अन्यच्च क्व बुन्दिं—शरीरं त्यक्त्वा कुत्र गत्वा वचनव्यत्ययात् सिद्ध्यन्ति ? ॥ ५५ ॥ १४२८ ॥ तत्प्रतिवचनमाह— अलोके—केवलाकाशरूपे प्रतिहताः—स्खलिताः, तत्र धर्मास्तिकायाभावेन तेषां गतेरसम्भवात्, लोकाग्रे च—लोकस्योपरिभागे प्रतिष्ठिताः—सदा अवस्थिताः, आह—ऊर्ध्वगमाभावेऽप्यधस्तिर्यग्गमनसम्भवेन कथं तेषां तत्र प्रतिष्ठानम् ?, उच्यते, क्षीणकर्मत्वात्तेषां, कर्माधीनत्वाच्चाधस्तिर्यग्गमनयोः, इह तिर्यग्—लोके त्यक्त्वा तत्र लोकाग्रे गत्वा वचनव्यत्ययात्सिद्ध्यन्ति, गत्वेति च 'मुखं व्यादाय स्वपिती'त्यादिवत्क्त्वाप्रत्ययः, पूर्वापरकालविभागस्यासम्भवात्, यत्रैव हि समये भवक्षयस्तस्मिन्नेव मोक्षस्तत्र गतिश्चेति ॥ ५६ ॥ १४२९ ॥

सिद्धानां स्थानादि

लोकाग्रे गत्वा सिद्ध्यन्तीत्युक्तं लोकाग्रं चेषत्प्राग्भाराया उपरीति यावति प्रदेशेऽसौ यत्संस्थाना यत्प्रमाणा यद्वर्णा च तद्वक्तुमाह—

बारसहिं जोयणेहिं, सव्वट्ठस्सुवरिं भवे । ईसीपब्भारनामा उ, पुढवी छत्तसंठिया ॥ १४३० ॥ पणयाल

ईषत्प्राग्भार-स्वरूपम्

सयसहस्सा, जोअणाण तु आयया। तावइय चेव विच्छिन्ना, तिगुणो साहिय (तस्सेव) परिरओ (तिगुण साहियपरिरय पा०) ॥ १४३१ ॥ अट्ठजोयणबाहल्ला, सा मज्झमि वियाहिया। परिहायती चरिमंते मच्छीपत्ताउ तणुययरी ॥ १४३२ ॥

गाथा ५, द्वादशभिर्योजनैः सर्वार्थस्य-सर्वार्थनाम्नोविमानस्योपरि-ऊर्ध्वं भवेत्-स्यात्, ईषत्प्राग्भारेति नाम यस्या सा ईषत्प्राग्भारनामा पृथ्वी-भूमि, छत्रसंस्थितमिव संस्थित-संस्थान अस्या इति छत्रसंस्थानसंस्थिता, इह च विशेषानभिधानेऽप्युत्तानमेव छत्र गृह्यते ॥ ५७ ॥ १४३० ॥ पञ्चचत्वारिंशत् शतसहस्राणि योजनाना, तु पूरणे, आयता-दीर्घा, तावतश्चैव प्रक्रमात् शतसहस्राणि विस्तीर्णा-विस्तरतोऽपि च, पञ्चचत्वारिंशल्लक्षप्रमाणेति भाव, त्रिगुण उक्तरूपादायामात् साधिको-विशेषाधिक परिरय-परिधि ॥५८॥१४३१॥ अष्टौ-अष्टसङ्ख्यानि योजनानि बाहल्य स्थौल्य अस्या इत्यष्टयोजनबाहल्या, सा ईषत्प्राग्भाराख्या, किं सर्वत्रास्त्येवमित्याह-मध्ये-मध्यप्रदेशे व्याख्याता, किमित्येवमत आह-परि-समन्ताद्-हीयमाना चरमान्तेषु-सकलदिग्भागवर्त्तिषु पर्यन्तप्रदेशेषु मक्षिकाया पत्र-पक्षो मक्षिकापत्र अपेर्गम्यत्वात्, मक्षिका पत्रादपि तनुतरी, अतिपरिकृशेत्यर्थ, हानिश्चात्र विशेषानभिधानेऽपि प्रतियोजनमङ्गुलपृथक्त्व द्रष्टव्या, तथा चोक्त-"गतूण जोअण तु परिहायइ अगुलपुहुत्त"न्ति ॥ ५९ ॥ १४३२ ॥

अत्र केचित्पठन्ति—

अज्जुणसुवन्नगमई, सा पुढवी निम्मला सहावेण। उत्ताणयछत्तयसंठिया य भणिया जिणवरेहिं (पा०) ॥१४३३॥

संखंककुंदसंकासा, पंडुरा निम्मला सुभा।

अज्जूणगेत्यादिगाथा, तत्र च–अर्जुनं–शुक्लं यत्सुवर्णं तेन निर्वृत्ता अर्जुनसुवर्णकमयी, सेपत् प्राग्भारा, निर्मला–स्वच्छा, किमुपाधिवशात इत्याह–स्वभावेन–स्वरूपेण, उत्तानकं–ऊर्ध्वमुखं, यच्छत्रमेव छत्रकं तत्संस्थिता तत्संस्थाना उत्तानकच्छत्रकसंस्थिता च भणिता उक्ता जिनवरैः, प्राक्सामान्येन छत्रसंस्थितेत्युक्तमिह तु उत्तानत्वं तद्विशेष उच्यते इति न पौनरुक्त्यम् ॥ ६० ॥ १४३३ ॥ शङ्खाङ्ककुन्दानि प्रतीतानि तत्संकाशा–वर्णतस्तत्सदृशी, अत एव पाण्डुरा–श्वेता, निर्मला–निष्कलङ्का, शुभा–अत्यन्तकल्याणावहा, सुखा–सुखहेतुत्वेन।

सीआए जोअणे तत्तो, लोयंतो उ वियाहिओ ॥ १४३४ ॥

यदीदृशी सा पृथ्वी ततः किमित्याह–शीतायाः–शीताभिधानायाः पृथ्व्या उपरीति शेषः योजने, तत इति तस्या उक्तरूपायाः लोकान्तः–लोकपर्यन्तः, तुः पूरणे ॥ ६१ ॥ १४३४ ॥

ननु यदि योजने लोकान्तस्तत्किं तत्र सर्वत्र सिद्धास्तिष्ठन्त्युतान्यथेत्याह—

जोअणस्स उ जो तत्थ (तस्स पा०), कोसो (कोसस्सवि य जो तत्थ, छब्भागो पा०) उवरिमो भवे।
तस्स कोसस्स छब्भाए, सिद्धाणोगाहणा भवे ॥ १४३५ ॥

योजनस्य तुर्वाक्यान्तरोपन्यासे यः तत्रेत्येवं व्यवस्थिते सुब्व्यत्ययेन वा तत्रेति तस्येषत्प्राग्भारोपरिवर्तिनः क्रोशः–गव्यूतं



ईषत्प्राग-
भारातो
लोकान्तं कुत्र
सिद्धश्च

उवरित्ति उपरिवर्त्ति भवेत्, तस्य क्रोशस्य षड्भागे–सत्रिभागत्रयस्त्रिंशदधिकधनु शतत्रितयरूपे सिद्धानामवगाहना–अवस्थितिर्भवेत् ॥ ६२ ॥ १४३५ ॥

अवगाहना च ततश्चलनसम्भवेऽपि परमाण्वादीनामिवैकादिप्रदेशेषु स्यादत आह—

तत्थ सिद्धा महाभागा, लोगग्गमि पइट्ठिया । भवप्पवचउम्मुक्का, सिद्धिं वरगइ गया ॥ १४३६ ॥

तत्रानन्तरोक्ते सिद्धा महाभागा–अतिशयाचिन्त्यशक्तयो लोकाग्रे प्रतिष्ठिता , एतच्च कुत इत्याह–भवा–नारकादयास्तेषा प्रपञ्च –विस्तारस्तेनोन्मुक्ता–त्यक्तास्ते, तत सिद्धिं वरा चासावितरगत्यपेक्षया गतिश्च गम्यमानतया वरगतिस्ता गता –प्राप्ता , अयमाशय –भवप्रपञ्च एव चलने हेतु स च सिद्धाना नास्तीति कुतस्तेषा तत्सम्भव इति ॥ ६३ ॥ १४३६ ॥

तत्र गताना कस्य कियत्यवगाहनेत्याह—

उस्सेहो जस्स जो होइ, भवमि चरममि उ । तिभागहीणा तत्तो य, सिद्धाणोगाहणा भवे ॥ १४३७ ॥

उत्सेध –उच्चत्व प्रक्रमात् शरीरस्य जस्सत्ति–येषा सिद्धाना य इति यावत्प्रमाणो भवे चरमे–पर्यन्तवर्त्तिनि, तु विशेषणे इदमपि प्राग्भवप्रज्ञापनीयनयापेक्षयेति विशेषयति, त्रिभागहीना–ततस्त्रिभागोनश्चरमभवोत्सेधात्, च पुन सिद्धाना यत्तदोर्नित्याभिसम्बन्धात्तेषा अवगाहना–स्वदेशनिचितिि , इय च शरीरविवरापूरणत एतावतीति ज्ञेय, यदुक्त–"देहतिभागो शुसिर तप्पूरणओ तिभागहीणु"त्ति ॥ ६४ ॥ १४३७ ॥ एतानेव कालत आह—

एगत्तेण साइया, अपज्जवसियावि य । पुहुत्तेण अणाइया, अपज्जवसियावि य ॥ १४३८ ॥

सिद्धानामवगाहनकाल मानौ

एकत्वेन—असहायत्वेन विवक्षिताः, एकं विवक्षितसिद्धमाश्रित्येत्यर्थः सादिकाः, अपर्यवसिता अपि च, यत्र हि काले ते सिद्ध्यन्ति स तेषां आदिरस्ति, न तु कदाचित् मुक्तेर्भ्रंस्यन्तीति न पर्यवसानसम्भवः, पृथक्त्वेन बहुत्वेन सामस्त्यापेक्षयेत्यर्थः, अनादिका अपर्यवसिता अपि च, न हि कदाचित्ते नाभूवन्न भविष्यन्तीति चेति ॥ ६५ ॥ १४३८ ॥

सम्प्रत्येषामेवोपाधिनिरपेक्षं स्वरूपमाह—

अरूविणो जीवघणा, नाणदंसणस(प्र.म)न्निया । अउलं सुहसंपत्ता, उवमा जस्स नत्थि उ ॥ १४३९ ॥

अरूपिणस्तेषां रूपाद्यभावात्, जीवाश्च ते सततोपयुक्ततया घनाश्च शुषिरपूरणतो निरन्तरनिचितप्रदेशतया जीवघनाः, प्राकृतत्वात् विशेषणस्य परनिपातः, ज्ञानदर्शने एव सञ्ज्ञा—सम्यगवबोधरूपा सञ्जातैषामिति ज्ञानदर्शनसंज्ञिताः—ज्ञानदर्शनोपयोगवन्तः, न विद्यते तुलेव तुला—इयत्ता परिच्छेदहेतुरस्येत्यतुला अपरिमितत्वात्, उक्तं च—"सिद्धस्स सुहो रासी, सव्वद्धापिंडिओ जइ हविज्जा । सोऽणंतवग्गभइओ सव्वागासे न माइज्जा ॥ १ ॥" सुखं—शर्म, समित्येकीभावेन दुःखलेशाकलङ्कितत्वलक्षणेन प्राप्ताः उपमा यस्य सुखस्य, तोरेवार्थत्वात्, नास्त्येव—न विद्यते एव, यत उक्तं—"लोके तत्सदृशो ह्यर्थः, कृत्स्नेऽप्यन्यो न विद्यते । उपमीयेत तद्येन, तस्मान्निरुपमं स्मृतम् ॥ १ ॥" न च विषयाभावतस्तत्र सुखशब्दाभिधेयाभाव एवेत्याशङ्क्यं, चतुर्थत्वात्तस्य, उक्तं हि—"लोके चतुर्ष्विहार्थेषु, सुखशब्दः प्रयुज्यते । विषये १ वेदनाऽभावे २, विपाके ३ मोक्ष ४ एव च ॥ १ ॥ सुखो वह्निः सुखो वायुर्विषयेष्विह कथ्यते । दुःखाभावे च पुरुषः, सुखितोऽस्मीति मन्यते ॥ २ ॥ पुण्यकर्मविपाकाच्च, सुखमिष्टेन्द्रियार्थजम् । कर्मक्लेशविमोक्षाच्च, मोक्षे सुखमनुत्तमम् ॥ ३ ॥" ततश्च मोक्षस्यैव तत्र सुखशब्दाभिधेयत्वान्न शङ्कायाः सम्भवः ॥ ६६ ॥ १४३९ ॥



सिद्धस्व-
रूपम्

उक्तग्रन्थेनावगतमपि विप्रतिपत्तिनिरासार्थं पुन क्षेत्र स्वरूप च तेषामाह—

लोएग(गग्ग पा०)दसे ते सव्वे, नाणदसणसन्निया । ससारपारनिच्छिन्ना, सिद्धिं वरगइ गया ॥ १४४० ॥

लोकैकदेशे ते सिद्धा , अनेन "मुक्ता सत्र तिष्ठन्ति, व्योमवत्तापवर्जिता " इत्यपास्त, सर्वगतत्वे ह्यात्मनामेवैतद्भवेत् , तथात्वे च सर्वत्र वेदनादिप्रसङ्ग , तथा सर्वे ज्ञानदर्शनसज्ञिता इत्यनेन मा भूत् केषाचित् ज्ञानसञ्ज्ञा अपरेषा दर्शनसञ्ज्ञैव केवला, किंतूभे अपि, ससारस्य पार-पर्यन्त निस्तीर्णा पुनरागमनाभावलक्षणेनाधिक्येनाभिक्रान्ता स०, अनेन "ज्ञानिनो धर्मतीर्थस्य, कर्त्तार परम पद । गत्वाऽऽगच्छन्ति भूयोऽपि, भव तीर्थनिकारत ॥ १ ॥" इति मतमपास्त, तेषा अनिष्ठितार्थत्वादिदोषप्रसङ्गेनापुनरावृत्ते , सिद्धिं वरगतिं गता , अनेनोत्पत्तिसमये तेषामपि सक्रियत्वमस्तीति ख्याप्यते ॥ ६७ ॥ १४४० ॥

इत्थ सिद्धानुक्त्वा ससारिण आह—

ससारत्था उ जे जीवा, दुविहा ते वियाहिया । तसा य थावरा चेव, थावरा तिविहा तहिं ॥ १४४१ ॥

ससारस्था , तु सिद्धेभ्य सङ्ख्याकृतविशेषद्योतको, ये जीवा द्विविधास्ते व्याख्याता , द्वैविध्यमाह-त्रसाश्च स्थावराश्चैव, स्थावरास्त्रिविधा तस्मिन्निति द्वैविध्ये सति, अल्पवक्तव्यत्वाच्च पश्चान्निर्देशेऽपि प्रथम स्थावराभिधानम् ॥ ६८ ॥ १४४१ ॥

त्रैविध्यमेवाह—

पुढवी आउजीवा य, तहेव य वणस्सई । इच्चेए थावरा तिविहा, तेसिं भेए सुणेह मे ॥ १४४२ ॥

जीवशब्दस्य प्रत्येकमभिसम्बन्धात्पृथिव्येव जीवा पृथिवीजीवा , आपो जल ता एव जीवास्तथा, तथैव च वणस्सइत्ति

द्विविधा ससारिण स्थावरास्त्रिविधाश्च

प्रक्रमात् वनस्पतिजीवाः, ननु पृथिव्यादीनि जीवशरीराणि, न त्वेतान्येव जीवाः, काठिन्यादिलक्षणानि ह्यमूनि, जीवाः पुनरुपयोगलक्षणास्तत्कथं पृथिव्यादीन्येव जीवा इत्युक्तं ?, उच्यते–जीवशरीरयोरन्योऽन्यानुगतत्वेन विभागाभावात्पृथिव्यादीनि जीवशरीराण्यपि जीव इत्युक्तं, न चैतदनार्षं, यत उक्तं–"अन्नोऽन्नाणुगयाणं इमं च तं चत्ति विभयणमजुत्तं" इत्यादि, 'इति' एते पृथिव्यादयः स्थावरास्त्रिविधाः, उत्तरग्रन्थसम्बन्धनार्थमाह–तेषां पृथिव्यादीनां भेदान्–विकल्पान् शृणुत–आकर्णयत, मे–मम कथयत इति शेषः ॥ ६९ ॥ १४४२ ॥

'यथोद्देशं निर्देश' इति न्यायतः पृथिवीभेदानाह—

दुविहा पुढविजीवा उ, सुहुमा बायरा तहा। पज्जत्तमपज्जत्ता, एवमेव (एगमेग पा०) दुहा पुणो ॥ १४४३ ॥ बायरा जे उ पज्जत्ता, दुविहा ते वियाहिया। सण्हा खरा य बोद्धव्वा, सण्हा सत्तविहा तहिं ॥ १४४४ ॥ किण्हा नीला य रुहिरा य, हालिद्दा सुक्किला तहा। पंडुपणगमट्टिया, खरा छत्तीसईविहा ॥ १४४५ ॥ पुढवी य सक्करा वालुया य उवले सिला य लोणूसे। अयतउयतंबसीसगरुप्पसुवन्ने य वइरे य ॥ १४४६ ॥ हरियाले हिंगुलए मणोसिला (प्र० ण) सासगंजणपवाले। अब्भपडलऽब्भवालुय बायरकाए मणिविहाणा ॥ १४४७ ॥ गोमिज्जए य रुयगे अंके फलिहे य लोहियक्खे य। मरगयमसारगल्ले भुयमोयग इंदनीले य ॥ १४४८ ॥ चंदणगेरुयहंसगब्भ पुलए सोगंधिए य बोद्धव्वे। चंदप्पभवेरुलिए जलकंते सूरकंते य ॥ १४४९ ॥

द्विविधाः पृथिवीजीवाः, तुः प्राग्वत्, सूक्ष्माः सूक्ष्मनामकर्मोदयात्, तथा पर्याप्ता आहारादिपर्याप्तिभिः, अपर्याप्तास्तद्वि



पृथिवीकायस्वरूपम्

परीता , एवमनेन पर्याप्तापर्याप्तभेदेन, एते सूक्ष्मा बादराश्च द्विविधा , पुनः प्रत्येकमिति भाव ॥ ७० ॥ १४४३ ॥ पुनरेषा-मुत्तरभेदानाह—बादरा ये पुन पर्याप्ता द्विविधास्ते व्याख्याता , कथमित्याह—श्लक्ष्णा इह चूर्णितलोष्टकल्पा मृदु पृथिवी तदात्मका जीवा अप्युपचारात् श्लक्ष्णा , एवमुत्तरत्रापि, खरा –कठिनश्च समुच्चये, बोद्धव्या –ज्ञातव्या , श्लक्ष्णा सप्तविधा , तस्मिन्नित्युक्तरूपभेदद्वये ॥ ७१ ॥ १४४४ ॥ यथा चामी सप्तविधास्तथाह—कृष्णा नीलाश्च रुधिरा –लोहिता रक्ता इत्यर्थ , हारिद्रा –पीता , शुक्ला तथेति समुच्चये, पडुत्ति पाण्डुरा आपाण्डुरा ईषत् शुभ्रत्वभाज इत्यर्थ , इत्थ वर्णभेदेन षड्विधत्व, इह च पाण्डुग्रहण कृष्णादिवर्णानामपि स्वस्थानभेदेन भेदाद्भेदान्तरसम्भवसूचक, पनक –अत्यन्तसूक्ष्मरजोरूप स एव मृत्तिका पनकमृत्तिका, पनकस्य नभसि विवर्त्तमानस्य लोके पृथिवीत्वेनारूढत्वात्पूर्वभेदसङ्ग्रहेऽपि भेदेनोपादान, तत एव मृत्तिकेति पृथिवीपर्यायोक्तिरपि, अन्ये त्वाहु –पनकमृत्तिका मरु पर्पटकेति रूढा, यस्याश्चरणाभिघाते झगिति उज्जृम्भण, खरपृथिवी-भेदानाह–खरा प्रक्रमात् बादरपृथिवीजीवा षट्त्रिंशद्विधा ॥ ७२ ॥१४४५॥ तानेवाह—पृथिवीति शुद्धपृथिवी शर्करादिरूपा या न स्यात्, च उत्तरभेदापेक्षया समुच्चये, शर्करा–लघूपलशकलरूपा, वालुका प्रतीता, उपल गण्डशैलादि , शिला च दृषदित्यर्थ , लवण च समुद्रलवणादि ऊपश्च क्षारमृत्तिका लवणोषौ, अयस्ताम्रत्रपुकसीसकरूप्यसुवर्णानि च प्रतीतानि, नवर एषा मन्त्रनिधनो धातव एवैवमुक्ता , सदा तेषु तत्सत्तादर्शनार्थं चैवमुक्त, तेषु ह्यमूनि प्रागपि सन्त्येव, केवल मलविगमादा विर्भवति, वज्रश्च हीरक ॥ ७३ ॥ १४४६ ॥ हरितालो हिङ्गुलको मन शिलेति प्रतीतानि, सीसकश्च धातुविशेष , अञ्जन च समीरक, प्रवाल च–विद्रुम सीसकाञ्जनप्रवालानि, अभ्रपटल प्रसिद्ध, अभ्रवालुका–अभ्रपटलमिश्रवालुका, बादरकाये इति

पृथिवीकाय स्वरूपम्

बादरपृथिवीकाये, अमी भेदा इति शेषः, चस्य गम्यमानत्वात्, मणिविधानानि च-मणिभेदाः ॥ ७४ ॥ १४४७ ॥ कानि पुनस्तानीत्याह—गोमेज्जकश्च रुचकः, अङ्कः स्फटिकश्च लोहिताक्षश्च मरकतः मसारगल्लः भुजमोचकः इन्द्रनीलश्च ॥ ७५ ॥ १४४८॥ चन्दनः, गैरिकः, हंसगर्भः, पुलकः, सौगन्धिकश्च बोद्धव्यः—ज्ञातव्यः, चन्द्रप्रभः, वैडूर्यः, जलकान्तः, सूरकान्तश्च, इह च पृथिव्यादयश्चतुर्दश हरितालादयोऽष्टौ गोमेज्जकादयश्च क्वचित्कस्यचित् कथञ्चिदन्तर्भावाच्चतुर्दशेत्यमी मीलिताः शपट्त्रिंत् ॥ ७६ ॥ १४४९ ॥ सम्प्रति प्रकृतोपसंहारपूर्वकं सूक्ष्मपृथिवीकायप्ररूपणामाह—

एए खरपुढवीए, भेया छत्तीसमाहिया । एगविहमनाणत्ता, सुहुमा तत्थ वियाहिया ॥ १४५० ॥

एते खरपृथिव्यास्तदविभागाच्च तत्स्थजीवानां भेदाः ३६ आख्याताः, एगविहमनाणत्ति, आर्षत्वादेकविधाः, किमित्येवंविधा ?, यत अविद्यमानं नानात्वं–नानाभावो भेदो येषां ते अनानात्वाः सूक्ष्माः तत्रेति तेषु सूक्ष्मबादररूपपृथिवीजीवेषु मध्ये व्याख्याताः ॥ ७७ ॥ १४५० ॥ एतानेव क्षेत्रत आह—

सुहुमा य सव्वलोगंमि, लोगदेसे य बायरा ।
एत्तो कालविभागं तु, तेसिं वुच्छं चउव्विहं ॥ १४५१ ॥

सूक्ष्माः सर्वलोके–चतुर्दशरज्ज्वात्मके, तत्र सर्वत्र सर्वदा तेषां भावात्, लोकस्य देशे–विभागे लोकदेशे, चः पुनरर्थे, बादराः कचित्कदाचिदसत्त्वेन सकलव्याप्त्यसम्भवात्, अधुना एतान् कालतोऽभिधित्सुः प्रस्तावनामाह—इतः क्षेत्रप्ररूपणादनन्तरं कालविभागं–कालभेदं, तुः–पुनः, तेषां पृथिवीजीवानां वक्ष्ये, चतुर्विधं साद्यनादिसान्तानन्तभेदेन ॥ ७८ ॥ १४५१ ॥



सूक्ष्मबादरपृथिवीकाय क्षेत्रम्

पृथिवी कायाना कालमानम्

यथाप्रतिज्ञातमाह—

सतइ पप्पऽणाईया, अपज्जवसिया वि य। ठिइ पडुच्च साईया, सपज्जवसियावि य ॥ १४५२ ॥ बावीस-सहस्साइ, वासाणुक्कोसिया भवे । आउठिई पुढवीण, अतोमुहुत्त जहन्निया ॥ १४५३ ॥ असखकालमुक्कोसा, अतोमुहुत्त जहन्नय। कायठिई पुढवीण, त काय तु अमुचओ ॥ १४५४ ॥ अणतकालमुक्कोस, अतोमुहुत्त जहन्नय। विजढमि सए काए, पुढविजीवाण अतर ॥ १४५५ ॥

गाथा ४, सततिं—अपरापरोत्पत्तिरूप प्रवाह प्राप्य—आश्रित्य अनादिका अपर्यवसिता अपि च, तेपा प्रवाहत सर्वदापि सद्भावात्, स्थितिं भवस्थितिकायस्थितिरूपा प्रतीत्य—आश्रित्य सादिका सपर्यवसिता अपि च, द्विविधाया अपि तस्या नियत कालत्वात् ॥ ७९ ॥ १४५२ ॥

यथा चैतत्तथाह—

द्वाविंशति सहस्राणि वर्षाणा उत्कृष्टा भवेत्, केत्याह—आयुःस्थिति—जीवितावस्थान पृथिवीजीवानां अन्तर्मुहूर्त्त जघन्यिका ॥ ८० ॥ १४५३ ॥

असङ्ख्यकाल उत्कृष्टा, अन्तर्मुहूर्त्त जघन्यका, काऽसौ? काय इति पृथिवीकाय तस्मिन् स्थिति—ततोऽनुद्वर्तनावस्थान कायस्थिति पृथिवीना त पृथिवीरूप काय, तोरेवार्थस्य भिन्नक्रमत्वात्, अमुञ्चतामेव—अत्यजतामेव ॥ ८१ ॥ १४५४ ॥

इत्थं द्विविधाया अपि स्थितेर्नैयत्यमुक्तं सादिपर्यवसितत्वमेषां सामर्थ्यं, कालस्य प्रक्रान्तत्वादन्तरकालमाह—

अनन्तकालमुत्कृष्टं, अन्तर्मुहूर्त्तं जघन्यकं त्यक्ते स्वके–आत्मीये काये पृथिवीजीवानामन्तरं, कोऽर्थः? यत्पृथिवीकायादुद्वर्त्तनं या च पुनस्तत्रैवोत्पत्तिरनयोर्व्यवधानमिति ॥ ८२ ॥ १४५५ ॥ एतानेव भावत आह—

एएसिं वन्नओ चेव, गंधओ रसफासओ । संठाणदेसओ वावि, विहाणाइं सहस्ससो ॥ १४५६ ॥

स्पष्टं, नवरं वर्णादीनां भावरूपत्वं पर्यायरूपत्वात्, विधानानि–भेदाः सहस्रशः, उपलक्षणं चेह सहस्रश इति, वर्णादितारतम्यस्य बहुतरभेदत्वेन असङ्ख्यभेदताया अपि सम्भवादिति ॥ ८३ ॥ १४५६ ॥

इत्थं पृथिवीजीवानभिधायाब्जीवानाह—

दुविहा आउजीवा उ, सुहुमा० ॥ १४५७ ॥ बायरा जे उ पज्जत्ता, पंचहा ते पकित्तिया । सुद्धोदए य उस्से, हरयणु महिया हिमे ॥ १४५८ ॥ एगविहमनाणत्ता, सुहुमा तत्थ वियाहिया । सुहुमा सव्वलोगंमि, लोगदेसे य बायरा ॥ १४५९ ॥ संतइं पप्पणाईया० ॥ १४६० ॥ सत्तेव सहस्साइं, वासाणुक्कोसिया भवे । आउठिई आऊणं, अंतोमुहुत्तं जहन्नयं ॥ १४६१ ॥ असंखकालमुक्कोसा, अंतोमुहुत्तं जहन्नयं । कायठिई आऊणं, तं कायं तु अमुंचओ ॥ १४६२ ॥ अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नयं । विजढंमि सए काए, आउजीवाण अंतरं ॥ १४६३ ॥ एएसिं वन्नओ चेव,० ॥ १४६४ ॥

दुविहेत्यादि सूत्राष्टकं व्याख्यातप्रायं, नवरं, शुद्धोदकं–मेघमुक्तं समुद्रादिसम्बन्धि च जलं, उस्सेत्यवश्यायः शरदादिषु



अप्काय-स्वरूपम्

वनस्पतिका स्वरूपम्

प्राभातिक सूक्ष्मवर्षं, हरतनु प्रात स्निग्धपृथ्वीसमुद्भवस्तृणाग्रजलविन्दु, महिका गर्भमासेषु सूक्ष्मवर्षं, हिम स्त्यानजल, सप्तैव सहस्राणि वर्षाणामुत्कृष्टा भवेत्, काऽसावित्याह—आयु स्थिति, अपामिति अजीवानामिति ॥ ८४-९१ ॥ १४५७-६४ ॥

सम्प्रति वनस्पतिजीवानाह—

दुविहा वणस्सई जीवा, सुहुमा० ॥ १४६५ ॥ बायरा जे उ पज्जत्ता, दुविहा ते वियाहिया। साहारणसरीरा य, पत्तेगा य तहेव य ॥ १४६६ ॥ पत्तेयसरीरा उ, णेगहा ते पकित्तिया (बारसविह भेएण, पत्तेया उ विया हिया पा०)। रुक्खा गुच्छा य गुम्मा य, लया वल्ली तणा तहा ॥ १४६७ ॥ वलय पव्वया (ज्ञा पा०) कुहणा, जलरुहा ओसही तिणा। हरियकाया उ बोद्धवा, पत्तेया इति आहिया ॥ १४६८ ॥ साहारणसरीरा उ, णेगहा ते पकित्तिया। आलुए मूलए चेव, सिंगबेरे तहेव य ॥ १४६९ ॥ हिरिली सिरिली सिस्सिरीली, जावई केयकदली। पलडुलसणकदे य, कदली य कुहव्वये ॥ १४७० ॥ लोहिणीहूयथीहू य, तुहगा य तहेव य। कण्हे य वज्जकदे य, कदे सूरणए तहा ॥ १४७१ ॥ अस्सकन्नी य बोद्धव्वा, सीहकन्नी तहेव य। मुसुढी य हलिद्दा य, णेगहा एव मायओ ॥ १४७२ ॥ एगविहमणाणत्ता० ॥ १४७३ ॥ सतइ पप्पऽणाईआ० ॥ १४७४ ॥ दस चेव सहस्साइ, वासाणुक्कोसिया भवे। वणस्स(प्फ पा०)ईण आउ तु, अतोमुहुत्त जहन्नय ॥ १४७५ ॥ अणतकालमु० ॥ १४७६ ॥ असखकालमुक्कोसा० काए, पणगजीवाण अतर ॥ १४७७ ॥ एएसि वण्णओ० ॥ १४७८ ॥

सूत्राणि १४ स्पष्टानि, नवर, साधारण अनन्तजीवानामपि समान एक शरीर येषा ते साधारणशरीरा, उपलक्षण चैतत्,

आहारपानग्रहणयोरपि, तेषां साधारणत्वाद्, उक्तं हि–"साहारणमाहारो साहारणमाणपाणगहणं च । साहारणजीवाणं साहारणलक्खणं एयं ॥ १ ॥" पत्तेअगा इति प्रत्येकका:–प्रत्येकशरीरा इत्यर्थः, एकमेकं प्रति प्रत्येकं एकैकशो विभिन्नं शरीरं येषां ते प्रत्येकशरीराः, तेषां हि यदेकस्य शरीरं न तदन्यस्येति, यदुक्तं–"जह सगलसरिसवाणं सिलेसमिस्साण वट्टिआ वत्ती । पत्तेअशरीराणं तह हुंति सरीरसंघाया ॥ १ ॥ जह वा तिलसक्कुलिआ बहूहि तिलेहिं मेलिआ संती । पत्तेअसरीराणं तह हुंति सरीरसंघाया ॥ २ ॥" प्रक्रमात् जीवा, ये इति शेषः, अनेकधा ते प्रकीर्त्तिताः, वारसविहभेएणं पत्तेआ उ विआहिआ इति पाठः, स्पष्टः, तानेवाह–वृक्षाः चूतादयस्ते च द्विधा–एकास्थिकाः–फलं २ प्रति एकबीजकाः निम्बाम्रकादयः, बहुजीवकाश्च पिप्पलकपित्थादयः, गुच्छा वृन्ताकीप्रभृतयः, गुच्छलक्षणं चेदं,–"जो एगमूलकंदो सरलो साहागणो समुद्दिट्ठे । अनुन्नमसंवद्धो स गुच्छसन्नो घणो सघो ॥ १ ॥" गुलमाश्च नवमालिकाकणवीराद्या, तथा चैषां लक्षणं–"जह गुच्छा तह गुम्मा, नवरं सरलत्तवज्जिओ किंचि । अन्नुन्नं अणुलग्गो साहापसरो हवइ गुम्मो ॥ १ ॥" लता अत्युच्चा एकाकिन्य अतितुच्छपृथुलाः पद्मलताचम्पकलताद्याः, वल्लयः प्रसिद्धस्वरूपास्त्रपुष्पीचिर्भटिकानागवल्ल्यादयः, तृणानि जुञ्जुकार्जुनादीनि, लतावलयानि नालिकेरीकदल्यादीनि, तेषां च शाखान्तराभावेन लतारूपता त्वचो वलयाकारत्वेन च वलयता, पर्वाणि–सन्धयस्तेभ्यो जाताः पर्वजाः–इक्ष्वादयः, कुहणा भूमिस्फोटकविशेषाः सर्प्पछत्रकादयः, जले रुहन्तीति जलरुहाः सेवालपद्मादयः, औषधयः फलपाकान्तास्तद्रूपाणि तृणानि औषधितृणानि शाल्यादीनि, हरितानि तन्दुलेयकादीनि, तान्येव कायाः शरीराण्येषामिति हरितकायाः, चशब्द एषामेव स्वगतानेकभेदसूचकः ॥ ९२–९५ ॥ १४६५–६८ ॥

तोरप्यर्थत्वात्साधरणशरीरा अपि, न केवल प्रत्येकशरीरा इत्यपेरर्थ , आलुकमूलकादयो हरिद्रापर्यन्ता प्राय कन्द विशेषास्तत्तद्देशप्रसिद्धा , एवमादयः-इत्येव प्रकारा , येषामिद साधारणशरीरलक्षणमस्ति, तद्यथा-"चक्काग भज्जमाणस्स, गठी चुण्णघणो भवे । पुढविसरिसेण भेएण, अणतजीव वियाणाहि ॥ १ ॥ गूढच्छिराग पत्त सच्छीर ज च होइ निच्छीर । जपि अ पणट्ठसधि, अणतजीय वियाणाहि ॥ २ ॥" इत्यादि ॥ ९६-१०१ ॥ १४६९-७४ ॥

पनका-उल्लिजीवा , इह च तदुपलक्षिता सामान्येन वनस्पतयो गृह्यन्ते, तेषा पनकाना, पठन्ति चान्ये-"वणस्सईण आउ तु अतोमुहुत्त जहन्नय" इति, स्पष्ट, इह च प्रत्येकशरीरापेक्षया उत्कृष्ट दशवर्षसहस्रमानमायुरुक्त, साधारणाना जघन्यत उत्कृष्टतश्चा तर्मुहूर्त्तायुष्कत्वात्, उक्त च-"णिओअस्स ण भते ! केवइअ काल ठिइपन्नत्ता ?, गोअमा ! जहण्णेण अतोमुहुत्त उक्कोसेण अतोमुहुत्त" ॥ १०२ ॥ १४७५ ॥

कायस्थिति पनकाना, इहापि सामान्येन वनस्पतिजीवान्निगोदाश्चापेक्ष्योत्कृष्टतोऽनन्तकालमुच्यते, विशेषापेक्षाया हि प्रत्येक वनस्पतीना, तथा निगोदाना बादराणा सूक्ष्माणा चासङ्ख्येयकालैव स्थिति , यदुक्त-"पत्तेअसरीरबायरवणप्फइकाइयाण भते ! केवइय कायठिइ पन्नत्ता ?, गो० जहन्नेण अन्तोमुहुत्त उक्कोसेण सत्तरि सागरोवमकोडाकोडीण" तथा "निओएण भते ! णिओदेति कालओ केचिर होइ ?, जहन्नेण अन्तोमुहुत्त उक्कोसेण अणन्तकाल अणन्ताओ उस्सप्पिणीओसप्पिणीओ खेत्तओ अड्ढाइज्जा पोग्गलपरिअट्टा, बायरनिओयपुच्छा, जहन्नेण अतोमुहुत्त, उक्कोसेण सत्तरिसागरोवमकोडाकोडीओ, सुहुमनिओ-अपुच्छा, जहन्नेण अतोमुहुत्त, उक्कोसेण असखिज्ज काल"त्ति ॥ १०३ ॥ १४७६ ॥

वनस्पतिका-यस्वरूपम्

अससङ्ख्यकालमुत्कृष्टं पनकजीवानां पनकोपलक्षितवनस्पतिजीवानां अन्तरं, तत उद्धृत्य हि पृथिव्यादिषूत्पद्यते, तेषु चासङ्ख्येयकालैव कायस्थितिरिहापि तथोक्तत्वादिति ॥ १०४–१०५ ॥ १४७७–७८ ॥

प्रकृतमुपसंहरन्नुत्तरग्रन्थसम्बन्धयितुमाह—

इच्चेए थावरा तिविहा, समासेण वियाहिया । इत्तो उ तसे तिविहे, वुच्छामि अणुपुव्वसो ॥ १४७९ ॥

इत्येवं प्रकारा एते पृथिव्यादयः स्थानशीलाः स्थावराः त्रिविधाः–त्रिप्रकाराः, त्रयाणामप्यमीषां स्वयमवस्थितिस्वभावत्वात् समासेण–सङ्क्षेपेण व्याख्याताः, विस्तरतो ह्यमीषां बहुतरा भेदाः, अतः स्थावरविभक्तेरनन्तरं, तुः–पुनः त्रसान् त्रिविधान् वक्ष्यामि आनुपूर्व्या ॥ १०६ ॥ १४७९ ॥

तेऊ वाऊ य बोद्धव्वा, ओराला य तसा तहा । इच्चेए तसा तिविहा, तेसिं भेए सुणेह मे ॥ १४८० ॥

तेजोयोगात् तेजांसि अत्राग्नयः, तद्वर्त्तिनो जीवा अपि तथोक्ताः, एवं वन्तीति वायवो–वातास्तेऽपि बोद्धव्याः, उदारा–एकेन्द्रियापेक्षया प्रायः स्थूला द्वीन्द्रियादयः, चः समुच्चये, त्रसास्तथेति–तेनागमोक्तप्रकारेण, उपसंहारमाह–इत्येते अनन्तरोक्ताः त्रस्यन्ति–चलन्ति देशान्तरं सङ्क्रामन्ति इति त्रसाः त्रिविधाः, तेजोवाय्वोश्च स्थावरनामकर्मोदयेऽप्युक्तरूपं त्रसनमस्तीति त्रसत्वं, द्विधा हि तद्गतितो लब्धितश्च, यदुक्तं–"दुविहा खलु तसजीवा–लद्धितसा चेव गइतसा चेव"त्ति ततश्च तेजोवाय्वोर्गतित उदाराणां च लब्धितोऽपि त्रसत्वमस्तीति, उत्तरग्रन्थं सम्बन्धयन्–आह–तेषां तेजःप्रभृतीनां भेदान् शृणुत मे–मम कथयत इति शेषः ॥ १०७ ॥ १४८० ॥



त्रिविधाः
त्रसाः

तेजस्काय-स्वरूपम्

तत्र तावत्तेजोजीवानाह—

दुविहा तेउजीवा उ, सुहुमा बायरा तहा । पज्जत्तमपज्जत्ता, एवमेव दुहा पुणो ॥ १४८१ ॥ बायरा जे उ पज्जत्ता, णेगहा ते वियाहिया । इंगाले मम्मुरे अगणी, अच्चि जाला तहेव ॥ १४८२ ॥ उक्का विज्जू य बोद्धव्वा, णेगहा एवमायओ । एगविहमनाणत्ता, सुहुमा ते वियाहिया ॥ १४८३ ॥ सुहुमा सव्वलोगम्मि, लोगदेसे (प्र० एगदेसम्मि) य बायरा । इत्तो काल० ॥ १४८४ ॥ संतइं पप्पऽणाईया० ॥ १४८५ ॥ तिन्नेव अहोरत्ता, उक्कोसेण वियाहिया । आउठिई तेऊण, अंतोमुहुत्तं जहन्नयं ॥ १४८६ ॥ असंखकालमुक्कोसा, अंतो मुहुत्तं जहन्नयं । कायठिई तेऊण, तं कायं तु अमुंचओ ॥ १४८७ ॥ अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नयं । विजढंमि सए काए, तेउजीवाण अंतरं ॥ १४८८ ॥ एएसिं वन्नओ० ॥ १४८९ ॥

दुविहेत्यादिसूत्राणि नव प्राग्वत्, नवरं, अङ्गारो–विगतधूमज्वालो दह्यमानेन्धनादिकं, मुर्मुरो–भस्ममिश्राग्निकणरूपः, अग्निः–इहोक्तभेदातिरिक्तो वह्निः, अर्चिः–मूलप्रतिबद्धा ज्वलनशिखा, दीपशिखा इत्यन्ये, ज्वाला–छिन्नमूला ज्वलनशिखैवेति सूत्रनवकार्थः ॥ १०८–११६ ॥ १४८१–८९ ॥

उक्तास्तेजोजीवा, वायुजीवानाह—

दुविहा वाउजीवा य, सुहुमा बायरा तहा । पज्जत्तमपज्जत्ता, एवमेव दुहा पुणो ॥ १४९० ॥ बायरा जे उ पज्जत्ता, पंचहा ते पकित्तिया । उक्कलियामंडलियाघणगुंजासुद्धवाया य ॥ १४९१ ॥ संवट्टगवाए य, णेगहा

एवमाअओ। एगविहमणाणत्ता, सुहुमा तत्थ (प्र० ते) वियाहिया ॥ १४९२ ॥ सुहुमा सव्वलोगंमि० ॥ १४९३ ॥ संतइं पप्पडणाईया० ॥ १४९४ ॥ तिन्नेव सहस्साइं, वासाणुक्कोसिया भवे। आउठिई वाऊणं, अंतोमुहुत्तं जहन्नयं ॥ १४९५ ॥ असंखकालमुक्कोसा०। कायठिई वाऊणं० ॥ १४९६ ॥ अणंतकालमुक्कोसं०। विजढंमि सए काए, वाउजीवाण अंतरं ॥ १४९७ ॥ एएसिं वन्नओ चेव०, ॥ १४९८ ॥

दुविहेत्यादिसूत्रनवकं प्राग्वत्, पञ्चधेत्युपलक्षणं अत्रैवास्यानेकधेत्यभिधानात्, वातशब्दस्य प्रत्येकमभिसम्बन्धात्, उत्कलिका वाता—ये स्थित्वा स्थित्वा पुनर्वान्ति, मण्डलिकावाता—वातोलीरूपाः, घनवाता—रत्नप्रभाद्यधोवर्त्तिनां घनोदधीनां विमानानां चाधारा हिमपटलकल्पा वायवः, गुञ्जावाता—ये गुञ्जन्तो वान्ति, शुद्धवाता—उत्कलिकाद्युक्तविशेषविकला मन्दानिलादयः ॥ ११७–१८ ॥ १४९०–९१ ॥

संवट्टगवाएअत्ति संवर्त्तका वाता ये वहिःस्थितमपि तृणादिविवक्षितक्षेत्रान्तःक्षिपन्तीति, सूत्रनवकार्थः ॥ ११९–२५ ॥ १४९१–९८ ॥

इत्थं तेजोवायुरूपांस्त्रसानुक्त्वा उदारत्रसाभिधित्सयाह—

ओराला तसा जे उ, चउहा ते पकित्तिया। बेइंदिय तेइंदिय, चउरो पंचिंदिया चेव ॥ १४९९ ॥

उदारास्त्रसाः ये त्विति ये पुनः चतुर्द्धा—चतुष्प्रकाराः ते प्रकीर्त्तिताः, यथा चैषां चतुर्द्धात्वं तथाह—द्वे इन्द्रिये—स्पर्शनरसनाख्ये येषां ते द्वीन्द्रियाः, एतच्च निवृत्त्युपकरणाख्य द्रव्येन्द्रियमभिप्रेत्योच्यते, भावेन्द्रियापेक्षया तु एकेन्द्रियाणामपि

जीवाजीवविभक्तिरितिनाम षट्त्रिंशत्तमध्ययनम् ३६

वायुकायस्वरूपमुदारत्रसाना भेदाः

द्वीन्द्रिय-स्वरूपम्

इन्द्रियपर्याप्त्यपि सम्भवात्, तथा चोक्त प्रज्ञापनायां, "दव्विंदिअ पडुच्च एगिंदिआ जीवा एगिंदिआ, भाविंदिअ पडुच्च एगिंदिआवि जीवा बेंदिआ तेंदिआ चउरिंदिआ पचिंदिआ" इति, एवं शेषेष्वपि, तिस्रस्ति त्रीन्द्रिया, चउरोत्ति चतुरिन्द्रिया पञ्चेन्द्रियाश्चैव ॥ १२६ ॥ १४९९ ॥ तत्र तावद् द्वीन्द्रियवक्तव्यतामाह—

बेइन्दिया उ जे जीवा, दुविहा ते पकित्तिया। पज्जत्तमपज्जत्ता, तेसिं भेए सुणेह मे ॥ १५०० ॥ किमिणो सोमंगला चेव, अलसा माइवाहया। वासीमुहा य सिप्पीया, संखा संखणगा तहा ॥ १५०१ ॥ पल्लोयाणुल्लया चेव, तहेव य वराडगा। जलूगा जालगा चेव, चंदणा य तहेव य ॥ १५०२ ॥ इति बेइंदिया एए, णेगहा एवमायओ। लोगेगदेसे ते सव्वे, न सव्वत्थ वियाहिया ॥ १५०३ ॥ संतइं पप्पऽणाईया० ॥ १५०४ ॥ वासाइं बारसेव उ, उक्कोसेण वियाहिया। बेइंदिय आउठिई, अंतोमुहुत्त जहन्नय ॥ १५०५ ॥ संखिज्जकालमुक्कोसा० । बेइंदियकायठिई० ॥ १५०६ ॥ अणंतकालमुक्कोस० । बेइंदियजीवाणं, अंतरेयं वियाहियं ॥ १५०७ ॥ एएसिं वण्णओ चेव० ॥ १५०८ ॥

सूत्राणि • प्राग्वत्, नवरं, द्वीन्द्रियाभिलाप कार्यं, तथा कृमयोऽशुच्यादिसम्भवा अलसाः प्रतीताः, मातृवाहका ये काष्ठशकलानि समोभयाग्रतया सम्बन्धयन्ति, वास्याकारमुखा वासीमुखाः, सिप्पीअत्ति प्राकृतत्वात् शुक्तयः शङ्खाः शङ्खनकाः–शङ्खाकृतय एव लघवो जीवाः, वराटका–कपर्दाः, जलौकसो–दुष्टरक्ताकर्षिण्यः, चन्दनाश्च अक्षाः, शेषास्तु यथासम्प्रदाय वाच्याः, पदानि प्राग्वदेव तु द्वीन्द्रियाणामायुः स्थिति ॥ १२७-३५ ॥ १५००-०८ ॥

त्रीन्द्रियवक्तव्यतामाह—

तेइंदिया य जे जीवा, दुविहा ते पकित्तिया । पज्जतमपज्जत्ता, तेसिं भेए सुणेह मे ॥ १५०९ ॥ कुंथुपिवीलिउड्डंसा, उक्कलुद्देहिया तहा । तणहारा कट्ठहारा य, मालूगा पत्तहारगा ॥ १५१० ॥ कप्पासिऽट्ठिमिंजा य, तिंदुगा तउसमिंजगा । सदावरी य गुम्मी य, बोद्धव्वा इंदगाइ य ॥ १५११ ॥ इंदगोवसमाइया, णेगहा एवमायओ । लोएगदेसे ते सव्वे, न सव्वत्थ वियाहिया ॥ १५१२ ॥ संतइं पप्पऽणाईया० ॥ १५१३ ॥ एगूणवन्नऽहोरत्ता, उक्कोसेण वियाहिया । तेइंदिय आउठिई, अंतोमुहुत्तं जहन्नयं ॥ १५१४ ॥ संखिज्जकालमुक्कोसा० । तेइंदियकायठिई० ॥ १५१५ ॥ अणंतकालमुक्कोसं० । तेइंदियजीवाणं० ॥ १५१६ ॥ एएसिं वन्नओ चेव० ॥ १५१७ ॥

तेंदिए इत्यादि सूत्रनवकं प्राग्वत्, नवरं, त्रीन्द्रियोच्चारणं विशेषः, तथा कुन्थवः—अनुद्धरिप्रभृतयः, पिपीलिकाः—कीटिकाः, गुंमी-शतपदी, एवमन्येऽपि यथासम्प्रदायं वाच्याः, एकोनपञ्चाशदहोरात्रान् त्रीन्द्रियाणामायुःस्थितिरुत्कृष्टेन—उत्कृष्टतः ॥ १३६–४४ ॥ १५०९–१७ ॥

चतुरिन्द्रियवक्तव्यतामाह—

चउरिंदिया उ जे जीवा, दुविहा ते पकित्तिया । पज्जत्तमपज्जत्ता, तेसिं भेए सुणेह मे ॥ १५१८ ॥ अंधिया पुत्तिया चेव, मच्छिया मसगा तहा । भमरे कीडपयंगे य, ढिंकणे कुंकणे तहा ॥ १५१९ ॥ कुक्कडे सिंगिरिडी य, नंदावत्ते य विच्छिए । डोले भिंगिरिडिओ, विरिली अच्छिवेहए ॥ १५२० ॥ अच्छिरे माहले अच्छि [ रोडए ],

विचित्ते चित्तपत्तए । ओहिंजलिया जलकारी, य नीया तवगाइ या ॥ १५२१ ॥ इइ चउरिंदिया एए, पेगहा एवमायओ । लोगस्स एगदेसम्मि, ते सव्वे परिकित्तिया ॥ १५२२ ॥ सतइ पप्पडणाईया० ॥ १५२३ ॥ छच्चेव य मासाऊ, उक्कोसेण वियाहिया । चउरिंदिय आउठिई, अतोमुहुत्त जहन्नय ॥ १५२४ ॥ सखिज्जकालमुक्कोस, अतो० । चउरिंदियकायठिई, त० ॥ १५२५ ॥ अणतकालमुक्कोस, अतो० ॥ १५२६ ॥ एएर्सि वन्नओ चेव०, ॥ १५२७ ॥

चतुरिंदिए इत्यादि सूत्रदशक, इदमपि प्राग्वत् नवर, चतुरिन्द्रियाभिलाप एव विशेप , एतद्भेदाश्च केचिदतिप्रसिद्धा एव, अन्ये तु तत्तद्देशप्रसिद्धितो विशिष्टसम्प्रदायाद्वाभिधेया , तथा षडेव मासानुत्कृष्टा चतुरिन्द्रियाणामायु -स्थिति ॥ १४५–१४ ॥ १५१८–२७ ॥

पञ्चेन्द्रियवक्तव्यतामाह—

पचिंदिया उ जे जीवा, चउव्विहा ते वियाहिया । नेरइय तिरिक्खा य, मणुया देवा य आहिया ॥ १५२८ ॥

पञ्चेन्द्रियास्तु पुनर्ये जीवाश्चतुर्विधास्ते व्याख्याता , तद्यथा–नैरयिकास्तिर्यञ्चश्च, मनुजा देवाश्च आख्याता –कथिता तीर्थकृद्भिरिति शेप ॥ १५५ ॥ १५२८ ॥

तत्र तावन्नैरयिकानाह—

नेरइया सत्तविहा, पुढवीसु सत्तसू भवे । रयणाभसक्कराभा, वालुयाभा य आहिया ॥ १५२९ ॥ पकाभा धूमाभा, तमा तमतमा तहा । इइ नेरइया एए, सत्तहा परिकित्तिया ॥ १५३० ॥ लोगस्स एगदेसम्मि, ते सव्वे उ

पञ्चेन्द्रियाणा चतुर्विधत्वम्

नेरयिकाधिकारः

वियाहिया । इत्तो कालविभागं तु, तेसिं वुच्छं चउव्विहं ॥ १५३१ ॥ संतइं पप्पऽणाईया०, ॥ १५३२ ॥ सागरोवममेगं तु, उक्कोसेण वियाहिया । पढमाइ जहन्नेणं, दसवाससहस्सिया ॥ १५३३ ॥ तिन्नेव सागराऊ, उक्कोसेण० । दुच्चाए जहन्नेणं, एगं तू सागरोवमं ॥ १५३४ ॥ सत्तेव सागराऊ, उक्कोसेण वियाहिया । तईयाए जहन्नेणं, तिन्नेव सागरोवमा ॥ १५३५ ॥ दससागरोवमाऊ, उक्कोसेण वियाहिया । चउत्थीइ जहन्नेणं, सत्तेव उ सागरोवमा ॥ १५३६ ॥ सत्तरससागराऊ, उक्कोसेण वियाहिया । पंचमाए जहन्नेणं, दस चेव उ सागरा ॥ १५३७ ॥ बावीससागराऊ, उक्कोसेण वियाहिया । छट्ठीइ जहन्नेणं, सत्तरस सागरोवमा ॥ १५३८ ॥ तित्तीससागराऊ, उक्कोसेण वियाहिया । सत्तमाए जहन्नेणं, बावीसं सागरोवमा ॥ १५३९ ॥ जा चेव उ आउठिई, नेरइयाणं वियाहिया । सा तेसिं कायठिई, जहन्नुक्कोसिया भवे ॥ १५४० ॥ अणंतकालमुक्कोसं० नेरइयाणं तु अंतरं ॥ १५४१ ॥ एएसिं वन्नओ चेव० ॥ १५४२ ॥

सूत्राणि १४, नैरयिकाः सप्तविधाः—सप्तप्रकाराः, किमिति ?, यतः पृथिवीषु सप्तसु भवेयुः ततः तद्भेदात्तेषां सप्तविधत्वमिति भावः, काः पुनस्ताः सप्त ?, इत्याह—रत्नानां वैडूर्यादीनां आभास्वरूपतः प्रतिभासनमस्यामिति रत्नाभा, इत्थं चैतत्, तत्र रत्नकाण्डस्य भवनपतिभवनानां च विविधरत्नवतां सम्भवात्, शर्करा—श्लक्ष्णपाषाणशकलरूपा तदाभा, एवं सर्वत्र, नवरं, धूमाभेति यद्यपि तत्र धूमासम्भवः तथापि तदाकारपरिणतानां पुद्गलानां सम्भवादेवमुक्तं, तमोरूपत्वाच्च तमःप्रभाः, प्रकृष्टतरतमस्त्वाच्च तमस्तमःप्रभाः, इतीत्यमुना पृथ्वी सप्तविधत्वलक्षणेन प्रकारेण नैरयिका एते सप्तधा परिकीर्त्तिताः ॥ १५६–५७ ॥ १५२९–३० ॥

सूत्रद्वय क्षेत्रकालाभिधायि प्राग्वत् ॥ १५८–५९ ॥ १५३१–३२ ॥ नवर सादिसपर्यवसितत्व द्विविधस्थित्युक्तिद्वारतो भावयितुमाह—सागरोपममेक तूत्कृष्टेन व्याख्याता प्रथमाया प्रक्रमात् नरकपृथिव्या, जघन्येन दशवर्षसहस्रिका, प्रस्तावादायु स्थिति, नैरयिकाणामितीहोत्तरसूत्रेषु च द्रष्टव्यम् ॥ १६० ॥ १५३३ ॥ त्रीण्येव सागराणि–सागरोपमाणि, तु पूरणे, उत्कृष्टेन व्याख्याता, द्वितीयाया, उत्तरत्र तु शब्दस्य पुन शब्दार्थस्येह सम्बन्धात् जघन्येन पुनरेक सागरोपमम् ॥ १६१ ॥ ॥ १५३४ ॥ सप्तैव सागराणि तूत्कृष्टेन व्याख्याता तृतीयाया, जघन्येन च पुनस्त्रीणि सागरोपमाणि ॥ १६२ ॥ १५३५ ॥ दशसागरोपमाणि तूत्कृष्टेन व्याख्याता चतुर्थ्यां, जघन्येन पुन सप्त सागरोपमाणि ॥ १६३ ॥ १५३६ ॥ सप्तदश सागरोपमाणि तूत्कृष्टेन व्याख्याता पञ्चम्या, जघन्येन पुनर्दश सागरोपमाणि ॥ १६४ ॥ १५३७ ॥ द्वाविंशति सागरोपमाणि तूत्कृष्टेन व्याख्याता षष्ठ्या, जघन्येन सप्तदश सागरोपमाणि ॥ १६५ ॥ १५३८ ॥ त्रयस्त्रिंशत् सागराणि तूत्कृष्टेन सप्तम्या नरकपृथिव्या, जघन्येन द्वाविंशति सागरोपमाणि ॥ १६६ ॥ १५३९ ॥ आयु स्थितिरुक्ता, कायस्थितिमाह—या चेति च–वक्तव्यान्तरोपन्यासे, एव–भिन्नक्रमश्च पुनरर्थे, ततो यैव च पुराऽऽयु स्थितिर्नैरयिकाणामाख्याता 'सि'त्ति एवकारस्य गम्यमानत्वात् सैव तेषा कायस्थिति जघन्योत्कृष्टा भवेत्, इत्थ चैतत्, तत उद्धृताना पुनस्तत्रैवानुत्पत्ते, ते हि तत उद्धृत्य गर्भजपर्याप्तसङ्ख्येयवर्षायुष्केष्वेवोपजायन्ते ॥ १६७ ॥ १५४० ॥ अतर्मुहूर्त्तं जघन्यमन्तर, यदा अन्यतरनरकादुद्धृत्य कश्चिज्जीवो गर्भजपर्याप्तकमत्स्यादिषूत्पद्यते, तत्र चातिसङ्क्लिष्टाध्यवसायोऽन्तर्मुहूर्त्तमायु प्रतिपाल्य मृत्वा चान्यतमनरक एवोपजायते तदा लभ्यते इति भावनीयम् ॥ १६८–६९ ॥ १५४१–४२ ॥

नैरयिकाणा भवस्थिति-कायस्थिती

इत्थं नैरयिकानभिधाय तिरश्चान् आह—

पंचिंदियतिरिक्खा उ दुविहा ते वियाहिया । संमुच्छिमतिरिक्खा उ, गब्भवक्कंतिया तहा ॥ १५४३ ॥ दुविहावि ते भवे तिविहा, जलयरा थलयरा तहा । खहयरा य बोद्धव्वा, तेसिं भेए सुणेह मे ॥ १५४४ ॥ मच्छा य कच्छभा य, गाहा य मगरा तहा । सुंसमारा य बोद्धव्वा, पंचहा जलयराहिया ॥ १५४५ ॥ लोएगदेसे ते सव्वे, न सव्वत्थ वियाहिया । इत्तो कालविभागं तु, तेसिं वुच्छं चउव्विहं ॥ १५४६ ॥ संतइं पप्पऽणाईया० ॥ १५४७॥ इक्का य पुव्वकोडीओ , उक्कोसेण वियाहिया । आउठिई जलयराणं, अंतोमुहुत्तं जहन्नयं ॥ १५४८ ॥ पुव्वकोडीपुहुत्तं तु, उक्कोसेण वियाहिया । कायठिई जलयराणं, अंतोमुहुत्तं जहन्नयं ॥ १५४९ ॥ अणंतकालमुक्कोसं० जलयराणं तु अंतरं ॥ १५५० ॥ एएसिं वन्नओ चेव० ॥ १५५१ ॥ चउप्पया य परिसप्पा, दुविहा थलयरा भवे । चउप्पया चउविहा उ, ते मे कित्तयओ सुण ॥ १५५२ ॥ एगखुरा दुखुरा चेव, गंडीपयसनप्फया । हयमाई गोणमाई, गयमाई सीहमाइणो ॥ १५५३ ॥ भुओरगपरिसप्पा, परिसप्पा दुविहा भवे । गोहाई अहिमाईया, इक्किक्का णेगहा भवे ॥ १५५४ ॥ लोएगदेसे ते सव्वे, न सव्वत्थ वियाहिया । इत्तो कालविभागं तु, तेसिं वुच्छं चउव्विहं ॥ १५५५ ॥ संतइं पप्पऽणाईया० ॥ १५५६ ॥ पलिओवमा उ तिन्नि उ, उक्कोसेण वियाहिया । आउठिई थलयराणं, अंतोमुहुत्तं जहन्नयं ॥ १५५७ ॥ पलिओवमा उ तिन्नि उ, उक्कोसेणं वियाहिया । पुव्वकोडीपुहुत्तं तु, अंतोमुहुत्तं जहन्नयं ॥ १५५८ ॥ कायठिई थलयराणं, अंतरं तेसिमं भवे । कालं अणंतमुक्कोसं, अंतोमुहुत्तं जहन्नयं ॥ १५५९ ॥

जीवाजीवविभक्तिरितिनाम षट्त्रिंशत्तमध्ययनम् ३६

तिरश्चान् स्वरूपम्

विजढमि सए काए, थलयराण तु अतर। चम्मे उ लोमपक्खीया, तइया समुग्गपक्खिया ॥ १५६० ॥ वियय पक्खी य बोद्धवा, पक्खिणा य चउव्विहा। लोएगदेसे ते सव्वे, न सव्वत्थ वियाहिया ॥ १५६१ ॥ सतइ पप्पऽ णाईया० ॥ १५६२ ॥ पलिओवमस्स भागो, असखिज्जइमो भवे। आउठिई खहयराण, अतोमुहुत्त जहन्नय ॥ १५६३ ॥ असखभागो पलियस्स, उक्कोसेण उ साहिओ। पुव्वकोडीपुहुत्तेण, अतोमुहुत्त जहन्नय ॥ १५६४ ॥ कायठिई खहयराण, अतर ते(रेय)वियाहिय (प्र० मम भवे)। काल अणतमुक्कोस, अतोमुहुत्त जहन्नय ॥ १५६५ ॥ एएसि वन्नओ चेव० ॥ १५६६ ॥

पचिंदिए इत्यादिसूत्राणि २४, सम्मूर्च्छन समूर्च्छा—अतिशयमूढता तया निर्वृत्ता सम्मूर्च्छिमा, समित्युत्पत्तिस्थानपुद्गलैः सहैकीभावेन मूर्च्छन्ति, तत्तत्पुद्गलोपचयात् सम्मुच्छ्रिता भवन्तीति औणादिके मप्रत्यये सम्मूच्छिमा, ते च ते तिर्यञ्चश्च सम्मूर्च्छिमतिर्यञ्चो ये मन पर्याप्त्यभावत सदा सम्मूर्च्छिता इवावतिष्ठन्ते, तथा गर्भे व्युत्क्रान्ति उत्पत्तिर्येषा ते अमी गर्भव्युत्क्रान्तिकाः ॥ १७० ॥ १५४२ ॥

द्विविधा अपि ते भवेयु प्रत्येक त्रिविधा, तद्यथा—जले चरन्ति—गच्छन्ति चरेर्भक्षणमप्यर्थ इति जल भक्षयन्ति चेति जलचरा, एव स्थले—अजलभूभागे चरन्ति—गच्छन्तीति स्थलचरा, खयरत्ति ख—आकाश तस्मिंश्चरन्तीति खचराः, उत्तरसम्बन्धनायाह—तेषा जलचरादीनाम् ॥ १७१—७७ ॥ १५४४—५० ॥

तिरश्चान् स्वरूपम्

'यथोद्देशं निर्देश'इति जलचरभेदानाह—

मत्स्याः–मीनाः, कच्छपाः–कूर्माः, गृह्णन्तीति ग्रहा–जलचरविशेषाः, मकराः–सुंसुमारा अपि तद्विशेषा एव, लोएगदेसे इत्यादि सूत्रपट्कं प्राग्वत्, नवरं पृथक्त्वं–द्विप्रभृत्यानवान्तम् ॥ १७८ ॥ १५५१ ॥

स्थलचरभेदानाह—

परि–समन्तात्सर्प्पन्ति परिसर्प्पाः ॥ १७९ ॥ १५५२ ॥

एकखुरादयो हयादिभिर्योज्यन्ते, ततः एकखुरा हयादयः, एवं द्विखुरा गवादयः गण्डी–पद्मकर्णिका तद्वद्वृत्ततया पदानि येषां ते गण्डीपदा–गजादयः, सणप्फयत्ति सूत्रत्वात्सहनखैर्वर्त्तन्त इति सनखास्तादृशानि पदानि येषां ते सनखपदाः, सिंहादयः ॥ १८० ॥ १५५३ ॥

परिसर्प्पः प्रत्येकमभिसम्बध्यते, ततो भुजा इव भुजा–देहावयवविशेषास्तैः परिसर्प्पन्तीति भुजपरिसर्प्पाः–गोधादय इति शेषः, तथा उरो–वक्षस्तेन परिसर्प्पन्तीति उरुपरिसर्प्पाः–अहिः–सर्प्पस्तदादयः इति योगः, एते चैकैकमिति प्रत्येकमनेकधा–अनेकभेदाः, गोधेरकनकुलादिभेदतो गोणसहाचप्रलापादिभेदाच्च ॥ १८१ ॥ १५५४ ॥

पल्योपमानि तु त्रीणि उत्कृष्टेन तु साधिकानि–पूर्वकोटी पृथक्त्वेनोक्तरूपेण, पल्योपमायुषो हि न पुनस्तत्रैवोत्पद्यन्ते, ये तु पूर्वकोट्यायुषो मृत्वा तत्रैवोपजायन्ते, तेऽपि सप्ताष्टभवग्रहणानि यावत्, पञ्चेन्द्रियनरतिरश्चामधिकनिरन्तरभवान्तरासम्भवात्,



तिरश्चान्
स्वरूपम्

अत एतावत एवाधिकस्य सम्भव इति भावना, चम्मे उत्ति प्रक्रमाचर्मपक्षिण –चर्मचटकाद्या , चर्मरूपा एव हि तेषा पक्षा इति, तथा रोमप्रधाना पक्षा रोमपक्षास्तद्वन्तो रोमपक्षिणो–राजहसादय , समुद्गपक्षिण –समुद्गकाकारपक्षवन्तस्ते च मानुषोत्तराद्बहिर्द्वीपवर्त्तिन , विततपक्षिणो ये विस्तारिताभ्यामेव पक्षाभ्यामासते, इह च यत्क्षेत्रस्थित्यन्तरादि प्रत्येक प्राक्तनमदृशमपि पुन पुनरुच्यते न पुनरतिदिश्यते तत्प्रपञ्चितज्ञविनेयानुग्रहार्थं, एवविधा अपि प्रज्ञापनीया एवेति ख्यापनार्थं चेत्यदुष्टम् ॥ १८२–९३ ॥ १५५५–६६ ॥

इत्थ तिरश्चोऽभिधाय मनुजानभिधातुमाह—

मनुया दुविहभेया उ, ते मे कित्तयओ सुण । समुच्छिमाइ मणुया, गब्भवक्कतिया तहा ॥ १५६७ ॥ गब्भवक्कतिया जे उ, तिविहा ते वियाहिया । अकम्मकम्मभूमा य, अतरदीवगा तहा ॥ १५६८ ॥ पनरस तीसइविहा ( तिसपन्नरस विहा पा० ), भेआ अट्ठवीसई । सखा उ कमसो तेसिं, इइ एसा वियाहिया ॥ १५६९ ॥ समुच्छिमाण एसेव, भेओ होइ आहिओ । लोगस्स एगदेसमि, ते सव्वेवि वियाहिया ॥ १५७० ॥ सतइ पप्पडणाईया० ॥ १५७१ ॥ पलिओवमाइ तिन्नि य, उक्कोसेण वियाहिया । आउठिई मणुयाण, अतोमुहुत्त जहन्नय ॥ १५७२ ॥ पलिओवमाइ तिन्नि उ, उक्कोसेण वियाहिया । पुव्वकोडिपुहुत्तेण, अतोमुहुत्त जहन्नय ॥ १५७३ ॥ कायठिई मणुयाण, अतर तेसिम भवे । अणतकालमुक्कोस, अतोमुहुत्त जहन्नय ॥ १५७४ ॥ एएसिं वन्नओ चेव० ॥ १५७५ ॥

मनुज स्वरूपम्

मणुयेत्यादि सूत्रनवकं, प्राग्वत्, नवरं भूमेः प्रत्येकं योगात्सूत्रत्वाच्च अकर्मभूमौ भवा आकर्मभूमा एवं कार्मभूमाश्च,
अन्तरमिह समुद्रमध्यं तस्मिन् द्वीपाः–अन्तर्द्वीपास्तेषु जाता अन्तरद्वीपजाः ॥ १९४–९५ ॥ १५६७–६८ ॥
त्रिंशद्विधा
विधशब्दस्य प्रत्येकं सम्बन्धात्पञ्चदशविधाः कार्मभूमाः, भरतैरावतविदेहानां त्रयाणां प्रत्येकं पञ्चसङ्ख्यत्वात्, त्रिंशद्विधा
अकर्मभूमाः, हैमवतहरिवर्षरम्यग्हैरण्यवतदेवकुरूत्तरकुरूणां प्रत्येकं पञ्चसङ्ख्यत्वात्, इह च क्रमत इत्युक्तावपि पश्चान्नि-
र्दिष्टानामपि कर्मभूमानां मुक्तिसाधकत्वेन प्राधान्यतः प्रथमं भेदाभिधानं, अष्टाविंशतिरन्तरद्वीपजानामिति विभक्तिपरिणामेन
सम्बन्धनीयं, इत्थं चैतदेतत्सङ्ख्यत्वादन्तरद्वीपानां, ते हिमवतः पूर्वापरप्रान्तविदिक् प्रसृतकोटिषु त्रीणि २ योजनशतान्यवगा-
ह्यतावन्त्येव योजनशतान्यायामविस्तराभ्यां प्रथमे अन्तरद्वीपाः, ततोऽप्येकैकयोजनशतवृद्धावगाहनया योजनशतचतुष्कायाम-
विस्तरा, द्वितीयादयः षट्, एषां च ईशानाग्नेयादिक्रमात्प्रादक्षिण्यतः प्रथमचतुष्कस्य एकोरुक १, आभासिको २, लाङ्गूलिकः ३,
वैषाणिकः ४, इति नाम, द्वितीयस्य हयकर्णो १, गजकर्णो २, गोकर्णः ३, शष्कलीकर्णः ४, तृतीयस्य आदर्शमुखो १, सिण्ढ-
मुखो २, अधोमुखो ३, गोमुखः ४, चतुर्थस्य अश्वमुखो १, हस्तिमुखो २, सिंहमुखो ३, व्याघ्रमुखः ४, पञ्चमस्य अश्वकर्णो १,
सिंहकर्णो २, गजकर्णः३, कर्णप्रावरणः ४, षष्ठस्य उलकामुखो १, विद्युन्मुखो २, मेघमुखो ३, विद्युदन्तः ४, सप्तमस्य घनदन्तो १,
गूढदन्तः २, शुद्धदन्तः ३, श्रेष्ठदन्तः ४, एतन्नामान एव च एतेषु युगलधार्मिकाः प्रतिवसन्ति, तच्छरीरमानाद्यभिधायि
चेदं गाथायुग्मं "अंतरदीवेसु नरा धणुसय अट्ठुसिरिसआ सया मुइआ । पालिंति मिहुणभावं पल्लस्स असंखभागाऊ ॥ १ ॥
चउसट्ठी पिट्ठिकरंडयाण तेसिं इमो उ आहारो । भत्तस्स चउत्थस्स अउणसीइदिणाण पालणया ॥ २ ॥" तथा स्तोककषाया



मनुज-
स्वरूपम्

वज्रर्षभनाराचसहनना समचतुरस्रसस्थाना स्वर्गामिनश्च, एते च शिखरिणोऽपि पूर्वापरप्रान्तविदिक्प्रसृतकोटीभूकरीत्या अष्टाविंशति, सम्प्रति सर्वसाम्याच्चैषा भेदेनाविवक्षितत्वात्सूत्रेणाष्टाविंशतिसङ्ख्याविरोध इति भावनीय, सम्मूर्च्छिमाना एष एवेत्याकर्मभूमादिगर्भजाना य उक्तो भेदो–नानात्व भवत्याख्यात, ते हि तेषा एव वान्तपित्तादिषु सम्भवन्ति ॥ १९६–९९ ॥ ॥ १५६९–७२ ॥

पल्योपमानि त्रीण्यायु स्थितिरिति युगलधार्मिकापेक्षया, कायस्थितिश्च पल्योपमानि त्रीणि पूर्वकोटिपृथक्त्वेनाधिकानि इति गम्य, एतच्च तिर्यक्कायस्थित्यभिहिताभिप्रायेण विज्ञेयम् ॥ २०० ॥ १५७३ ॥

इहान्तरस्य चानन्तकालत्व साधारणवनस्पतिकायस्थित्यपेक्षयेति ॥ २०१–२ ॥ १५७४–७५ ॥

इत्थ मनुष्यानुक्त्वा देवानाह—

देवा चउव्विहा वुत्ता, ते मे कित्तयओ सुण । भोमिज्जवाणमतर, जोइस वेमाणिया तहा ॥ १५७६ ॥

देवाश्चतुर्विधा उक्ता, अर्हद्भिरिति गम्य, ते इति तान् देवान् मे कीर्तयत शृणु, तत्कीर्तन च न भेदोक्तिमन्तरेणेति देवान् तद्भेदानाह–भूमौ भवा भौमेयका–भवनवासिनो रत्नप्रभापृथिव्यन्तर्भूतत्वात् भवनाना, आपत्वात्, विविधान्य तराण्युत्कर्षापकर्षात्मकविशेषरूपाणि निवासभूतानि वा गिरिकन्दरवनविवरादीनि येषा ते व्यन्तरा, द्योतयन्त इति ज्योतींषि विमानानि तन्निवा-

सिद्धादेवा अपि ज्योतींषि, ग्रामः समागत इत्यादौ तन्निवासिजनग्रामवद्, विशेषेण मानयन्ति—उपभुञ्जन्ति सुकृतिन एतानीति विमानानि तेषु भवा वैमानिकाः, तथेति समुच्चये ॥ २०३ ॥ १५७६ ॥

एषामेवोत्तरभेदानाह—

दसहा उ भवणवासी, अट्ठहा वणचारिणो । पंचविहा जोइसिया, दुविहा वेमाणिया तहा ॥ १५७७ ॥

दशधा तु इति—दशधैव, भवनेषु वस्तुं शीलं एषां ते भवनवासिनः, अष्टधा वनेषु—विचित्रोपवनादिषु, उपलक्षणाद् अन्येषु च विविधास्पदेषु क्रीडया चरितुं शीलमेषामिति वनचारिणो—व्यन्तराः, पञ्चविधा ज्योतिष्का, द्विविधा वैमानिकाः ॥२०४॥१५७७॥

एतानेव नामग्राहमाह—

चतुर्विधानां देवानां भेदाः

असुरा नागसुवण्णा, विज्जु अग्गी अ आहिया । दीवोदहि दिसा वाया, थणिया भवणवासिणो ॥ १५७८ ॥ पिसाय भूया जक्खा य रक्खसा किन्नरा य किंपुरिसा । महोरगा य गंधव्वा अट्ठविहा वाणमंतरा ॥ १५७९ ॥ चंदा सूरा य नक्खत्ता, गहा तारागणा तहा । दिसा( प्र० ठिया )विचारिणो चेव, पंचहा जोइसालया ॥ १५८० ॥ वेमाणिया उ जे देवा, दुविहा ते पकित्तिया । कप्पोवगा य बोद्धव्वा, कप्पाईया तहेव य ॥ १५८१ ॥ कप्पोवगा बारसहा, सोहम्मीसाणगा तहा । सणंकुमारमाहिंदा, बंभलोगा य लंतगा ॥ १५८२ ॥ महासुक्का सहस्सारा, आणया पाणया तहा । आरणा अच्चुया चेव, इइ कप्पोवगा सुरा ॥ १५८३ ॥ कप्पाइया उ जे देवा, दुविहा ते वियाहिया । गेविज्जगाणुत्तरा चेव, गेविज्जा नवविहा तहिं ॥ १५८४ ॥ हिट्ठिमाहिट्ठिमा चेव, हिट्ठिमामज्झिमा

तहा। हिट्ठिमाउवरिमा चेव, मज्झिमाहिट्ठिमा तहा ॥ १५८५ ॥ मज्झिमामज्झिमा चेव, मज्झिमाउवरिमा तहा। उवरिमाहिट्ठिमा चेव, उवरिमामज्झिमा तहा ॥ १५८६ ॥ उवरिमाउवरिमा चेव, इइ गेविज्जगा सुरा विजया वेजयता य, जयता अपराजिया ॥ १५८७ ॥ सव्वट्ठसिद्धगा चेव, पचहाणुत्तरा सुरा । इइ वेमाणिया ???, णेगहा एवमायओ ॥ १५८८ ॥

सूत्राणि ११, असुरा इत्यसुरकुमारा एव नागादिष्वपि कुमारशब्दो योज्य, सर्वेऽपि ह्यमी कुमाराकारधारिण एव ॥ २०५ ॥ १५७८-७९ ॥ स्पष्टम् ॥ २०६ ॥ तारागणा -प्रकीर्णतारा, दिशासु विशेषेण-मेरुप्रादक्षिण्यनित्यचारितालक्षणेन चरन्ति इत्येवशीला दिशाविचारिण ज्योतींषि उक्तनीत्या विमानान्यालया येषा ते ज्योतिरालया ॥ २०७ ॥ १५८० ॥

कल्प्यन्ते-इन्द्रसामानिकत्रायस्त्रिंशादिदशप्रकारत्वेन विभज्यन्ते देवा एतेष्विति कल्पा -देवलोकास्तानुपगच्छन्ति-उत्पत्ति विषयतया प्राप्नुवन्तीति कल्पोपगा, कल्पानतीतास्तदुपरिवर्त्तिस्थानोत्पत्तितया अतिक्रान्ता कल्पातीता ॥ २०८ ॥ १५८१ ॥

सुधर्मा नाम शक्रस्य सभा अस्मिन्निति सौधर्म, स एषामवस्थितिविषयोऽस्तीति सौधर्मिण, तथा ईशानो नाम द्वितीयो देवलोकस्तन्निवासिनो देवा अपि ईशानका, एवमग्रेऽपि व्युत्पत्ति कार्या ॥ २०९-१० ॥ १५८२-८३ ॥

ग्रीनेव ग्रीवा-लोकपुरुषस्य त्रयोदशरज्जूपरिवर्त्ती प्रदेशस्तन्निविष्टतया अतिभ्राजिष्णुतया च तदाभरणभूता ग्रैवेया देवावासास्तन्निवासिनो देवा अपि ग्रैवेयका, न विद्यन्ते उत्तरा -प्रधाना स्थितिप्रभावसुखद्युतिलेश्यादिभिरेभ्योऽन्यदेवा इत्यनुत्तरा ॥ २११ ॥ १५८४ ॥

असुरादि-
देवाना
स्वरूपम्

हिट्ठिमत्ति–अधस्तनाः उपरितनषट्कापेक्षया प्रथमास्त्रयस्तेष्वप्यधस्तना अधस्तनाधस्तनाः–प्रथमत्रिकाधोवर्तिनः, अधस्तन-मध्यमाः–प्रथमत्रिकमध्यवर्त्तिनः, अधस्तनोपरितनाः–प्रथमत्रिकोपरिवर्त्तिनः, मध्ये भवा मध्यमाः–मध्यमत्रिकवर्त्तिनस्तेष्वपि अधस्तना मध्यमाधस्तनाः, एवं मध्यममध्यमाः, मध्यमोपरितनाः, उपरितना-उपरिवर्त्तित्रिकवर्त्तिनस्तेषु अधस्तना उपरितनाधस्तनाः, एवं उपरितनमध्यमाः, उपरितनोपरितनाः, इति–भेदसमाप्तौ, तत एतावद्भेदा एव ग्रैवेयकाः सुराः, अभ्युदयविघ्नहेतून् विजयन्त इति विजयाः, एवं वैजयन्ताः, जयन्ताः, परैः–अन्यैरभ्युदयविघ्नैरजिता अनभिभूता अपराजिताः ॥ २१२–१४ ॥ १५८५–८७ ॥

सर्वे अर्थाः सिद्धा इव सिद्धा येषां ते सर्वार्थसिद्धाः, ते हि विजितप्रायकर्माणः, उपस्थितभद्रा एव च तत्रोत्पत्तिभाजः, इतीत्यादि निगमनं, अत्र वैमानिकादिभेदाः, सामान्यविशेषयोः कथञ्चिदनन्यत्वात्, एवमादय इति आदिवचनस्य प्रकारवचन-त्वादेवंप्रकाराः ॥ २१५ ॥ १५८८ ॥

लोगस्स एगदेसंमि, ते सव्वे परिकित्तिया । इत्तो कालविभागं तु, तेसिं वुच्छं चउव्विहं ॥ १५८९ ॥ संतइं पप्पऽणाईया० ॥ १५९० ॥ साहीयं सागरं इक्कं, उक्कोसेण ठिई भवे । भोमिज्जाणं जहन्नेणं, दसवास-सहस्सिया ॥ १५९१ ॥ पलिओवममेगं तु, उक्कोसेणं वियाहियं । वंतराणं जहन्नेणं, दसवाससहस्सिया ॥ १५९२ ॥ पलिओवममेगं तु, वासलक्खेण साहियं । पलिओवमट्ठभागो, जोइसेसु जहन्निया ॥ १५९३ ॥ दो चेव सागराइं, उक्कोसेणं वियाहिया । सोहम्मंमि जहन्नेणं, एगं च पलिओवमं ॥ १५९४ ॥ सागरा साहिया दुन्नि, उक्कोसेण वियाहिया । ईसाणंमि जहन्नेणं, साहियं पलिओवमं ॥ १५९५ ॥ सागराणि य सत्तेव, उक्कोसेण ठिई भवे ।

देवाना क्षेत्र कालादि

सणकुमारे जहन्नेण, दुन्नि ऊ सागरोवमा ॥ १५९६ ॥ सागरा साहिया सत्त, उक्कोसेण वियाहिया। माहिंदमि जहन्नेण, साहिया दुन्नि सागरा ॥ १५९७ ॥ दस चेव सागराइ, उक्कोसेण वियाहिया। बभलोए जहन्नेण, सत्त उ सागरोवमा ॥ १५९८ ॥ चउद्दस उ सागराइ, उक्कोसेण वियाहिया। लतगमि जहन्नेण, दस उ सागरोवमा ॥ १५९९ ॥ सत्तरस सागराइ, उक्कोसेण वियाहिया। महासुक्के जहन्नेण, चउद्दस सागरोवमा ॥ १६०० ॥ अट्ठारससागराइ, उक्कोसेण वियाहिया। सहस्सारे जहन्नेण, सत्तरससागरोवमा ॥ १६०१ ॥ सागरा अउणवीस तु, उक्कोसेण ठिई भवे। आणयमि जहन्नेण, अट्ठारससागरोवमा ॥ १६०२ ॥ वीस तु सागराइ तु, उक्कोसेण ठिई भवे। पाणयमि जहन्नेण, सागरा अउणवीसई ॥ १६०३ ॥ सागरा इक्कवीस तु, उक्कोसेण ठिई भवे। आरणमि जहन्नेण, वीसइ सागरोवमा ॥ १६०४ ॥ बावीस सागराइ, उक्कोसेण ठिई भवे। अच्चुयमि जहन्नेण, सागरा इक्कवीसई ॥ १६०५ ॥ तेवीस सागराइ, उक्कोसेण ठिई भवे। पढममि जहन्नेण, बावीस सागरोवमा ॥ १६०६ ॥ चउवीस सागराइ, उक्कोसेण ठिई भवे। विइयमि जहन्नेण, तेवीस सागरोवमा ॥ १६०७ ॥ पणवीस सागरा ऊ, उक्कोसेण ठिई भवे। तइयमि जहन्नेण, चउवीस सागरोवमा ॥ १६०८ ॥ छव्वीस सागराइ, उक्कोसेण ठिई भवे। चउत्थयमि जहन्नेण, सागरा पणवीसई ॥ १६०९ ॥ सागरा सत्तवीस तु, उक्कोसेण ठिई भवे। पचममि जहन्नेण, सागरा उ छवीसई ॥ १६१० ॥ सागरा अट्ठवीस तु, उक्कोसेण ठिई भवे। छट्ठमि जहन्नेण, सागरा सत्तवीसई ॥ १६११ ॥ सागरा अउणतीस तु, उक्कोसेण ठिई भवे। सत्तम जहन्नेण, सागरा अट्ठवीसई ॥ १६१२ ॥

देवानां क्षेत्र-कालादि

तीसं तु सागराइं, उक्कोसेण ठिई भवे। अट्ठमंमि जहन्नेणं, सागरा अउणतीसई ॥ १६१३ ॥ सागरा इक्कतीसं तु, उक्कोसेण ठिई भवे। नवमंमि जहन्नेणं, तीसई सागरोवमा ॥ १६१४ ॥ तित्तीससागरा ऊ, उक्कोसेण ठिई भवे। चउसुंपि विजयाईसुं, जहन्ना इक्कतीसई ॥ १६१५ ॥ अजहन्नमणुक्कोसं, तित्तीसं सागरोवमा। महाविमाणसव्वट्ठे, ठिई एसा वियाहिया ॥ १६१६ ॥ जा चेव उ आउठिई, देवाणं तु वियाहिया। सा तेसिं कायठिई, जहन्नमुक्कोसिया भवे ॥ १६१७ ॥

क्षेत्रकालाभिधायि सूत्रद्वयं प्राग्वत् ॥ २१६–१७ ॥ १५८९–९० ॥

सादिसपर्यवसितत्वभावनार्थं साहियमित्यादिसूत्राणि २१, प्रायः स्पष्टान्येव नवरं, साहिअंति प्राकृतत्वात् साधिकं सागरमिति सागरोपममेकं, उत्कृष्टेन स्थितिर्भवेत् भौमेयकानां–भवनवासिनां, इयं च सामान्योक्तावपि उत्तरनिकायाधिपस्य वलेरेवावगन्तव्या, दक्षिणनिकाये तु इन्द्रस्यापि सागरोपममेव, उक्तं हि–"चमरवलि सारमहिअं"ति, जघन्येन दशवर्षसहस्राणि प्रमाणमस्या इति दशवर्षसहस्रिका, इयमपि सामान्योक्तावपि किल्बिषाणामेव स्थितिरित्युत्तरत्रापि भावनीयम् ॥ २१८ ॥ १५९१ ॥

तथा—

पल्योपमं वर्षलक्षाधिकमिति ज्योतिषामुत्कृष्टस्थित्यभिधानं चन्द्रापेक्षमेव, शेषाणां पल्योपमचतुर्भागस्यैव अन्यथा, सूर्यस्य तु वर्षसहस्राधिकं पल्योपममायुः, ग्रहाणां तदेवानतिरिक्तं, नक्षत्राणां तदेवार्द्धं, तारकाणां तच्चतुर्भागः, तथा पल्योपमाष्टभागो ज्योतिष्षु जघन्या स्थितिरित्यपि तारकापेक्षमेव, शेषाणां पल्योपमचतुर्भागस्यैव जघन्यस्थितिकत्वात्, इह च सर्वत्र उक्तरूपयो-

एतदुत्कृष्टजघन्यस्थित्योरपान्तरालवर्त्तिनी मध्यमा स्थितिरिति द्रष्टव्य, तथा प्रथमे इति प्रक्रमात् ग्रैवेयके अधस्तनाधस्तने एक,
द्वितीयादिषु अपि, ग्रैवेयके इति सम्बन्धनीयम् ॥ २१९–२३ ॥ १५९२–९६ ॥

अविद्यमान जघन्यस्थितित्वात् जघन्यत्वमस्यामिति अजघन्या सा चासौ अविद्यमानमुत्कृष्टमित्युत्कृष्टत्वमित्यनुत्कृष्टा च
अजघन्योत्कृष्टा, मोऽन्लाक्षणिक, महच्च तदायु स्थित्याद्यपेक्षया विमान च, तच्च तत्सर्वे–सम्पूर्णा अर्थ्यमानत्वादर्था–अनुत्तर-
सुखादयो यस्मिंस्तत्सर्वार्थं च तन्महाविमानसर्वार्थं तस्मिन् स्थिति प्रक्रमाद्देवानाम् ॥ २२४–४३ ॥ १५९७–१६१६ ॥ तथा—

आयु स्थितेरेव कायस्थितित्वाभिधानेन न तत्रानन्तरमुत्पत्तिरेवेत्यभिप्राय इति सप्तविंशति सूत्रार्थ ॥ २४४ ॥ १६१७ ॥

अणतकालमुक्कोस, अतो० देवाण हुज्ज अतर ॥ १६१८ ॥ ऍयसि अन्नओ चेव० ॥ १६१९ ॥

अन्तरविधानाभिधायि सूत्रद्वय प्राग्वत् ॥ २४५–४६ ॥ १६१८–१९ ॥

इत्थ जीवानजीवाश्च सविस्तरमुपदर्श्य निगमयितुमाह—

ससारत्था य सिद्धा य, इइ जीवा वियाहिया । रूविणो चेवऽरूवी य, अजीवा दुविहावि य ॥ १६२० ॥

ससारस्थाश्च इत्येवप्रकारा जीवा व्याख्याता–विशेषेण सर्वभेदाभिव्याप्त्या कथिता, रूपिणश्चैवारूपिणश्चाजीवा द्विविधा
अपि च व्याख्याता इति योग ॥ २४७ ॥ १६२० ॥

सम्प्रति जीवाजीवविभक्तिमभिधाय शृणुतैकमनस इति वचनात् कश्चित् श्रवणश्रद्धानमात्रेणैव कृतार्थता मन्येत,
अतस्तदा शङ्कापनोदार्थमाह—

जीवाजीवाध्ययन-निगमनम्

इइ जीवमजीवे य, सुच्चा सद्दहिऊण य। सव्वनयाण अणुमए, रमिज्जा संजमे मुणी ॥ १६२१ ॥

इत्येवं प्रकारान् जीवाजीवान् श्रुत्वा–अवधार्य श्रद्धाय च तथेति प्रतिपद्यसर्वनयानां–ज्ञानक्रियानयान्तर्गतनैगमादीनां, अनुमते–अभिप्रेते, कोऽर्थो ? ज्ञानसहितसम्यक्चारित्ररूपे रमेत–रतिं कुर्यात्, संयमे मुनिः ॥ २४८ ॥ १६२१ ॥

संयमरतिकरणानन्तरं यद्विधेयं तदाह—

तओ बहूणि वासाणि, सामन्नमणुपालिया। इमेण कमजोगेणं, अप्पाणं संलिहे मुणी ॥ १६२२ ॥

ततस्तदनन्तरं बहूनि–अनेकानि वर्षाणि–श्रामण्यं–श्रमणभावं, अनुपाल्य–अनुसेव्य, अनेनानन्तरवक्ष्यमाणेन क्रमेण परिपाट्या योगः–तपोऽनुष्ठानरूपो व्यापारः क्रमयोगस्तेनात्मानं संलिखेत्–द्रव्यतो भावतश्च कृशीकुर्याद् मुनिः, इह च बहूनि वर्षाणि श्रामण्यमनुपाल्येत्यभिदधता न प्रव्रज्या प्रतिपत्त्यनन्तरमेवैतद्विधिरिति दर्शितं, यदुक्तं–"परिपालिओ अ दीहो परिआओ वायणा तहा दिन्ना। निप्फाइआ य सीसा सेअं मे अप्पणो काउं ॥ १ ॥ २४९ ॥ १६२२ ॥

सम्प्रति यदुक्तं–'अनेन क्रमयोगेन संलिखे'दिति कोऽसौ क्रमयोगो ? येन संलिखेदिति, कोऽसौ क्रमयोग इति प्रश्ने संलेखना भेदाभिधानपूर्वकं क्रमयोगमेवाह—

बारसेव उ वासाइं, संलेहुक्कोसिया( सतो पा० ) भवे। संवच्छरं मज्झिमिया( मउत्ति पा० ), छम्मासा य जहन्निया( ण्णतो पा० ) ॥ १६२३ ॥ पढमे वासचउक्कंमि, विगई ( वित्ति ) निज्जूहणं करे। बिइए वासचउक्कंमि,



श्रुत्वा श्रामण्य-मनुपाल्य संलेखनं कुर्यात्

विचित्त तु तव चरे ॥ १६२४ ॥ एगतरमायाम, कट्टू सवच्छरे दुवे । तओ सवच्छरद्ध तु नाइविगिट्ठ तव चरे ॥ १६२५ ॥ तओ सवच्छरद्ध तु, विगिट्ठ तु तव चरे । परिमिय चेव आयाम, तमि सवच्छरे करे ॥ ( परिमिय चेव आयाम, गुणुक्कस्स मुणीचरे । तत्तो सवच्छरद्धऽण्ण, विगिट्ठ तु तव चरे ॥ पा० ) ॥ १६२६ ॥ कोडीसहियमायाम, कट्टू सवच्छरे मुणी । मासद्धमासिएण तु, आहारेण ( खवणेण पा० ) तव चरे ॥ १६२७ ॥

सूत्रपञ्चक, द्वादशैव तु, न तु न्यूनाधिकानि, तु पूरणे, वर्षाणि, सलेखन सलेखा द्रव्यत शरीरस्य, भावत कषायाणा कृशतापादनमित्यर्थ , उत्कृष्टा–सर्वगुर्वी भवेत्, सवत्सर–वर्ष मध्यमैव मध्यमिका, षण्मासा, च पुनरर्थो भिन्नक्रमस्ततो जघन्यका पुनः ॥ २५० ॥ १६२३ ॥

सलेखनाया क्रम

इत्थ सलेखनायास्त्रैविध्ये उत्कृष्टाया क्रमयोगमाह—

प्रथमे वर्षे चतुर्थे अविकृत्या निर्व्यूहण आचाम्लस्य निर्विकृतिकस्य वा तपस करणेन परित्यागो विकृतिनिर्व्यूहण तत्कुर्यात्, इद च विचित्रतपस पारणके, यदाह निशीथचूर्णिकृत्–"अह(न्ने) चत्तारि वरिसे विचित्त तव काउ आयबिलेण पारेइ, निव्विएण वा पारेइ"त्ति, केवलमनेन निर्युक्तिकृता च द्वितीये वर्षचतुष्टये इदमुक्त, अत्र च सूत्रे प्रथमे इश्यते इत्युभयथापि करणे दोषाभावमनुमिमीमहे, तयोरस्य च प्रमाणभूतत्वात्, द्वितीये वर्षचतुष्के विचित्रमेव चतुर्थषष्ठाष्टमादिरूप तपश्चरेत्, अत्र च पारणके सम्प्रदाय "उग्गमविसुद्ध सव्व कप्पणिज्ज पारेइ" ॥ २५१ ॥ १६२४ ॥

एकेन चतुर्थलक्षणेन तपसा अन्तरं—व्यवधानं यस्मिन् तदेकान्तरं आयामं—आचाम्लं कृत्वा संवत्सरौ द्वौ ततस्तदनन्तरं संवत्सरार्द्धं—मासषट्कं तुः—पूरणे न—नैवातिविकृष्टं—अष्टमद्वादशादि तपश्चरेत्—आसेवेत् ॥ २५२ ॥ १६२५ ॥

ततः संवत्सरार्द्धं तुः पुनस्तोरेवार्थत्वात् विकृष्टमेव तपश्चरेत्, अत्रैव विशेषमाह—परिमिअं चेवत्ति, चः पूरणे, ततः परिमितमेव—स्वल्पमेव, द्वादशे हि वर्षे कोटीसहितमायाममिह तु चतुर्थादिपारणके एवेत्येवमुक्तं, आयामं—आचाम्लं तस्मिन्ननन्तरं द्विधा विभाज्योपदर्शिते संवत्सरे कुर्यात् ॥ २५३ ॥ १६२६ ॥

इत्थमेकादशसु वर्षेष्वतिक्रान्तेषु द्वादशे वर्षे किमसौ कुर्यादित्याह—

कोट्यौ—अग्रे प्रत्याख्याताद्यन्तकोणरूपे सहिते—मिलिते यस्मिन् तत्कोटीसहितमुच्यते, कोऽर्थो ? विवक्षितदिने प्रातराचाम्लं प्रत्याख्याय तच्चाहोरात्रं प्रतिपाल्य पुनर्द्वितीये अह्नि आचाम्लमेव प्रत्याचष्टे, ततो द्वितीयस्यारंभकोटी आद्यस्य पर्यन्तकोटीः उभे अपि मिलिते इति कोटीसहितमुच्यते, अन्ये त्वाहुः—एकस्मिन् दिने आचाम्लं कृत्वा द्वितीयदिने च तपोऽन्तरमनुष्ठाय तृतीयदिने आचाम्लमेव कुर्वतः कोटीसहितमुच्यते, उभयार्थसंवादिनी चेयं गाथा—"पट्ठवणओ य दिवसो पच्चक्खाणस्स निट्ठवणओ य । जहिअं समिंति दोन्नि उ तं भण्णइ कोडिसहिअं तु ॥ १॥" इत्थमुक्तरूपं कोटीसहितमाचाम्लं कृत्वा संवत्सरे वर्षे प्रक्रमात् द्वादशे मुनिः—साधुः, मासंति सूत्रत्वात्मासं भूतो मासिकस्तेनैव, मार्द्धमासिकेनैव आहारेणन्ति उपलक्षणादाहारत्यागेन तप इति प्रस्तावात् भक्तपरिज्ञादिकं अनशनं चरेत्—अनुतिष्ठेत्, निशीथचूर्णिसम्प्रदायश्चात्र—जहा य दीवस्स वत्ती तेलं च समं णिट्ठाइ तहा बारसमे वरिसे आहारं परिहावेइ जहा आहारसंलेहणा आउअं च समं निट्ठवइ, इत्थं बारसगस्स वासस्स पच्छिले

चत्तारि मासा तेसु तेल्लगडूसे निसट्ठे धरेउ खेल्लमल्लए निट्ठुहइ, मा अइरुक्खत्तणाओ मुहजतविसवाओ भविस्सइ, तस्स य विसवाए णो सम्म नमुक्कार साहेइ," इतिसूत्रपञ्चकार्थः ॥ २५४ ॥ १६२७ ॥

इत्थ प्रतिपन्नानशनस्यापि अशुभभावनाना च मिथ्यादर्शनानुरागादीना परिहार्यता तद्विपर्ययाणामासेव्यता च ज्ञापयितु यथाक्रममनर्थहेतुता अर्थहेतुता च दर्शयन्नाह—

कदप्पमाभिओग किब्बिसिय मोहमासुरत्त च । एयाओ दुग्गईओ मरणमि विराहिया हुति ॥ १६२८ ॥

मिच्छादसणरत्ता, सनियाणा हु हिंसगा । इय जे मरति जीवा, तेसिं पुण दुल्लहा बोही ॥ १६२९ ॥

सम्मदसणरत्ता अनियाणा सुक्कलेसमोगाढा । इय जे मरति जीवा सुलभा तेसिं भवे बोही ॥ १६३० ॥

मिच्छादसणरत्ता सनियाणा कण्हलेसमोगाढा । इय जे मरति जीवा तेसिं पुण दुल्लहा बोही ॥ १६३१ ॥

सूत्र ४, कदप्पत्ति पदेऽपि पदैकदेशस्य दर्शनात् कन्दर्पभावना, एव आभियोग्यभावना, किल्बिषभावना, मोहभावना, आसुरत्वभावना च, एता कन्दर्पादिभावना दुर्गतिहेतुतया दुर्गतयो, "नड्वलोदक पादरोग" इति न्यायत , दुर्गतिश्चेहार्थात् देवदुर्गति , तद्वशतो हि सव्यवहारतश्चारित्रसत्तायामप्येतद्विधनिकायोत्पत्तिरेव, चरणविकलताया नानागतिभाजनतैव, उक्त हि— "जो सजओवि एआसु अप्पसत्थासु भावण कुणइ । सो तव्विहेसु गच्छइ सुरेसु णिओ चरणहीणो ॥ १ ॥" कदेत्याह–मरणे–मरणसमये, कीदृशा सत्य इत्याह–विराधिका सम्यग्दर्शनादीनामिति गम्य भवन्ति–जायन्ते, इह च मरण इत्यभिधान पूर्वमेतत्सत्तायामप्युत्तरकाल शुभभावे सुगतेरपि सम्भवात् ॥ २५५ ॥ १६२८ ॥

कन्दर्पावि-
भावनासु
मरणाद्बोधे-
दुर्लभत्वम्

मिथ्यादर्शनं-अतत्त्वे तत्त्वाभिनिवेशरूपं तस्मिन् रताः-आसक्ता मिथ्या०, सम्यक्त्वादिविराधनायां ह्येतदासक्तिरेव स्यात्, सह निदानेन-साभिष्वङ्गप्रार्थनारूपेण वर्त्तन्ते इति सनिदानाः हु:-पूरणे, हिंसकाः-प्राण्युपमर्दकारिणः, इत्येवंरूपाः ये म्रियन्ते जीवास्तेषां पुनर्दुर्लभा बोधिः-प्रेत्य जिनधर्मावाप्तिः ॥ २५६ ॥ १६२९ ॥

सम्यग्दर्शनरक्ता अनिदानाः शुक्ललेश्यां अवगाढाः-प्रविष्टाः, शेषं स्पष्टम् ॥ २५७ ॥ १६३० ॥

मिच्छासूत्रं प्राग्वत्, ननु पुनरुक्तत्वात् अनर्थकमिदं सूत्रं, कृष्णलेश्यावगाहनमपि हिंसकत्वेन पञ्चाश्रवप्रमत्तत्वादितल्लक्षणाभिधानादर्थत उक्तमेव इत्यत्रोच्यते, नैवं, विशेषज्ञापनार्थत्वादस्य, विशेषश्च सर्वत्र तथाविधसंक्लिष्टपरिणामरूपता द्रष्टव्या, अन्यथा हि सामान्येनैतद् विशेषणविशिष्टानामपि तद्भवे भवान्तरे वा बोधिदर्शनात् व्यभिचार्येवेदं स्याद्, इह चाद्येन सूत्रेण कन्दर्पभावनादीनां दुर्गतिरूपानर्थस्य निबन्धनत्वमुक्तमर्थाच्च तद्विपरीतभावनानां सुगतिस्वरूपार्थस्य द्वितीयेन मिथ्यादर्शनरक्तत्वादीनां दुर्लभबोधिलक्षणानर्थस्य तृतीयेन सुलभबोध्यात्मकार्थस्य चतुर्थेनोक्तनीत्या मिथ्यादर्शनरक्तत्वादीनामेव विशेषज्ञापनम् ॥ २५८ ॥ १६३१ ॥

अन्यच्च-जिनवरवचनाराधनामूलमेव सर्वं संलेखनादि श्रेयोऽतस्तत्रैवादरख्यापनायान्वयव्यतिरेकाभ्यां तन्माहात्म्यमाह—

जिणवयणे अणुरत्ता जिणवयणं जे करेंति भावेणं। अमला असंकिलिट्ठा ते हुंति परित्तसंसारी ॥ १६३२ ॥

बालमरणाणि बहुसो अकाममरणाणि चेव बहुयाणि। मरिहंति ते वराया जिणवयणं जे न याणंति ॥ १६३३ ॥

गाथा २, जिनवचने-आगमे अनुरक्ताः-सततं प्रतिबद्धाः जिनवचनमिति वाच्यवाचकयोरभेदोपचाराज्जिनवचनाभिहित-

मनुष्ठान ये कुर्वन्ति भावेन–आन्तरपरिणामेन, न तु वहिर्वृत्त्यैव, अत एवामला –श्रद्धानादिमालिन्यहेतुमिथ्यात्वादिमलरहिता , असङ्क्लिष्टा-रागादिसङ्क्लेशरहिता ते भवन्ति, परीत्त समस्तदेवादिभवाल्पतापादनात् समन्तात् खण्डित स चासौ ससारश्च स विद्यते येषा ते परीत्तससारिण –कतिपयभवाभ्यन्तरमुक्तिभाज इत्यर्थ ॥ २५९ ॥ १६३२ ॥

सुव्व्यत्ययात् वालमरणै –विषभक्षणोद्बन्धननिबन्धनै वहुश –अनेकधा अकाममरणानि अत्यन्तविषयगृध्नुत्वेनानिच्छतो भवन्ति तैश्च, वहुभि एव –पूरणे मरिष्यन्ति ते वराका वहुदु खभाजनतया अनुकम्प्या जिनवचन ये न जानन्ति–नावबुध्यन्ते ज्ञानस्य फलत्वादनुष्ठानस्य न चानुतिष्ठन्ति ॥ २६० ॥ १६३३ ॥

यतश्चैव ततो जिनवचन भावत कर्तव्य, तद्भावकरण चालोचनया, सा च तच्छ्रवणार्हान् विना न हेतुव्यतिरेकेणेति यैर्हेतुभिरमी स्युस्तानाह—

वहु आगमविन्नाणा समाहिउप्पायगा य गुणगाही । एएण कारणेण अरिहा आलोयण सोउ ॥१६३४ ॥

वहु सूत्रतोऽर्थतश्च स चासावागमश्च–श्रुत वह्वागमस्तस्मिन् विशिष्ट ज्ञान अवगमो येषा ते, समाध्युत्पादका , कोऽर्थो ? देशकालादिविज्ञतया समाधिमेव मधुरगम्भीरभणित्यादिभिरालोचनादातृणा उत्पादयतीति, चस्य भिन्नक्रमत्वात् गुणग्राहिणश्च, उपवृंहणार्थं परेषा सम्यग्दर्शनादिसद्भूतगुणग्रहणशीला , एतैर्वह्वागमविज्ञानत्वादिभि कारणैर्हेतुभिरर्हा–योग्या भवन्त्याचार्यादय इति गम्य, आलोचनामर्थात्परैर्दीयमाना श्रोतु, तदेव हि आलोचनाफल यत् परेषां विशुद्धिलक्षण सम्पादयितुमीशते ॥ २६१ ॥ १६३४ ॥

जिनवचन रताना परित्तससारित्व तैरालोचना कर्तव्या

इत्थमनशनस्थितेन यत्कृत्यं तत्सप्रसङ्गमुपदर्श्य संप्रति कन्दर्पादिभावनानां यत्परिहार्यत्वमुक्तं तत्र यत्कुर्वता ताः कृता भवन्ति तत्परिहारेणैव तासां परिहारो न चाज्ञानस्यायमिति ज्ञापनार्थमाह—

कंदप्पकोकुईया तह सीलसहावहासविगहाहिं। विम्हावितो य परं कंदप्पं भावणं करइ ॥ १६३५ ॥
मंताजोगं काउं भूईकम्मं च जे पउंजंति । सायरसइड्डिहेउं अभिओगं भावणं कुणइ ॥ १६३६ ॥
नाणस्स केवलीणं धम्मायरियस्स संघसाहूणं। माई अवन्नवाई किब्बिसियं भावणं कुणइ ॥ १६३७ ॥
अणुबद्धरोसपसरो तह य निमित्तंमि होइ पडिसेवी । एएहिं कारणेहिं आसुरियं भावणं कुणइ ॥ १६३८ ॥
सत्थग्गहणं विसभक्खणं च जलणं च जलपवेसो य। अनयारभंडसेवी जम्मणमरणाणि बंधंति॥ १६३९ ॥

कन्दर्पः—अट्टट्टहासहसनं अनिभृतालापाश्च गुर्वादिनापि सह निष्ठुरवक्रोक्त्यादिरूपः कामकथोपदेशप्रशंसाश्च, यदुक्तं—"कहकहकहस्स हसणं कंदप्पो अणिहुआ य संलावा । कंदप्पकहाकहणं कंदप्पुवएससंसा य ॥ १ ॥" कौकुच्यं द्विधा—कायेन वाचा, तत्र कायकौकुच्यं यत्स्वयमहसन्नेव भ्रूनयनवदनादि तथा करोति यथा अन्यो हसति, यदुक्तं—भूनयणदसणच्छएहिं करचरणकण्णमाईहिं । तं तं करेइ चिट्ठं जह जह हसइ परो अत्तणा अहसं ॥ १ ॥" यत्तु तज्जल्पति येनान्यो हसति तथा नानाविधजीवविरुतानि मुखातोद्यवादितां च विधत्ते तद्वाक्कौकुच्यं, उक्तं हि—"वायाए कुकुईओ तं जंपई जेण हस्सए अन्नो । नाणाविहजीवरुए कुणइ मुहतूरए चेव ॥ १ ॥" ततः कन्दर्पश्च कौकुच्यं च कन्दर्पकौकुच्ये, कुर्वन्तीति शेषः, तहत्ति येन प्रकारेण परस्य विस्मय उपजायते, तथा तच्छीलं च—फलनिरपेक्षा वृत्तिः स्वभावश्च—परविस्मयोत्पादनाभिसंधिनैव तत्त-

नामी परस्परमपि सहन्ते, तत एव देशान्तरयायिनः, अन्यथा त्वेकत्रैव संहत्या तिष्ठेयुः, अत्वरितगतयस्ततो वकवृत्तिरियमेषामित्यादि, एवंविधमेवं वदितुं–अभिधातुं शीलमस्येत्यवर्णवादी, माया अस्य स्वस्वभावविनिगूहनादिना अस्तीति मायी, यदुक्तं "गूहइ आयसहावं घायइ अ गुणे परस्स संतेवि। चोरुव्व सव्वसंकी गूढायारो वितहभासि ॥ १ ॥" किल्बिषिकीभावनां करोति ॥ २६४ ॥ १६३७ ॥

सम्प्रति विचित्रत्वात्सूत्रकृतेर्मोहीप्रस्तावेऽपि यत्कुर्वताऽऽसुरी कृता स्यात्तदाह—

अनुवद्धः–अव्यवच्छिन्नो रोषस्य–क्रोधस्य प्रसरः–विस्तारो यस्य सः अनुवद्धरोषप्रसरः, सदा विरोधशीलतया पश्चादननुतापितया क्षमणादावपि प्रसत्त्यप्राप्त्या वेत्यभिप्रायः, तथा चोक्तं–"निच्चं वुग्गहसीलो काऊण न याणुतप्पए पच्छा। न य खामिओ पसीयइ अवराहीणं दुवेण्हंपि ॥ १ ॥" तथा समुच्चये, चः पूरणे, निमित्ते ज्ञेयपरिच्छित्तिकरणे अतीतादौ भवति–जायते प्रतिसेवी, अवश्यंप्रतिसेवकः, अपुष्टालम्बनेऽपि तदासेवनात्, एताभ्यामनन्तरोक्ताभ्यां कारणाभ्यां आसुरीं भावनां करोति ॥ २६५ ॥ १६३८ ॥

शस्त्रं–खड्गक्षुरिकादि तस्य ग्रहणं–स्वीकारणमुपचारादस्यात्मनि वधार्थं व्यापारणं, शस्त्रादिग्रहणं, विषस्य–तालपुटादेर्भक्षणं विषभक्षणं, चः समुच्चये, ज्वलनं–दीपनं आत्मन इति गम्यं, जले प्रवेशो–निमज्जनं जलप्रवेशः, चः अनुक्तभृगुपातादिपरिग्रहार्थः, आचारः–शास्त्रविहितो व्यवहारस्तेन भाण्डं उपकरणं आचारभाण्डं न तथा अनाचारभाण्डं तस्य सेवा–हास्यमोहादिभिः परिभोगोऽनाचारभाण्डसेवा-गम्यमानत्वात् एतानि कुर्वन्तो यतयो जन्ममरणानि, उपचारात्तन्निमित्तकर्माणि बध्नन्ति,

सङ्क्लेशजनकत्वेन शस्त्रग्रहणादीनामनन्तभवहेतुत्वात्, अनेन चोन्मार्गप्रतिपत्त्या मार्गविप्रतिपत्तिराक्षिप्ता, तथा चार्थतो मोही भावनोक्ता, यतस्तल्लक्षण "उम्मग्गदेसओ मग्गणासओ मग्गविप्पडिवत्ती। मोहेण य मोहित्ता समोह भावण कुणइ ॥ १ ॥" ननु पूर्वं तद्विधदेवगामित्व भावनाफलमुक्त, इह तु अन्यदेवास्या इति कथ न विरोध ?, उच्यते,-अनन्तरफलमाश्रित्य तदुक्त, इदमेव तु परम्पराफल सर्वभावनाना इति ज्ञापनार्थं इत्थमुपन्यास, तथा चोक्त-"एआओ भावणाओ भावित्ता देवदुग्गइ जति रिंति। तत्तो अ चुआ सता परिंति भवसागरमणत ॥ १ ॥" २६६ ॥ १६३९ ॥

सम्प्रत्युपसहारद्वारेण शास्त्रमाहात्म्यमाह—

इति पाउकरे बुद्धे, नायए परिनिव्वुए। छत्तीस उत्तरज्झाए, भवसिद्धीयसमए (बुद्धे पा०) ॥ १६४० ॥ त्तिबेमि ॥

(प्र० जोगविहीइ विहिता एए जो लहइ सुत्तमत्थ वा। भासेइ य भवियजणो सो पावइ निज्जरा विउला ॥ १ ॥ जस्साद्दत्ता एए कहवि समप्पति विग्घरहियस्स। सो लक्खिज्जइ भव्वो पुव्वरिसी एव भासति ॥ २ ॥)

॥ जीवाजीवविभत्ती ॥ ३६ ॥

॥ उत्तरज्झयणसुयक्खधो समत्तो ॥

कन्दर्पादि-भावना-स्वरूपम्

इत्येतान् सूत्रत्वात् प्रादुष्कृत्य कांश्चिदर्थतः कांश्चन सूत्रतोऽपि प्रकाश्य प्रज्ञाप्येत्यर्थः, किमित्याह–परिनिर्वृतो–निर्वाणं गत इति सम्बन्धः, कीदृग् सन् क इत्याह–बुद्धः–केवली ज्ञातको–ज्ञातकुलसमुद्भवः, स चेह वर्द्धमानस्वामी, षट्त्रिंशदिति षट्त्रिंशत्संख्यान्, उत्तराश्च- ते–प्रधाना अधीयन्त इत्याध्याया–अध्ययनानि उत्तराध्यायास्तान् विनयश्रुतादीन्, भवसिद्धिका–भव्यास्तेषां समिति भृशं मता–अभिप्रेता भवसिद्धिकसम्मतास्तान्, इतिः-परिसमाप्तौ एवमर्थे वा, ब्रवीमि गणधराद्युपदेशेन ॥ २६७ ॥ १६४० ॥ इति जीवाजीवविभक्त्यध्ययनावचूरिः ॥ ३६ ॥

॥ इति श्रीउत्तराध्ययने षट्त्रिंशत्तमस्य जीवाजीवविभक्त्यध्ययनस्य अवचूरिः समाप्ता ॥ ३६ ॥

॥ इति श्रीउत्तराध्ययनावचूरिः समाप्ता ॥

सम्प्रति निर्युक्तिकारोऽप्येतन्माहात्म्यख्यापनायाह—

जे किर भवसिद्धिया परित्तससारिआ य भविआ य। ते किर पढति धीरा, छत्तीस उत्तरज्झयणे ॥ नि० ५६० ॥

य इत्यनिर्दिष्टनिर्देशे, किलेति सम्भावने, भवसिद्धिका–भव्या, परीत्त–परिमित ससारो येपा ते परीत्तससारिका–प्रत्यासन्नीभूतमुक्तय इत्यर्थ, भव्या–सम्यग्ज्ञानदर्शनादिगुणयोग्या भिन्नग्रन्थय इत्यर्थ, उभयत्र च समुच्चये, व्यवच्छेदफलत्वात् वाक्यस्य त एव, किलेति परोक्षाप्तवादसूचक, पठन्ति धीरा षट्त्रिंशद् उत्तराध्ययनानि, भवसिद्धिकादीनामेवैतत्पाठफलस्य सम्यग्ज्ञानादे समुद्भावेन निश्चयतस्तत्पाठसम्भव, अन्येपा व्यवहारत–एवेत्यभिधानम् ॥ १ ॥ ५६० ॥

उक्तमेवार्थं व्यतिरेकेणाह—

जे हुति अभवसिद्धीया गथिअसत्ता अणतससारा। ते सकिलिट्ठकम्मा अभविय उत्तरज्झाए ॥ नि० ५६१ ॥

ये भवन्ति वचनव्यत्ययादभवसिद्धय–अभव्या ग्रन्थिकसत्त्वा–अभिन्नग्रन्थय इत्यर्थ, अनन्तससारा–ये न कदाचित् मुक्तिमवाप्स्यन्ति अभव्या, "भव्वावि ते अणते" त्यादिवचनात्,' भव्या वा सङ्क्लिष्टानि अशुभानि कर्माण्येपा इति सङ्क्लिष्टकर्माण किमित्याह–सूत्रत्वात् अभव्या–अयोग्या, वचनव्यत्ययात् उत्तराध्यायेषु–उत्तराध्यायविपये, अध्ययने इति गम्यम् ॥ २ ॥ ५६१ ॥

यतश्चैवमतिमाहात्म्यवन्त उत्तराध्यायास्ततो यद्विधेय तदाह—

तम्हा जिणपन्नत्ते अणतगमपज्जवेहि सजुत्ते। अज्झाए जहाजोग गुरुपसाया अहिज्जिज्जा ॥ नि० ५६२ ॥

पठनापठने भव्याभव्यत्वम्

तस्माज्जिनैः—श्रुतजिनादिभिः प्रज्ञप्तास्तान्, अनन्ताश्च ते गमाश्च—अर्थपरिच्छित्तिप्रकाराः पर्यवाश्च—शब्दपर्यवार्थपर्यवरूपा अनन्तगमपर्यवास्तैः संयुक्तान्, अध्यायान् प्रक्रमादुत्तराध्यायान्, योगः—उपधानादिः उचितव्यापारस्तदनतिक्रमेण यथायोगं, गुरुप्रसादाद्—गुरुचित्तप्रसन्नतारूपाद्धेतोः, अधीयेत्—पठेत्, न तु प्रमादं कुर्यात्, गुरुप्रसादादिति अध्ययनार्थिना गुरवः स्तोष्या एव, तदधीनत्वात्तस्येति ॥ ५६२ ॥

निर्युक्तिगाथाः ।

गुरुं प्रसन्नीकृत्य पठेत

॥ इति श्रीउत्तराध्ययनमाहात्म्ये निर्युक्तिगाथाः ॥

॥ इति पूर्वाचार्यप्रणीता

## श्रीउत्तराध्ययनावचूरिः समाप्ता ॥

# श्रीउत्तराध्ययनावचूर्णौ

## प्रथम परिशिष्टम् ।

### गाथाना सूत्राणा चाकारादिक्रमः

भिनानामि, अथेत्युत्कर्षानन्तर अपथ्यानि-आयतिकटुकानि कर्माण्यज्ञानफलानि उदेष्यन्ति ॥ ४१ ॥ ८९ ॥ एवमाश्वासय—प्रज्ञानलेपानलिप्तमात्मान स्वस्थीकुरु, प्रज्ञाया ज्ञानरूपत्वात्तद्विपक्षभूतमज्ञानपरीषहमाह—अयमप्यज्ञानभावाभावाभ्या द्विधा, तत्र भावपक्षमाश्रित्योच्यते—निर० ॥ ९० ॥ निरथक सति विरत, मैथुनात्, आश्रवान्तरनिरतानपि अस्योपादान दुस्त्यजत्वेन, सुसवृत इन्द्रियादिसवरणेन, साक्षादिति परिस्फुट नाभिनानामि धर्म-वस्तुस्वभाव कल्याण-शुभम्, अयमाशय —यदि विरतौ कश्चिदर्थ सिद्ध्येनैव ममानाम भवेत् ॥ ४२ ॥ ९० ॥ कदाचित्सामान्यचर्ययैव न फलावाप्तिरत आह—

तवो० ॥ ९१ ॥ तपो—भद्रादि उपधान—आचाम्लादि आदाय-स्वीकृत्य चरित्वेत्यर्थ प्रतिमा मासिक्यादिका प्रतिपद्यमानस्य एवमपि सविशेषचर्ययाऽपि 'विहरतो'ति अनियत छादयतीति छद्म—ज्ञानावरणादिकर्म न निवर्तते, इति भिक्षु न चिन्तयेदित्युत्तरेण योग । अज्ञानाभावपक्षे तु सर्वागमवेद्यप्येव भावयेत्, निरर्थकेऽपि प्रक्रमात्प्रज्ञावलेपे रतो मैथुनात्सुसवृत्त सन् योऽह साक्षान्नाभिनानामि, अयमर्थ —"जे एग जाणइ, से सव्व जाणइ। जे स० से एग०" इत्यागमात् छद्मस्थोऽहमेकमपि धर्म वस्तुस्वरूप न तत्त्वतो वेद्मि, तत किमल्पपरिज्ञानतोऽवलेपेन, तपउपधानादिभिरप्यपक्रमणहेतुभि अपक्रमितुम शक्ये छद्मनि दारुणे वैरिणि प्रतपति क किल मेऽहङ्कारावसर इति ॥ ४३ ॥ ९१ ॥ अज्ञानादर्शनेऽपि सशयीत कश्चिदिति तत्परीषहमाह—णत्थि० ॥ ९२ ॥ परलोक —जन्मान्तरम्, ऋद्धिर्वा-तपोमाहात्म्यरूपा, आमर्षौषध्यादिस्तपस्विन, अथवा किं बहुना ! वञ्चितोऽस्मि, भोगानामिति गम्यम्, इतीत्यमुना शिरस्तुण्डमुण्डोपवासादिना धर्मानुष्ठानेन ॥ ४४ ॥ ९२ ॥ अभू० ॥ ९३ ॥ अभूवन्—आसन् जिना महाविदेहे, विदेहाद्यपेक्षया, अथवा भविष्यन्ति जिना इत्यपि मृषा, ते जिनास्तित्ववादिन

एवमाहुरिति भिक्षुर्न चिन्तयेत् ॥ ४५ ॥ ९३ ॥ आपाढसूरिभिः पूर्वं दर्शनपरीपहो नाध्यासितः पश्चादध्यासितः ॥ उपसंहारमाह—एए० ॥ ९४ ॥ यानुक्तन्यायेन ज्ञात्वेति शेपः, भिक्षुर्न विहन्येत-पराजीयेत, कोऽर्थः? संयमात्पात्येत स्पृष्टो-बाधितः केनापि द्वाविंशतेरेकतरेण दुर्जयेनापि परिपहेण कुत्रचित् ॥ ४६ ॥ ९४ ॥

॥ इति द्वितीयमध्ययनम् ॥

---

किमालम्ब्य परीपहाः सोढव्या इति प्रश्ने मानुपत्वादिचतुरङ्गदुर्लभत्व तदालम्बनमनेन सम्बन्धेनायातमिदमध्ययनमाह—चत्ता० ॥ ९५ ॥ मुक्तिकारणत्वेन परमाङ्गानि ॥ १ ॥ ९५ ॥ तत्र मानुष्यत्वदौर्लभ्यमाह—समा० ॥ २ ॥ समन्ताद् आपन्नाः—प्राप्ताः 'णे'ति वाक्यालङ्कारे, संसारे नानागोत्रासु—अनेकाभिधानासु जातिपु—क्षत्रियादिपु कर्म्माणि तानि कृत्वा पृथग्भेदेन, विन्दोरक्षणिकत्वाद्विश्वं विभ्रति—पूरयन्ति क्वचित्कदाचिदुत्पद्य २ इति विश्वभृतः, प्रजाः—जनसमूहरूपाः, अनेन प्राप्तमनुष्यत्वानामपि कर्मवशाद्विविधगतिगमनं मनुष्यत्वदुर्लभत्वे हेतुरुक्तः ॥ २ ॥ ९६ ॥ अमुमेवार्थं भावयति—एगया० ॥ ९७ ॥ असुराणामयमासुरस्तं यथाकर्मभिस्तत्तद्गत्यनुरूपचेष्टितैर्गच्छन्ति ॥ ३ ॥ ९७ ॥ एगया० ॥ ९८ ॥ क्षत्रियो—राजा, ततोऽनन्तरं तक्को वा प्राणी चाण्डालः, यदिवा शूद्रेण ब्राह्मण्यां जातः, वुक्कसो—वर्णान्तरभेदः, अनेन सर्वजातय उपलक्षिताः, ततो-मनुष्यत्वाद्दुत्येति शेपः, कीटः स्यादित्यनेन शेपतिर्यग्भेदोपलक्षणम् ॥ ४ ॥ ९८ ॥ एवम० ॥ ९९ ॥ आवर्तस्तेनोपलक्षिता योनयस्तासु, - कर्मणा किल्बिपाः-अधमाः, न निर्विद्यन्ते-नोद्विजन्ते, सर्वे च तेऽर्थाश्च

शब्दादयो धनकनकादयो वा तेषु इव यथा राजानो न निर्विद्यते ॥ ५ ॥ ९९ ॥ कम्म० ॥ १०० ॥ बह्वयो वेदना — शरीरव्यथा येषां ते तथा, विनिहन्यन्ते विशेषेण निपात्यन्ते अर्थात्कर्मभि ॥ ६ ॥ १०० ॥ कथं तर्हि मनुजत्वावाप्तिरित्याह—

कम्माण० ॥ १०१ ॥ कर्मणा नृगतिविघातकानां प्रहाण्या—अपगमेनानुपूर्व्या—क्रमेण न तु झगित्येव, तुरेवार्थे कदाचिदेव, शुद्धि—विलष्टकर्मविगमात्मिका आददते मनुष्यताम् ॥ ७ ॥ १०१ ॥ माणुस्स० ॥ १०२ ॥ मनुष्यसम्बन्धिन 'लद्धु'त्ति लब्ध्वापि, य धर्म यस्माद्वा श्रुत्वा क्षान्ति—मानादिजयोपलक्षणम्, अहिंसतां शेषव्रतोपलक्षणम्, एवं दशविधयतिधर्मास्याभिधानम् ॥ ८ ॥ १०२ ॥ आहच्च० ॥ १०३ ॥ आहच्चेति—कदाचित् श्रवणम्, मनुष्यत्वं च लब्ध्वापि नैयायिक—न्यायोपपन्नं, मार्गं सम्यग्दर्शनाद्यात्मकं मुक्तिपथं परिभ्रश्यन्ति मार्गादत, इहैव निह्नवक्तव्यता केचिद् ब्रुवते ॥ ९ ॥ १०३ ॥ सुइं० ॥ १०४ ॥ नरत्वं वीर्यं संयमविषयं, सुश्रुत्वात्तो एतं धर्मं प्रतिपद्यन्ते ॥ १० ॥ १०४ ॥ चतुरङ्गस्य फलमाह—माणुस० ॥ १०५ ॥ निर्धुनोति रजः—कर्म्म मुक्तिमाप्नोतीति भाव ॥ ११ ॥ १०५ ॥ आमुष्मिकं फलमुक्त्वेहैव तदाह—

सोही० ॥ १०६ ॥ शुद्धि—कषायकालुष्यापगमो भवतीति गम्यम्, ऋजुभूतस्य—चतुरङ्गप्राप्त्या मुक्तिं प्रति प्रगुणीभूतस्य, तथा च धर्मं क्षान्त्यादि, धर्मावस्थितो न निर्वाणं—नीरमुक्तिं, "तणसंथारे"त्यादिवचनात, तपस्तेजसा ज्वलितस्तद्वत् घृततर्पिताग्निसमान ॥ १२ ॥ १०६ ॥ शिष्योपदेशमाह—विगिंच० ॥ १०७ ॥ विगिञ्च—पृथक्कुरु कर्म्मणो मानुष्यत्वादिविघ्नस्य हेतु—मिथ्यात्वादिकं, तथा यशोहेतुत्वाद्यशः—संयमो विनयो वा, सञ्चिनु क्षान्त्या, उपलक्षणत्वात् मार्दवादिभिश्च 'पाग'त्ति परप्रसिद्ध्या पार्थिवं पृथ्वीविकारम्, ऊर्द्ध्वं दिशं, प्रक्रामति—प्रकर्षेण याति भवान् ॥ १३ ॥ १०७ ॥ तद्भवसिद्धिकान् प्रत्युक्तम्,

अन्यानाह—विसा० ॥ १०८ ॥ 'विसालिसेहिं'ति विसदृशैः शीलैर्व्रतपालनात्मकैर्यक्षाः-देवाः, ऊर्द्ध्वकल्पेषु तिष्ठन्ति, उत्तरेण योगः, उत्तरोत्तराः-उत्तरोत्तरविमानवासिनो महाशुक्लाश्चन्द्रादित्यादयः, त इव दीप्यमाना मन्यमाना अत्यन्तसुखितया अपुनश्च्यवनम् ॥ १४ ॥ १०८ ॥ अप्पि० ॥ १०९ ॥ अर्पिताः—प्राक्पुण्येन ढौकिता इव, देवकामां, पूर्वाणि बहून्यसंख्येयानि, एवं वर्षशतान्यपि बहूनि ॥ १५ ॥ १०९ ॥ तत्थ० ॥ ११० ॥ यथास्थानं यद्यस्य स्वानुष्ठानानुरूपमिन्द्रादिपदं तस्मिन्, स सावशेषपुण्यकर्मा कश्चिज्जन्तुः दशाङ्गोऽभिजायते, एकवचनं तु विसदृशशीलतया कश्चिद्दशाङ्गः कश्चिन्नवाङ्गादिरपि इति ज्ञापनार्थम् ॥ १६ ॥ ११० कानि तानीत्याह—

खित्तं० ॥ १११ ॥ क्षेत्रं-ग्रामारामादि सेतुकेतूभयात्मकं वा, वास्तु-खातोच्छ्रितोभयात्मकं, हिरण्यं-सुवर्णम्, उपलक्षणत्वाद्रूप्यादि च, पशवः-अश्वादयः, दासाः-पोष्यवर्गरूपास्ते च 'पोरुसं'त्ति सूत्रत्वात्पौरुषेयं च पदातिसमूहः दासपौरुषेयम्, कामाः-मनोज्ञशब्दादयः तद्धेतवः स्कन्धाः तत्तत्पुद्गलसमूहाः कामस्कन्धाः, यत्र स्युरितिगम्यम्, तत्र तेषु स उपपद्यते ॥ १७ ॥ ॥ १११ ॥ अनेनैकमङ्गमुक्तं शेषाण्याह—मित्तवं० ॥ ११२ ॥ मित्राणि-सहपांशुक्रीडितादीनि तद्वान्, एवं ज्ञातयः-स्वजनाः, उच्चैः-लक्ष्म्यादिक्षयेऽपि पूज्यतया गोत्रमस्येति उच्चैर्गोत्रः, वर्णः-स्निग्धत्वादिगुणैः प्रशस्योऽस्येति वर्णवान् अभिजातः-विनीतः, उभयत्र मत्वर्थीयलोपश्च यशस्वी, बली ॥ १९ ॥ ११२ ॥ भोच्चा० ॥ ११३ ॥ पूर्वं-पूर्वजन्मसु विशुद्धो-निदानादिरहितत्वेन सद्धर्मोऽस्य स तथा, केवलां अकलङ्कां बोधिं बुद्ध्वा-अनुभूय प्राप्येति ॥ १९-२० ॥ ११३-११४ ॥

॥ इति तृतीयमध्ययनम् ॥

दुर्लभचतुरङ्गी लब्ध्वा प्रमादाप्रमादौ हेयोपादेयतयाह, अनेन सबन्धेनायातमिद सूत्रम्—आस० ॥ ११६ ॥ असस्कृत शक्रशतैरपि सतो वर्द्धयितु त्रुटितस्य वा कर्ण्णपाशवदस्य सधातुमशक्यत्वात् जीवित, ततो मा प्रमादी, कुतो? अस० जरया उपनीतस्य–प्रक्रमान्मृत्युसमीप नीतस्य, यस्मान्नास्ति त्राणम्, एव प्रागुक्तमर्थं विजानीहि–अवबुध्यस्व, तथैतच्च वक्ष्यमाणम् यथा जना प्रमत्ता सूत्रत्वादेकवचनम्, किमथ प्रक्रमात् त्राणम्, 'नु'वितर्के, विविध हिंसा, अयता ग्रहीष्यन्ति। असस्कृत जीवित व्यचिरयासुराह--तत्र मा प्रमादीरित्युक्तऽर्थोपार्जन प्रत्यप्रमाद कार्य इति केषाचित्कदाशय तमपाकर्तुमाह--

जे० ॥ ११६ ॥ पापकर्मभि --कृषिवाणिज्यादिभि अमर्ति–धनमेव सर्वेहिकामुष्मिकफलनिबन्धनमिति कुमर्ति गृहीत्वा, 'पहाय'ति प्रकर्षेण हित्वा, पाशेषु–स्त्र्यादिषु प्रवृत्ता नरा वैर–कर्म तेनानुबद्धा ॥ २ ॥ ११६ ॥ कर्मणामवन्ध्यतामभिदधन् प्रकृतमेवार्थं द्रढयन्नाह–तेणे० ॥ ११७ ॥ स्तेन –चौर यथा सन्धिमुखे–क्षत्रद्वारे गृहीत्वा आत्त स स्वानुष्ठानेन कृत्यते–छिद्यते, अत्र सम्प्रदाय –कस्यचित्कलकचिते गृहे चौरेण प्राकारकपिशीर्षाकृतिक्षत्र कृत, तत्र विशन्नन्त स्यगृहस्वामिना वहिस्थ । स विललाप, एव प्रजा तथाविधबाधानुभवनेन प्रत्ये इह कृत्यते अवकृत्यन्ते, कृतकर्मणा न मोक्ष इति ॥ ३ ॥ ११७ ॥ ससा० ॥ ११८ ॥ ससरण ससारस्तमापन्न परस्य–पुत्रकलत्रादे अर्थाद् अर्थ--प्रयोजनमाश्रित्य 'च' एवार्थे साधारण वा यदात्मनोऽन्येषा चैतद्भविष्यतीति चिन्तापूर्वक करोति भवान् कर्म–कृष्यादि ते–तव हे कृष्यादिकर्मकर्त्त ! तस्य वेदो–विपाकस्तत्कालेनैव बान्धवा –स्वजना, बान्धवता तद्विभजनापनयनादिना उपयान्तीति ॥ ४ ॥ ११८ ॥ कर्मण स्वजनान्न मुक्तिरित्युक्तम्,

द्रव्यादपि न स्यादित्याह—वित्तेण० ॥ ११९ ॥ शरणं— स्वकृतकर्मणो रक्षणं, प्रमत्तो—मद्यादि, दीपः—केवलज्ञानात्मको भावदीपः, ततः प्रणष्टो दीपोऽस्येति दीपप्रणष्टः, एवं तद्दशापक्षया प्रायस्तस्यानपगमात्, मोहो-ज्ञानदर्शनावरणमोहनीयात्मकः अस्येति सः, नैयायिकं, दृष्ट्वाऽप्यदृष्ट्वैव स्यात्तद्दर्शनफलाभावं वित्तादिव्यासक्तित इति, भितं—सम्यक्त्वादिकमवाप्तमुपहन्ति ॥ ५ ॥ ११९ ॥ कृतमाह—सुत्तेसु० ॥ १२० ॥ द्विधा सुप्तेष्वप्यविवेकिषु नायं स्वपिति, किन्तु द्विधाऽपि प्रतिबुद्ध एव जीवतीत्येवंशीलः, न विश्वस्यात्, प्रमादेष्विति गम्यम्, यतो घोराः, प्राणिनां प्राणापहारित्वात् मृत्युदायिनी मुहूर्त्तात् प्रतिसामर्थ्यवत्, अप्रमत्तो अन्यथा यथा भारण्डपक्षिणः पक्षान्तरेण सहान्तर्वर्त्ति साधारणचरणसम्भवात्, स्वल्पमपि प्रमाद्यतो मृत्युस्तथा नवापि संयमजीवि- ताद्भ्रंशः ॥ ६ ॥ १२० ॥ अमुमेवार्थमाह—

चरे० ॥ १२१ ॥ चरेत् संयमाध्वनि पदानि-स्थानानि धर्मस्य परिशङ्कमानः न ममेह प्रवर्त्तमानस्य मूलगुणेषु मालिन्यं भविष्यन्तीति चिन्तयन्, यत्किञ्चिदल्पमपि दुश्चिन्तितादि प्रमादपदं बन्धहेतुत्वात्पाशवत्पाशं मन्यमानः भारण्डवत्, लाभान्तरे- अपूर्वार्थप्राप्तिविशेषे सति, जीवितं बृंहयित्वा अन्नपानोपयोगादिना, पश्चात्-लाभान्तरोत्तरकालं परिज्ञाय-अवबुध्य नेदानीं गुणा र्जकमिति ज्ञपरिज्ञया, ततः प्रत्याख्यानपरिज्ञया भक्तं प्रत्याख्याय कर्ममलाप्ध्वंसी स्यात् ॥ ७ ॥ १२१ ॥ तत्किं स्वातन्त्र्यत एवोतान्यथेत्याह—छंदं० ॥ १२२ ॥ स्वच्छन्दतानिषेधेनोपैति मोक्षम्, अश्वो यथा शिक्षितः वर्मधारी, अयमर्थो—यथा अश्वोऽस्वातन्त्र्येण प्रवर्त्तमानः समरेऽरिभिर्नोपहन्यते, तन्मुक्तिमाप्नोति, पूर्वाणि वर्षाणीति चर—आगमोक्तक्रियां सेवस्व, अप्रमत्तः— गुरुपारतन्त्र्यापहारिप्रमादपरिहर्त्ता, तस्माद्—अप्रमादचरणादेव ॥ ८ ॥ १२२ ॥ ननु छन्दोनिरोधेन चेन्मुक्तिः अयं तर्हि

अन्त्यकाले एव क्षिपतामित्याशङ्क्याह स पु० ॥ १२३ ॥ य पूर्वमेव प्रमत्ततया भावितमतिर्न स्यात् स तदात्मक छन्दोनिरोधम्, एवमुपमार्थत्वात् पूर्वमिव न लभेत, पश्चाद्-अन्तकाले, एषोपमा शाश्वतवादिना-आत्मनि मृत्युमनियतकालभाविनमपश्यताम्, पश्चादपि छन्दोनिरोधमप्राप्नुवन् विषीदति, शिथिलयति-आत्मप्रदेशान्मुञ्चति आयुषि कालेन-मृत्युनोपनीते शरीरस्य भेदे, अत आदित एव न प्रमादवद्भिर्भाव्यम् ॥ ९ ॥ १२३ ॥ कस्मान्न लभत इत्याह—खिप्प० ॥ १२४ ॥ विवेक-द्रव्यभावसङ्गत्याग रूप, गतु-गन्तु, सम्यक्प्रवृत्त्या उत्थाय, समेत्य सम्यग्ज्ञात्वा लोक-सर्वप्राणिवर्गम्, समतया, महर्षि सन् आत्मान रक्षन्नपा येभ्य कुगतिगमनादिभ्य इत्येवशीलो, मकारोऽलाक्षणिक, चराप्रमत्त ॥ १० ॥ १२४ ॥ प्रमादमूल च रागद्वेषाविति सोपाय तत्परीहारमाह—

मुहु ॥ १२५ ॥ मदा० ॥ १२६ ॥ युग्मम् ॥ मुहुर्मुहु —वारवार मोहगुणोपकारिण शब्दादय तान् जयन्तम्, अनेकरूपा स्पृशन्ति स्वानि स्वानीन्द्रियाणि गृह्यमाणतयेति स्पर्शा शब्दादयस्ते स्पृशन्ति । गृह्यमाणतयैव सम्बन्धन्ति, असमञ्जस—अननुकूलमिति क्रियाविशेषणम्, अपिलुप्त, मनसाऽप्यास्तां वाचा कायेन वा प्राद्विष्यात् ॥ ११ ॥ १२५ ॥ तथा मन्दयन्ति विवेकिनमप्य प्रज्ञतां नयन्ति, मन्दा स्पर्शा शब्दादयो बहुलोभनीया ॥ १२ ॥ १२६ ॥ चारित्रशुद्धिरुक्ता सा च न सम्यक्त्वशुद्धि विनातस्तदाह—जे स० ॥ १२७ ॥ ये सस्कृता —तात्त्विकशुद्धिमन्त किन्तु उपचरितवृत्तय, तुच्छा—यदृच्छाभिधायितया नि सारा परप्रवादिन, ते प्रेमद्वेषानुगता, अत एव 'परज्झा' त्ति परवशा रागादिग्रस्तत्वात्, एते अधर्महेतुत्वात् अधर्म, इतीत्यमुनोल्लेखेन जुगुप्समान न तु निन्दन्, निन्दाया सत्र निषेधात्, काङ्क्षेत गुणान्—ज्ञानाद्यात्मकान् ॥ १३ ॥ १२७ ॥

॥ इति चतुर्थमध्ययनम् ॥

'यावच्छरीरस्य भेद' इति ब्रुवता मरणकालेऽप्यप्रमादः कार्य इत्युक्तम्, स च मरणविभागपरिज्ञानत एव स्यादित्यनेन सम्बन्धेनेदं सूत्रम्—

अण्ण० ॥ १२८ ॥ अर्णवे-भावतः संसारे महानोघः—भावतो भवपरम्परात्मको यस्मिन्, अत्र सुव्यत्यये, अर्णवान् महौघाद्दुरुत्तारात्तीर्णः, एको घातिकर्मसाहित्यरहितस्तत्र देवनरपर्षदि, एकोऽद्वितीयः स तीर्थकृदेव, महती प्रज्ञा—केवलज्ञानात्मिका संवित् अस्य, स, इमं प्रश्नं—प्रष्टव्यार्थम् ॥१२८॥ तत्किमित्याह—संति मे० ॥ १२९ ॥ स्त इमे प्रत्यक्षे एते, द्वे तिष्ठन्ति अनयोर्जन्तव इति स्थाने आख्याते' पूर्वतीर्थकृद्भिः, मरणमेवान्तः—निजायुःपर्यन्तः तस्मिन्भवे मारणान्तिके ॥ २ ॥ १२९ ॥ केषां पुनरिदं कियत्कालं चेत्याह —बालाणं० ॥ १३० ॥ अकाममेवासकृत् ते हि विषयाभिष्वङ्गतो मरणमनिच्छन्त एव म्रियन्ते, सकाममिव सकामं मरणं प्रत्यसंत्रस्ततया तथात्वभूतत्वाच्च तस्य तादृशां, तच्च केवलिसम्बन्धि ज्ञेयम्, जघन्येन तु शेषचारित्रिणः सप्ताष्ट वा वारान् भवेत् ॥ ३ ॥ १३०॥

तत्थिमं० ॥ १३१ ॥ क्रूराणि हिंसादिकर्माणि करोति क्रियया, शक्तावशक्तावपि मनसा कृत्वा च प्रक्रमादकाम एव म्रियते ॥ ४ ॥ १३१ ॥ इदमेवाह—जे० ॥ १३२ ॥ कामौ—शब्दरूपाख्यौ भोगाः—स्पर्शरसगन्धाख्याः तेषु एकः—कश्चित् क्रूरकर्म्मा तन्मध्यात्कूटमिव कुटं—प्राणिनां यातनाहेतुत्वान्नरकस्तस्मै कूटाय, प्रेरितश्च कैश्चिद्वदति—न मया दृष्टः परलोकः, चक्षुर्दृष्टेयं, रतिः—कामसेवनरूपा चित्तप्रह्लत्तिः तस्यायमाशयः—कथं दृष्टपरित्यागतोऽदृष्टपरिकल्पनयाऽऽत्मानं विप्रलम्भेयम् ॥ ५ ॥ १३२ ॥ पुनस्तदाशमेवाह—हत्था० ॥ १३३ ॥ हस्तागता इव स्वाधीनतया, काले संभवन्तीति, अनिश्चितकालान्तरप्राप्तयो ये 'अनागता' भाविजन्मसम्बन्धिनः, यतः कः पुनर्जानाति ? यथा परलोकोऽस्ति नास्ति वा ॥ ६ ॥ १३३ ॥ ततोऽसाविदमाह—जणेण० ॥ १३४ ॥

अनेन साद्ध भविष्यामि, इति प्रगल्भते धार्ष्ट्यमवलम्बते, क्लेशमिह परत्र च बाधात्मकम् ॥ ७ ॥ १३४ ॥ यथा च त प्रतिपद्यते तथाह—तओ० ॥ १३५ ॥ तत कामभोगानुरागात् सधार्ष्ट्यवान् दण्ड-मनोदण्डादिक समारभते-प्रवर्त्तते ॥ ८ ॥ १३५ ॥

हिंस० ॥ १३६ ॥ श्रेय -प्रशस्येतरमेतदिति भण्यते, भाषते च "न मासभक्षणे दोष" इति ॥ ९ ॥ १३६ ॥ कायसा० ॥ १३७ ॥ कायेन वाचा मनसा च , वित्ते स्त्रीषु च गृद्ध , 'दुहओ'त्ति द्विधा-रागद्वेषात्मकाभ्या, सचिनोति-बध्नाति, शिशु नागोऽलस , स इव मृत्तिकां, यथा सस्निग्धतया बह्वी रेणुभिरवगुण्ड्यते तामेवाश्नीते, ततोऽर्ककरै शुष्यन्निहैव क्लिश्यति-विनाश प्राप्नोति ॥ १० ॥ १३७ ॥ अमुमेवार्थमाह—तओ० ॥ १३८ ॥ ततस्तत्को वा कर्ममलत स्पृष्ट , आशुघातेन रोगेण तप्यते, पर लोकात् , कर्मानुप्रेक्षी, स्वत आत्मन ॥ ११ ॥ १३८ ॥ सुया० ॥ १३९ ॥ श्रुतानि मया स्थानानि उत्पत्तिस्थानानि, या गतिर्न रकात्मिका सा च श्रुता, प्रगाढा यत्र गतौ वेदना , तदयमस्याशय -ममैवविधानुष्ठानस्येदृश्येव गति ॥ १२ ॥ १३९ ॥

+तत्थो० ॥ १४० ॥ तत स मरणमेव मरणान्ते, उपस्थिते सति सन्त्रस्यति भयात्-नरकगमनसाध्वसात् अनेनाकामरत्वमुक्त, धूर्त -द्यूतकार स इव, कलिनैकेन प्रक्रमात्-दायेन जितो यथा द्यूतमेकनदायेन जित सन्नात्मान शोचति, तथाऽसावपि तुच्छैर्मनु जभोगदिव्यसुख हारित शोचन्नेव म्रियते ॥ १६ ॥ १४३ ॥ प्रस्तुतार्थं निगमयति—एय० ॥ १४४ ॥ पण्डिताना सम्बन्धि ॥ १७ ॥ १४४ ॥ मर० ॥ १४५ ॥ मरणमप्यास्तां जीवित पुण्यानां, यथा—येन प्रकारेण, कथयत इति गम्यम् , तदित्युपक्षेपद्वारोपात्तम् , अनुश्रुतम्-अवधारितम्, भवद्भिरिति शेष , विशेषेण प्रसन्ना-मरणेऽप्यनाकुलचेतस , तत्सम्बन्धि मरणमपि विप्रसन्न, न विद्यते

+ ગાથાનુ પ્રતિક ૧૩ નુ છે જ્યારે અવચૂરિ ૧૬ ની છે તેમજ ૧૪૦-૧૪૧-૧૪૨ (૧૦-૧૪-૧૫) ગાથાની અવચૂરિ દેખાતી નથી

आघातः–यतनयाऽन्यप्राणिनामात्मनश्च विधिवत्संलिखितशरीरतया यस्मिंस्तदनाघातं संयतानाम्, आर्षत्वाद्वश्यवतां–वश्या आत्मा येषां ते तथा ॥ १८ ॥ १४५ ॥ यथा चैतदवं तथा दर्शयति—

न इमं० ॥ १४६ ॥ नैव इदं पण्डितमरणं सर्वेषां भिक्षूणां किन्तु केषाञ्चिदेव भावभिक्षूणां, तथा आगारिणां दूरोपास्तमेव, तथात्वे च तेषामपि तत्त्वतो यतित्वात् यतो नाना–अनेकविधं व्रतम्–अनेकविधभङ्गसम्भवादेशविरतेः, विषमशीलाश्च भिक्षवः, न सर्वेऽप्यनिदानिनोऽविकलचारित्रिणो वा तत्कालं म्रियन्ते ॥ १९ ॥ १४६ ॥ विषमशीलत्वमाह—संति० ॥ १४७ ॥ कुप्रवचनेभ्यो भिक्षुभ्यः संयमेनोत्तराः प्रधानाः, सर्वेभ्य इत्यनुमतिवर्जसर्वोत्तमदेशविरतिप्राप्तेभ्योऽपि ॥ २० ॥ १४७ ॥ कथमेतदित्याह—चीरा० ॥ १४८ ॥ वस्त्राणि अजिनं–मृगचर्मादि, नाग्न्यं 'जडि'ति० जटित्वं, सङ्घाटी–वस्त्रसंहतिजनितमुण्डित्वम्, नैव त्रायन्ते भवात् 'परियागयं' प्रव्रज्यापर्यायमाप्तम् ॥ २१ ॥ १४८ ॥ अथ कथं गृहाद्यभावेऽप्यमीषां दुर्गतिरित्याह—पिंडो० ॥ १४ ॥ पिण्डमवलगति–सेवते पिण्डावलगो यः स्वयमाहाराभावतः परदत्तोपजीवी सोऽपि, आस्तां गृहादिमान्, भिक्षादो–यतिः गृहस्थो वा, सुव्रतः क्रामति दिवम् ॥ २२ ॥ १४९ ॥ व्रतस्वरूपमेवाह—अगारि० ॥ १५० ॥ अगारिणो–गृहिणः सामायिकाङ्गानि –निःशङ्कताकालाऽध्ययनाणुव्रतरूपाणि अगारिसामायिकाङ्गानि, 'सड्ढि'त्ति श्रद्धावान्, कायमनोवाग्भिः स्पृशति–सेवते, पौषधः–आहारपौषधादिः तं 'दु०' द्वयोरपि सितेतरयोः पक्षयोश्चतुर्दशीपूर्णिमास्यादिषु तिथिषु, अपेर्गम्यत्वादेकमपि उपलक्षणत्वाच्चैकदिनमपि न हानिं प्रापयति, रात्रिग्रहणं च दिवा अप्राप्तौ रात्रावपि कुर्यात्पौषधम्, अस्य भेदेनोपादानं तदादरख्यापनार्थम् ॥ २३ ॥ १५० ॥ प्रस्तुतमर्थमुपसंहरति—

एव० ॥ १५१ ॥ मुव्रतो मुच्यते कुत छवि –त्वक् पर्वाणि–जानुकूर्परादीनि तद्योगादौदारिकशरीरमपि छविपर्व, तत – तदनन्तरं गच्छेत् यक्षा–देवा, समानो लोकोऽस्येति सलोकस्तद्भाव सलोकता, यक्षै स० यक्षस० ता अर्थाद्देवगतिम् ॥२४॥१५१॥ पण्डितमरणमेव फलोपदर्शनेनाह––अह० ॥ १५२ ॥ ' अथे 'त्युपदर्शने भिक्षु द्वयोरन्यतर –एकतर स्यात्, कौ तौ द्वावित्याह– सर्वेत्यादि० ॥ २५ ॥ १५२ ॥ यत्र याऽसौ देवो भवति तत्रत्यस्वरूपमाह–दीहा० ॥ १५३ ॥ १५४ ॥ उत्तरा उपरिवर्तिनोऽनुत्तर विमानाख्या, विमोहा इवाल्पवेदादिमोहनीयोदयतया युतिम तोऽनुपूर्वत क्रमेण सौधर्मादिषु अनुत्तरान्तेषु पूर्वपूर्वापेक्षया प्रकर्षवन्त्येव विमोहत्वादीनि, आवासा, प्राकृतत्वात् पलीवर्तनिर्देश सत्र, देवास्तु तत्र यशस्विन कामरूपिण अनुत्तरष्वपि विकुरणशक्ते सत्त्वात् अचिरोपपन्नप्रकाशा, अनुत्तरेषु हि वर्णद्युतादि यावदायुस्तुल्यमेव स्याद् भूयोऽर्चिमालिप्रभा भूय –प्राचुर्ये, प्रभूतादित्यदीप्तय ॥ २६ ॥ २७ ॥ १५३ ॥ १५४ ॥ उपसहर्तुमाह––ताणि० ॥ १५५ ॥ गच्छन्ति गमिष्यन्ति च, शिक्षित्वा–अभ्यस्य भिक्षाका वा गृहस्था वा, भावतो यतय एव, ये शान्ता उपशमेन परिनिर्वृता–विध्यातकषायानला ॥ २८ ॥ १५५ ॥ मरणेऽपि यतयो यथाभूता स्युस्तथाऽऽह––

तेसिं० ॥ १५६ ॥ भावभिक्षूणां श्रुत्योक्तरूपस्यानावाप्तिमिति शेष, सत्पूज्यानां–सतां पूजार्हाणा सयमवता मरणे ॥ २९ ॥ १५६ ॥ शिष्योपदेशमाह––तुलि० ॥ १५७ ॥ तोलयित्वा–परीक्ष्य बालपण्डितमरणे, ततो विशेष बालमरणात्पण्डितमरणस्य विशिष्ट स्वलक्षण आदाय, तथा दयाधर्मस्य च–यतिधर्मस्य, भवेत्, न तु तथाविध तपस्विनस्त्वाङ्गुलीभङ्गादिना कुप्येत् ॥ ३० ॥ १५७ ॥ तओ० ॥ १५८ ॥ तत कषायोपशमानन्तर काले–मरणकालेऽभिप्रेते, यदा योगा नोत्सर्पन्ति तादृशमिति भयोत्र, अन्तिक गुरूणां

विनयेद्-विनाशयेत् लोमहर्षं-रोमाञ्चं, हा मे मरणं भविष्यतीति, तथाभिप्रायसंप्राप्यं काङ्क्षेदिव त्यक्तपरिकर्मत्वात् ॥ ३१ ॥ १५८ ॥ निगमनमाह—अह० ॥ १५९ ॥ अत्रमरणे स्थानान्तरं मरणकाले 'निप्फाइया य सीस' इत्यादिना क्रमेण संप्राप्तः आर्षत्वादाघातयन् संलेखनादिभिः, समुच्छ्रयं अन्तः कार्मणशरीरं बहिरौदारिकं, त्रयाणां—भक्तपरिज्ञादीनाम् ॥ ३२ ॥ १५९ ॥ इति पञ्चममध्ययनम्

अनन्तराध्ययने पण्डितमरणमुक्तम्, तच्च विरतानामेव, न चैते विद्याचरणविकला इति तत्स्वरूपमनेनोच्यते, इत्यनेनायातस्याध्ययनस्यादिसूत्रमाह—जावंत० ॥१६०॥ यावन्तो अविद्या—कुत्सितज्ञानात्मिका तत्प्रधानाः पुरुषाः अविद्यापुरुषाः, दुःखस्य संभवो येषु ते, ततोऽपि लुप्यन्ते दारिद्र्यादिभिर्बाध्यन्ते । सिद्धघटग्राहकद्रमकवत् ॥१॥१६०॥ अनेनासंयमत्वमुक्तं, कृत्यमाह—

समिक्ख० ॥ १६१ ॥ समीक्ष्य-आलोच्य पाशा—अत्यन्तपारवश्यहेतवः कलत्रादिसम्बन्धास्त एव तीव्रमोहोदयादिजातीनां पन्थानः-तत्प्रापकत्वात्पाशजातिपन्थाः तान् बहून् अविद्यावतां विलुसिहेतून् आत्मना न तु परोपरोधादिना, सत्यः—संयमः सदागमो गवेपयेद्, एपयंश्च मैत्रीं भूतेषु पृथ्व्यादिषु कल्पयेत् ॥ २ ॥ १६१ ॥ अपरं च—माया० ॥ १६२ ॥ स्नुषा—वध्वः पुत्राश्च उरसिभवा औरसाः स्वयमुत्पादितः, आस्तां जातपुत्रादयः ॥ ३ ॥ १६२ ॥ एय० ॥ १६३ ॥ एतं पूर्वोक्तमर्थं स्वप्रेक्षया—स्वबुद्ध्या पश्येद्—अवधारयेत्, शमितं दर्शनं प्रस्तावान् मिथ्यात्वात्मकत्वं येन स तथा छिन्द्यात् गृद्धिं विपयाभिकाङ्क्षा स्नेहं च न काङ्क्षेदपि पूर्वसंस्तवम्, एकग्रामोपितोऽयमित्यादिकम् ॥ ४ ॥ १६३ ॥ अमुमेवार्थमनूद्यास्यैव फलमाह—गवासं० ॥ १६४ ॥ गावश्च अश्वाश्च गवाश्वम्, मणयो—मरकतादयः, उपलक्षणं चैतच्छेपालङ्काराणां सुवर्णादीनां च पशवः—अजैडकादयः पौरुषेयं—पदात्यादिपुरुषसमूहं त्यक्त्वा संयममनुपाल्येत्यर्थः, कामरूपी भविष्यसि इहैव वैक्रियादिलब्धितो परत्र च देवत्वावाप्तः ॥ ५ ॥ १६४ ॥ थावरं० ॥ १६५ ॥

स्थावर–गृहारामादि, जगम–मनुष्यादि, उपस्कर–गृहोपकरणम् ॥ ६ ॥ १६५ ॥ पुन सत्यस्वरूपमेवाह—

अब्भत्थ० ॥ १६६ ॥ अध्यात्ममात्मनि यद्वर्त्तते तच्चेह सुखादि सर्वत -इष्टसयोगादिहेतुम्य , ज्ञातिमिति गम्यते, सर्वं दृष्ट्वा अवधाय प्रियत्वादिस्वरूपेणेति, तथा प्राणा च–प्राणिनश्च, प्रिय आत्मा येषा तान् प्रियात्मकान् दृष्ट्वा इत्यत्रापि योग , भय च वैर च–प्रद्वेष भयवैर तस्मात् ॥ ७ ॥ १६६ ॥ मृषावादाद्याश्रवनिरोधमाह—आयाण० ॥ १६७ ॥ आदीयत इत्यादान–धनधान्यादि, नरकहेतुत्वा नरक दृष्ट्वा, नाददीत–न गृह्णीत तृणमपि दोगुञ्छि–जुगुप्सते आत्मानमाहार विना धर्मधारणाक्षमामत्येवशीलो जुगुप्सी, आत्मान पात्रे दत्त–निसृष्ट गृहस्थैरिति गम्य, भुञ्जीत भोजन–आहार, जुगुप्सित्वादन आहारप्रतिबन्धदर्शनात् परिग्रहाश्रवनिरोध उक्त , तदेव 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यत' इति न्यायात् मृषावादादत्तादानमैथुनाश्रवत्रयनिरोध उक्त ॥ ८ ॥ १६७ ॥ एव पञ्चाश्रवविरमणात्मक सयमे यथा परे विप्रतिपद्यन्ते तथाह—इह० ॥ १६८ ॥ जगति मुक्तिमार्गविचारे वा एके कपिलाद्य 'तु' पुनरर्थे, मन्यन्ते, उप० प्ररूपयन्ति च, अप्रत्याख्याय–अनिराकृत्य पापक–हिंसादिविरतिमकृत्वेव, आय–तत्त्व, यद्वा आचरित तत्तत्क्रियाकलाप ज्ञात्वा सर्वदु खाद्विमुच्यते ॥ ९ ॥ १६८ ॥ ते चैवमात्मान स्वस्थयन्ति, तथाह–भणता० ॥ १६९ ॥ भणन्त पूर्वोक्त अकुर्वन्तश्च०



अन्त्यभाग ।

अनन्तर चरणमुक्त, तच्च प्रमादस्थानपरिहारत एवासेवितु शक्यम्, तत्परिहारश्च तत्परिज्ञानपूर्वक इति तदर्थमिदमारभ्यते–

अध्यं॰ (अध्ययनं ३२)॥ गा॰ ११५६ ॥ अन्तमतिक्रान्तः अत्यन्तः—अनादिः कालो यस्य सोऽयमत्यन्तकालस्तस्य, सह मूलेन—कषायाविरत्यादिरूपेण वर्त्तते इति समूलकस्तस्य, दुःखयतीति दुःखं—संसारस्तस्य, यः प्रमोक्षोः—अपगमस्तं भाषमाणस्य, कोऽर्थः यथाऽसौ स्यात्तथेत्यर्थः, प्रतिपूर्णं—विषयान्तरागमनेनाखण्डितं चित्तं येषां, प्रतिपूर्णचित्ता ते शृणुत एकान्तहितं हितः—मोक्ष एव, तदर्थम् ॥ १ ॥ ११५६ ॥ णाणस्स॰ ॥ ११५७ ॥ आभिनिबोधिकादेः प्रकाशनया—निर्मलीकरणेनेत्यर्थः, अनेन ज्ञानात्मको मोक्षहेतुरुक्तः, तथा अज्ञानं—मत्यज्ञानादि मोहो—दर्शनमोहनीयमनयोः समाहारेऽज्ञानमोहं तस्य वर्जना कुश्रुतश्रुतिकुदृष्टिसङ्गपरित्यागादि तया, अनेन स एव सम्यग्दर्शनात्मक उक्तः, तथा रागद्वेषस्य च संक्षयेण, एतेन तस्यैव चारित्रात्मकस्योक्तिः, ततश्चायमर्थः—सम्यग्दर्शनज्ञानचारित्रैः ॥ २ ॥ ११५७ ॥ अनेन दुःखप्रमोक्ष उक्तः, प्रतिज्ञानादीनां कः प्राप्तिहेतुः ? उच्यते—तस्स॰ ॥ ११५८ ॥ तस्य मोक्षोपायस्यैष वक्ष्यमाणो मार्गः प्राप्तिहेतुः, यदुत गुरवो वृद्धाश्च श्रुतपर्यायादिवृद्धास्तेषां सेवा गुरुकुलवासोप॰, तत्र च सुप्रापाण्येव ज्ञानादीनि कुसंसर्गतो न स्यादेव तत्प्राप्तिरित्याह—विवर्जना, बालजनस्य—पार्श्वस्थादेः दुरात्, तत्परिहारेऽपि च न स्वाध्यायतत्परतां विना ज्ञानाद्यवाप्तिरित्याह—धृतिः—चित्तानुद्विग्नत्वमित्यर्थः ॥ ३ ॥ ११५८ ॥ एतानीच्छता प्राकिं विधेयमित्याह—आहार॰ ॥ ११५९ ॥ सहा॰—गच्छान्तर्वर्त्ती सन्नीतिग॰, निपुणार्थेषु जीवादिषु बुद्धिरस्येति निपुणार्थबुद्धिस्तं, निकेतनं—आश्रयं विवेकयोग्यं—स्त्र्याद्यसंसर्गोचितम्, समाधिस्तु—ज्ञानाद्यवाप्तुकामः ॥ ४ ॥ ११५९ ॥ कृत्यमाह—न वा॰ ॥ ११६० ॥ न वा चेदर्थः समं वा आत्मनो गम्यते, तथाविधगीतार्थयतिविषयं चैतत् ॥ ५ ॥ ११६० ॥ यथा मोहादीनां संभवो यथा दुःखहेतुत्वं यथा च दुःखस्य प्रसंगस्तेषां चाभावस्तथाऽभिधातुमाह—जहा॰ रागो॰ दुक्खं॰ ॥ ११६१ ॥ ११६२ ॥ ११६३ ॥ मोहः—अज्ञानं तच्चेह मिथ्यात्वदोष

दुष्ट ज्ञानमेव गृह्यते, आयतन–उत्पत्तिस्थान यस्या सा मोहायतना ता, 'तु' एवार्थे वदन्तीति सम्बन्ध, यथोक्तमोहाभावे ह्यवश्य भावी तृष्णाक्षय, मोह च तृष्णाऽऽयतन, तृष्णा हि सति मूर्च्छा, सा चात्य तदुस्त्यजेति रागप्रधाना, ततस्तया राग उपलक्ष्यते, सति च तत्र द्वेषोऽपि स्यादिति तृष्णाग्रहणेन रागद्वेषावुक्तौ, एतयोश्चानन्तानुबन्धिकषायरूपयो सत्तायामवश्यभावी मिथ्यात्वोदय, तत्र सिद्ध एवाज्ञानरूपो मोह, एतेन यथा रागादीनां सम्भव तथोक्त, यथैतेषा दु खहेतुत्व तथाह–कर्मणो बीज–कारण कर्म पुनर्जातिमरणानि च जातिमरण तस्य मूल–कारण दु ख–दु खहेतु, जातिमरण पुनर्वदन्ति, तस्यैवातिशयदु खोत्पादकत्वात् यतश्चैवमत कि स्थितमित्याह–दु ख हतमिव हत, केनेत्याह–यस्य न भवति मोह, यस्य न किञ्चनानि–द्र याणि सन्तीति गम्यते ॥ ६–८ ॥ ११६१–६३ ॥ सविस्तर मोहाद्युन्मूलनोपायमाह—राग० ॥ ११६४ ॥ समूलानामिव मूलाना–तीव्रकषायोदयादीनां, जालेन–समूहेन वर्त्तत इति समूलजालस्तम्, उपाया –तदुद्धरणहेतव ॥ ९ ॥ ११६४ ॥ यथा प्रतिज्ञातमेवाह–रसा० ॥ ११६५ ॥ प्राय बाहुल्येन दप्ति धातूद्रेकस्तत्करा, पक्षिण इव ॥ १० ॥ ११६५ ॥ अनेन रसप्रकामभोजने दोष उक्त, अधुना सामान्येनैव प्रकामे दोषमाह—

जह० ॥ ११६६ ॥ अनेन प्रकामभोजनस्य काका परिहार्यत्वमुक्तम् ॥ ११ ॥ ११६६ ॥ इत्थ रागसमुद्धर्त्तुकामेन यत्त्याज्य तदुक्त्वा यदतियत्नेन कर्त्तव्य तदाह–वि० ॥ ११६७ ॥ अनमाशनाना–न्यूनभोजनाना, पराजित–पराभूतो व्याधिरिव औषधो देहमिति ग० ॥ १२ ॥ ११६७ ॥ विविक्तशयनासने यत्नाधानाय विपर्यये दोषमाह–जह० ॥ ११६८ ॥ स्त्रीणां पण्डकाद्युपलक्षणमेतत् [ भोजने दोषमाह ] निवासस्य मध्ये ॥ १३ ॥ ११६८ ॥ विविक्तशय्यावस्थितावपि कदाचित्स्त्रीसपाते यत्कृत्य तदाह—न रुन० ॥ ११६९ ॥ विलासा–विशिष्टनेपथ्यरचनादय इङ्गित–अङ्गभङ्गादि चित्ते निवेश्य सुन्दरमिद चेति विकल्पत

स्थापयित्वा द्रष्टुं इन्द्रियम् ॥ १४ ॥ ११६९ ॥ किमित्येवमुपदिश्यते इत्याह—अदंसणं० ॥ ११७० ॥ विषयाणां नेतुं व्यवस्येद्–
अध्यवसेत् इदमचिन्तनं चैवं रूपाद्यपरिभावनं अकीर्त्तनं च, असंशब्दनं तच्च नामतो गुणतो वा आर्यध्यानं धर्मादि तस्य योग्य–
तद्धेतुत्वेनोचितम् ॥ १५ ॥ ११७० ॥

कामं० ॥ ११७१ ॥ अनुमतमेवैतद् यदुत देवीभिरपि भूपिताभिर्नैव शकिताः क्षोभयितुं संयमादिति ग०, एकान्तहितमेतदिति ज्ञात्वा कोऽर्थः केचिदभ्यस्तयोगिनोऽपि तत्सङ्गतः क्षुभ्यन्ति येऽपि न क्षुभ्यन्ति तेऽपि स्त्रीसंसक्तवसतिवासे "साहु तवो वणवासो" इत्याद्यवर्णादिदोषभाजो भवेयुरिति परिभाव्य, प्रशस्तोऽन्तर्भावितण्यर्थतया प्रशंसितः ॥ १६ ॥ ११७१ ॥ दुरतिक्रमत्वमाह—सु० ॥ ११७२ ॥ सुरस्त्रीसङ्गातिक्रमे गुणमाह—एए० ॥ ११७३ ॥ एतांश्च संगान्–सम्बन्धान् प्रक्रमात् स्त्रीविषयान् सुखोत्तराश्चैव भवन्ति, शेषाः–द्रव्यादिसङ्गाः, नदी भवेत्सुखोत्तरैवेति ग०, गङ्गासमानापि, विवित्तसिज्जेत्यादि, तत्र विविक्तावसथोक्ता, अवमाशनत्वं प्रकामभोजनत्वं प्रकामभोजननिषेधेन समर्थितं, दमितेन्द्रियत्वं तूत्तरत्र वक्ष्यते ॥ १८ ॥ ११७३ ॥ "न रागसत्तू धरिसेइ चित्तं" मित्यत्र रागस्य दुःखहेतुत्वमाह–काम० ॥ ११७४ ॥ कामेष्वगृद्धः–सतताभिकाङ्क्षा तत् प्रभवं तस्य द्विविधस्यापि दुःखस्यान्तकं पर्यन्तं गच्छतीति, वीतरागः–विगतकामानुगृद्धिरित्यर्थः ॥ १९ ॥ ११७४ ॥ जहा० ॥ ११७५ ॥ अपेगम्यमानत्वात् मनोरमाण्यपि ते तानि–लोकप्रतीतानि क्षुद्रके सोपक्रमे जीविते पच्यमानानि–विपाकावस्थाप्राप्तानि मरणान्तदुःखदायिनीति शेषः ॥ २० ॥ ११७५ ॥ केवलरागस्योद्धरणोपायमुक्त्वाऽधुना तस्यैव द्वेषसहितस्य तमभिधित्सुर्दमितेन्द्रियत्वं च व्याचिख्यासुराह—

जे० ॥ ११७६ ॥ अपेगम्यभावमपि प्रस्तावादिन्द्रियाणि प्रवर्त्तयितुं, किं पुनस्तत्प्रवर्त्तनमित्यपेरर्थः, निःसृजेत्कुर्यात्कदाचित्,

विषयेभ्यो निवर्त्तनमिन्द्रिया मनोऽप्यत्रापीन्द्रियाणि प्रवर्तयितुमपि शब्दार्थश्च प्राग्वत् ॥ २१ ॥ ११७६ ॥ इत्थ रागद्वेषोद्धरणादिणो विषयेभ्यो निवर्त्तनमिन्द्रिया णामुपदिष्टम्, अधुना तत्प्रवर्त्तने रागद्वेषानुद्धरणे च यो दोषस्त प्रत्येकमिन्द्रियाण तत्प्रसङ्गतो मनश्चाश्रित्य दर्शयति—चक्खु० ॥११७७॥ तत्रापि चक्षुराश्रित्य १३, चक्षुषो रूप-वर्ण, संस्थान वा, गृह्यतेऽनेनेति ग्रहणम्, आक्षेपक, यस्तयोर्मनोज्ञेतररूपयो स वीतराग० उप० वीतद्वेषश्च—रूव० ॥ ११७८ ॥ रूपस्य चक्षुर्गृह्णाति ग्रहण, तथा चक्षुषो रूप गृह्यत इति ग्रहण-ग्राह्यम्, अनेन रूपचक्षु षोर्ग्राह्यग्राहकभाव उक्त, परस्परमुपकार्योपकारकभाव उक्त स्यात्, एतेन चाऽनयो रागद्वेषजनने सहकारिभाव स्याप्यते, तथा च यथा रूप रागद्वेषकारण तथा चक्षुरपि अत एवाह—रागस्य हेतु अमनोज्ञमाहुः सह मनोज्ञेन ग्राह्येण रूपेण वर्त्तते समनोज्ञम् ॥ २२ ॥ ११७८ ॥ रागद्वेषोऽनुद्धरणे दोषमाह—रूव० ॥ ११७९ ॥ गृद्धि—राग, अकाले भवमकालिक, रागातुर सन् स, लोक प्रतीतो यथैव आलोक-दीपशिखादिदर्शन तस्मिन्, लोलो—लुम्पट ॥ २४ ॥ ११७९ ॥ जे० ॥ ११८० ॥ यश्च यस्तु, अपि तस्मि निरयनेन योऽस्यते दोष-द्वेष समुपैति रूपमिति ग०, तस्मिन्नपि क्षणे—प्रस्तावे यस्मिन्द्वेष उत्पन्न स तु—पुनर्न उपैति दुःख चित्तसन्तापादिक, ततस्तथाविधस्यदोषस्य वास्य दुःखावाप्तिरिति प्राप्तमित्याशङ्क्याह—दुष्ट दमन दुर्दान्त तच्च अमनोज्ञचक्षुस्तदेव दोषो दुर्दान्तदोषस्तेन स्वकेन जन्तु न किञ्चित्स्वल्पमपि रूप अमनोज्ञ अपराध्यति—दुष्यति से तस्य ॥ २५ ॥ ११८० ॥ इत्थ रागद्वेषयोर्द्वयोरप्यनर्थहेतुत्वमुक्तम्, अधुना द्वेषस्यापि रागहेतुत्वात् स एव महाऽनर्थमूलमिति दर्शयंस्तस्य विशेषत परिहार्यतामाह—

एग० ॥ ११८१ ॥ तादृशे, स करोति प्रदोष सुदर्शन द इव सुन्दरीरागत सुदर्श, सपीडन-रुग्णम् ॥२६॥११८१॥ रागस्यैव प्राधान्यमहत्तुतां स्थापयितु हिंसाद्याश्रवनिमित्तता पुनस्तद्द्वारेण दुःखजनकत्व च सूत्रषट्केनाह—रूवाण० ॥ ११८२ ॥ रूप

प्रस्तावान्मनोज्ञमनुगच्छति रूपानुगा सा चासावाशा च रूपानुगाशा, रूपविषयोऽभिलाषः, तदनुगतश्च चराचरान् त्रसस्थावरान् हिनस्ति अनेकरूपान्, कांश्चित्तु चित्रैरनेकप्रकारैः स्वपरकायशस्त्रादिभिरुपायैरिति ग० परिदुःखयति, अपरांश्च पीडयत्येकदेशदुःखोत्पादनेना- त्माथ गुरुः—स्वप्रयोजननिष्ठः क्लिष्टो–रागबाधितः ॥ २७ ॥ ११८२ ॥ अन्यच्च–रूवे० ॥ ११८३ ॥ रूपविषयोऽनुपातोऽनुराग इत्यर्थः तस्मिंश्च सति परिग्रहेण मूर्च्छात्मकेन हेतुना उत्पादने–उपार्जने रक्षणं चापायेभ्यः सन्नियोगश्च स्वपरप्रयोगेषु सम्यग्व्यापारणं रक्षणसन्नियोग तस्मिन् व्यये-विनाशे वियोगे–विरहे, सर्वत्र रूपस्येति गम्यं, क्व सुखं, 'से' तस्य जन्तोः रूपवद्गजाश्वकलत्राद्युत्पा- दनादिषु दुःखमेवाप्नोतीति भावः, सं० उपभोग प्रस्तावे चाऽतृप्ति. प्राप्त्यभावे सति क्व सुखमिति सम्बन्धः, उत्तरोत्तरेच्छया हि परितप्यत एव रागी ॥ २८ ॥ ११८३ ॥ रूवे० ॥ ११८४ ॥ रूपेऽतृप्तश्च परिग्रहे च तद्विषयमूर्च्छात्मके सक्तः–सामान्येनासक्तिमान् उपसक्तश्च–गाढमासक्तस्ततः सक्तश्च उपसक्तः नोपैति तुष्टिं, तथा चातुष्टिरेव दोषस्तेन दुःखी, परस्य सम्बन्धि रूपवद्वस्त्विति ग० लोभाविल आदत्ते ॥ २९ ॥ ११८४ ॥ तण्हा० ॥ ११८५ ॥ रूपे–रूपविषयो यः परिग्रहः तस्मिन्, अतृप्तस्य च मायाप्रधानामृषाऽ- लीकभाषणं मायामृषा वर्द्धते, लोभदोषात्, लुब्धो हि परस्वमादत्ते, आदाय च तद्गोपनपरो मायामृषा वक्ति तत्रापि मृषाभाषणेऽपि दुःखान्न विमुच्यते, किन्तु दुःख्येव स्यात् ॥ ३० ॥ ११८५ ॥

मोसस्स० ॥ ११८६ ॥ अनृतभाषणस्य पश्चाच्च पुरस्ताच्च प्रयोगकाले च तद्भाषणप्रस्तावे च दुःखी सन्, तथा दुष्टोऽन्त इहा- नेकविडम्बनातोऽमुत्र नरकादिप्राप्त्या यस्यासौ दुरन्तो भवति जन्तुरिति, एवमदत्तानि समाददानो रूपेऽतृप्तः सन् दुःखितः स्यादिति, दोषवत्तया कस्यचिदवष्टम्भेन रहितः, मैथुनरूपाश्रवोपलक्षणं चैतत् ॥ ३१ ॥ ११८६ ॥ रूवा० ॥ ११८७ ॥ तत्र रूपानुरागे

उपभोगेऽपि क्लेशदु ख-अतृप्तिरूपबाधाजनितममातम्, निर्वर्तयति-उत्पादयति यस्योपभोगस्य कृते "ण" अलङ्कारे, दु ख मात्मन इति गा० ॥ ३२ ॥ ११८७ ॥ इत्थं रागदुष्टतामुक्त्वा द्वेषस्य तामाह—एमेव० ॥ ११८८ ॥ एवमेव-यथानुरक्तस्तथैव, यत् से' तस्य दुरव-दु खहेतुर्विपाक-अनुभवकाले इह परत्र चेति भाव ॥ ३३ ॥ ११८८ ॥ उद्धरणे गुणमाह—रूवे० ॥ ११८९ ॥ विरक्त द्विष्टश्च एतेन-अनन्तरोक्तेन, भवमध्येऽपि सन् जलेनेव पु०—पद्मिनीपत्रं जलेऽपि सदिति शेष ॥ ३४ ॥ ११८९ ॥ एवं शेषेन्द्रियाणा मनसश्च त्रयोदश त्रयोदश सूत्राणि व्याख्येयानि नवरं "हिरणमियव्व मुद्धे"त्ति मृग सर्वोऽपि पशुरुच्यते, ततो हरिणपशुर्मुग्धोऽनभिज्ञ ॥ ३५ ॥ ११९० ॥

सर्प इव विलान्निष्क्रामन्, बिडश-प्रान्तन्यस्तामिषो लोहकीलकस्तेन विभिन्नकाय, शीतजलेऽवसन्न-अवमग्न ग्राहैर्जलचरविशेषैर्गृहीतोऽरण्ये वसति हि केनचित्कदाचिदु मोच्येतापि मनसो भावोऽभिप्राय, स चेह स्मृतिगोचरस्त ग्रहण-ग्राह्य, मनोज्ञ-मनोज्ञरूपादिविषयम्, अमनोज्ञ-तद्विपरीतविषयम्, यद्वा स्वप्नकामदशादिषु मनोपस्थापितो रूपादिरपि भाव उक्त, स मनसो ग्राह्य तेषु हि मनस एव केवलस्य व्यापार, कामगुणेषु-मनोज्ञरूपादिषु गृद्ध करेण्वा मार्गेण-निजपथेनापहृत-आकृष्ट करेणुमार्गापहृत नाग इव, सग्रामादिषु विनाशमाप्नोति, चक्षुरादीन्द्रियद्वारादेव मनस्य प्रवृत्तावपि मन प्राधान्यविवक्षया भावदृष्टान्तत्वम् ॥ १२५४ ॥ उक्तार्थमेवाह—एविं० ॥ १२५५ ॥ मनसोऽर्थोपल० इन्द्रियमनासि च रागिण, उपल० द्वेषिणश्च ते चेव इन्द्रियमनोऽर्था, वीतरागवीतद्वेषस्य कुर्वन्ति किञ्चिच्छारीर मानसं च ॥ १०० ॥ १२५५ । ननु क कामभोगेषु सत्सु वीतराग सभवति, तत्कथमस्य दु खाभाव ? उच्यते—

न० ॥ १२५६ ॥ समतां-रागद्वेषाभावरूपामुपयान्ति उपगच्छन्ति हेतुत्वेनेति ग०, तद्धेतुत्वे हि तेषां न कश्चिद्रागद्वेषवान् भवेत्, न चापि भोगाः-भुज्यमानत्वेन शब्दादयो विकृतिं-क्रोधादिरूपाम्, इहापि हेतुत्वेनोपयन्तीत्यन्यथा न कश्चिन रागद्वेषरहितः स्यात्, यस्तत्प्रदोषी च परिग्रही च तेष्वेव रागीत्यर्थः. स मोहात्-रागद्वेषात्मकान्मोहनीयात् विकृतिमुपैति, रागद्वेषरहितस्तु समितामित्यर्थादुक्तम् ॥ १०१ ॥ १२५६ ॥ किंरूपा पुनरसौ विकृतिमुपैतीत्याह—कोह०॥ १२५७ ॥ आव०॥१२५८॥ पुंवेद-स्त्रीविषयाभिलाषं, स्त्रीवेदं-पुरुषाभिष्वगं नपुं०—उभयाभिलाषं. विविधांश्च भावान्-हर्षविषादादीन् आपद्यते-प्राप्नोति एवममुना रागद्वेषवता लक्षणेन-प्रकारेण अनेकरूपान् अनन्तानुबन्धिभेदेन वा, एवंविधान् उक्तप्रकारान्विकारानिति ग०, शब्दादिषु सक्त उप० द्विष्टश्च अन्यांश्च तत्प्रभवान् क्रोधादिजनितान् विशेषान् परितापदुर्गतिपातादीन्. कीदृशः सन्? इत्याह—कारुण्यास्पदीभूतो दीनः का० मध्यमपदलोपी समासोऽत्यन्तदीन इत्यर्थः, ह्रीमान्क्रोधाद्यापन्नो हि तद्विपाकमनुभवन्प्रायोऽतिदैन्यं लज्जां च भजते आर्षत्वाद् द्वेष्यः ॥ १०२-३ ॥ १२५७-१२५८ ॥ प्रकारान्तेरेणोपायमाह—कण० ॥ १२५९ ॥ कल्प्यं योग्यम्, अपिर्गम्यः, शिष्यादीति ग० नेच्छेत्सहायलिप्सुःममासौ देहसम्बन्धनादि साहाय्यं करिष्यतीत्यभिलाषुकः सन् पश्चादिति-प्रस्तावात् व्रतस्य तपसो वाऽङ्गीकाराद्उत्तरकालमनुतापः-किमेतन्मया कष्टमङ्गीकृतमिति चित्तबाधात्मको यस्य स तथाविधः, चादन्यादृशः. भवान्तरे भोगस्पृहालुः, तपःप्रभावं शक्रमान्नेच्छेद् यथा न शक्यमङ्गीकृतं त्यक्तुं परं यस्य व्रतस्य तपसो वा फलमस्ति तत एतस्मादिहैवामर्षौषध्यादिलब्धिरस्तु, तदन्यादृशापेक्षया तु भवान्तरे शक्रविभूत्यादि भूयात्, किमेवं निषिध्यते? इत्याह-एवं विकारान्-दोषान् इन्द्रियचौरवश्यः ॥१०४॥१२५९॥ तओ० ॥ १२६० ॥ ततो-विकारापत्तेरनन्तरं 'से' तस्य जायन्ते प्रयोजनातिक्रमात् विषयसेवनप्राणिहिंसादीनि निमज्जयितुं

प्रक्रमात्तमेव जन्तु मोहमहार्णवे, कीदृशस्यास्यैतानि जायन्ते ? इत्याह—एव विकारस्वैपिण दु खविनोदनार्थं सुखैपितायां हि दु खा पहाराय विषयसेवनादिसभव इति भाव , कदाचिदुदासीन एवाय स्यादित्याह-तत्प्रत्यय-उक्तरूपप्रयोजननिमित्तमुद्गच्छत्येव, कोऽर्थ ? तत्प्रवृत्तावुत्सहत एव, रागी उप० द्वेपी च सन् रागद्वेपजत ॥ १०५ ॥ १२६० ॥ सर्वानर्थपरम्परामाह—

निर० ॥ १२६१ ॥ विरज्यमानस्य द्विपतश्च पुनरिन्द्रियार्था -शब्दादिकास्तावत् प्रकारा बहुभेदा न तस्य-मनुजस्य निर्वर्तयन्ति, कोऽर्थ ? स्वरूपेण हि रूपादयो न मनोज्ञताममनोज्ञता वा कर्तुमात्मन क्षमा किन्तु स्वतेतरप्रतिपत्त्राध्यवसाय स्यात् ॥ १०६ ॥ १२६१ ॥ उपसहरन्नाह - एव० ॥ १२६२ ॥ एवमुक्तप्रकारेण स्वस्य-आत्मन सङ्कल्पा प्र० रागद्वेपमोहरूपाध्यवसायास्तेपा विकल्पना -सर्वदोपमूलत्वादिपरिभावना तास्तूपस्थितस्य सजायते आपत्वात् समता, तथाऽर्थान् जीवादीन् सङ्कल्पयतश्च-शुभध्यानविपयतयाऽध्यवस्यत , तत समतायां 'से' तस्य ॥ १०७ ॥ २६२ ॥ स कीदृश सन् किं विधत्ते ? इत्याह—स० ॥ १२६३ ॥ स प्रहीणतृष्णो वीतराग स्यात् ॥ १०८ ॥ १२६३ ॥ तत्क्षयाच्च क गुणमवाप्नोतीत्याह—सव्व० ॥ १ ६४ ॥ ध्यान-शुक्ल तेन समाधि -परमस्वास्थ्य तेन युक्त , आयुप उपल० नामगोत्रवेद्याना च क्षयस्तस्मिन् ॥ १०९ ॥ १२६४ ॥ मोक्षगतस्वरूपमाह—सो० ॥ १२६५ ॥ स मोक्षप्राप्तो जन्तु तस्मात्-जातिजरामरणरूपत्वेन प्रतिपादितात् यद् दु ख बाधते सतत जन्तु एन-प्रत्यक्ष दीर्घाणि यानि स्थितित प्रक्रमात् कर्माणि तान्यामया इव तेभ्यो विप्रमुक्तो दीर्घामयविप्रमुक्त ॥ ११० । १२६५ ॥

अणा० ॥ १२६६ ॥ प्रमोक्षमार्ग -प्रमोक्षोपाय , यन्दु खप्रमोक्षमार्ग समुपेत्य-सम्यक्प्रतिपद्य क्रमेण-उत्तरोत्तरगुणप्रत्तिरूपेण ॥ १११ ॥ १२६६ ॥ अध्ययनम ३२ ॥

अनन्तरप्रमादस्थानानि उक्तानि, तैश्च कर्म बध्यते, तस्य च काः प्रकृतय इत्यादिसन्देहापनोदायेदमारभ्यते, अस्य च कर्मप्रकृतिरिति नाम—अट्ठ० ॥ १२६७ ॥ आनुपूर्व्या, इयं च पश्चानुपूर्व्यादिरपि स्यादित्याह- यथाक्रमं पूर्वानुपूर्व्येत्यर्थः ॥ १ ॥ १२६७ ॥ णास्स० ॥ १२६८ ॥ उत्तरप्रकृतीराह—णाण० ॥ १२६९ ॥ सातस्यापि बहवो भेदाः, तद्धेतुभूतभूतानुकम्पादिबहुभेदत्वात्, एवमेव बहव एव भेदा असातस्यापि दुःखशोकतापादितद्धेतुबहुविधत्वादेव, सप्तविधं वा कर्मतो कषायवेदनीयं कर्म, तत्र सप्तविधं हास्या दिषट्कं वेदश्च, सामान्येनैक एव, यदा तु वेदत्रयं गृह्यते तदा नवविधम्, अष्टविधत्वं चोच्चनीचयोर्बन्धहेत्वष्टविधत्वात् अष्टौ हि जात्यमदादय उच्चैर्गोत्रस्य बन्धहेतवः तावन्त एव च जातिमदादयो नीचैर्गोत्रस्य ॥ १५ ॥ १२७०–१२८१ ॥ एतन्निगमनायो- त्तरग्रन्थसम्बन्धनाय चाह-एयाओ० ॥ १२८२ ॥ उत्तरप्रकृतयश्च. प्रदेशाग्र क्षेत्रकालौ च, तत्र क्षेत्रं-आकाशं कालश्च-बद्धस्य कर्मणो जीवस्थितिकालः भावं च-अनुभागलक्षणं अत उत्तरमिति अतः-प्रकृत्यभिधानादूर्ध्वं शृणु कथ्यमानशेषः ॥ १६ ॥ १२८२ ॥ तत्र प्रदेशाग्रमाह—सव्वेसिं० ॥ १२८३ ॥ प्रदेशाग्रं-परमाणुप्रमाणं अनन्तकमनन्तपरमाणुनिष्पन्नत्वात्तद्वर्गणानां, तच्चानन्तकं-ग्रन्थि- गसत्त्वाः-ये ग्रन्थिदेशं गत्वाऽपि तद्भेदविधानेन न कदाचिदुपरिष्टाद्गन्तारः, ते चाभव्या एवात्र. तानतीतं-तेभ्योऽनन्तगुणत्वेनातिक्रान्तं ग्रन्थिगसत्त्वातीतं, तथा अन्तः सिद्धानामाख्यातं, सिद्धेभ्यो हि कर्मपरमाणवोऽनन्तभाग एव तदपेक्षया सिद्धानामनन्तगुणत्वात्, एक- समये ग्राह्यकर्मपरमाण्वपेक्षं चैतत् ॥ २७ ॥ १२८३ ॥ क्षेत्रमाह—सव्व० ॥ १२८४ ॥ तुः-पूरणे सङ्ग्रहेः-संग्रहक्रियायां योग्यं स्यादिति शेषः, षण्णां दिशानां समाहारः षड्दिशं तत्र गतं-स्थितमत्र चतस्रो दिश ऊर्ध्वाधोदिग्द्वयं च, इदं चात्मावष्टब्धाकाशप्रदे- शापेक्षयोच्यते, अल्पत्वाच्चेह विदिशामविवक्षितत्वेन षड्दिशागतमित्युक्तिः. यतो विदिग्व्यवस्थितमपि कर्मात्मना गृ०, तथा षड्दि-

ग्गतमपि द्वीन्द्रियादीनेवाधिकृत्य नियमेन व्यारयैकेन्द्रियाणामन्यथाऽपि सभवात् तच्च सर्वेष्वपि प्रदशेषु अर्थादाकाशस्यात्मावष्टब्धेषु
कर्म सर्वजीवाना सग्रहे योग्य स्यात्, तथा सर्वं ज्ञानावरणादि, आत्मा हि सर्वप्रकृतिप्रयोग्या पुद्गलान्सामा येनादाय तानेवाध्यवसाय
विशेषात् पृथक्पृथक् ज्ञानावरणादिरूपत्वेन परिणमयति, तच्चैवविध कर्म सगृहीत सर्वेण प्रप्रमादू, आत्मना बद्ध-आत्मप्रदेशै श्लिष्ट
तदेव बद्धकम्, अ योऽन्यसम्बद्धतया हि शृङ्खलावयवानामिव परस्परोपकारित्वादात्मन प्रदेशाना सदैव योगोपयोगौ स्याताम्, न
त्वकृश, तन्निमित्तकर्मब ध इति सर्वेणैवात्मना, ग्रहणपूर्वकत्वा च्च ब धस्य तदप्येवमेव ॥ १८ ॥ १२८४ ॥ कालमाह—उद०
॥ १२८५-१२८९ ॥ उदधिना सदृग् नाम येषा तान्युदधिसदृग्नामानि-सागरोपमाणि तेषा, मुहूर्तस्यान्तर मुहूर्त्त, जघन्यका प्रक्रमात्
स्थितिर तर्मुहूर्त्तमानैवोक्ता अ ये तु १२ मुहूर्त्तामिवैतामि च्छ त ॥ १९-२३ ॥ १२८५-८९ ॥ भावमाह—सिद्धाण० ॥१२९०॥
सिद्धानामनन्तभागवर्त्तित्वादनन्तभाग, अनुभागा -रसविशेषा भवन्ति, तु -पू०, अय चानन्तभागोऽन तसख्य एवेति, अनेनैषामान
-त्यमेनेत्थमुक्त, सर्वेष्वपि प्रप्रमादनुभागेषु प्रदेशा-बुद्धया विभज्यमानास्तदविभागैकदेशास्तेषामग्र प्रदेशाग्र 'सव्व०' सर्वजीवभ्योऽति
क्रान्त ततोऽपि तेषामन तगुणत्वेनाधिकत्वात् ॥ २५ ॥ १२९० ॥
यस्मादेव प्रकृति-प्रदेश-स्थित्य-नुभागव धानुवत्वा यदर्थमेते प्ररूपितास्तदुपदर्शयन्नुपदेष्टुमाह—तम्हा० ॥ १२९१ ॥ यस्मादेव
विधा प्रकृतिब धादयस्तस्मादेतेषा कर्मणा-अनुभागानुपल० प्रकृतिबन्धादींश्च विज्ञाय एषा कर्मणा सवरे-अनुपात्ताना निरोधे क्षपणे
चोपात्ताना यतेतैव बुध ॥ २६ ॥ १२९१ ॥ अध्ययनम् ३३ ॥

अनन्तर कर्मप्रकृतय उक्ता, स्थितिश्च लेश्यावशत इत्यतस्ता अत्रोच्यन्ते, लेश्याध्ययनमिदम्—

लेस० ॥१२९०॥ लेश्याभिधायकमध्ययन लेश्याध्ययनं, कर्मलेश्यानां कर्मस्थितिविधातृतत्तद्विशिष्टपुद्गलरूपाणामनुभावान्–रस-विशेषान् शृणुत मे कथयत इति शेषः ॥१॥१२९२॥ द्वारसूत्रमाह—नामाइ०॥१२९३॥ परिणामो–जघन्यादिर्लक्षणं पञ्चाश्रवासेवनादि, एषां समाहारद्वन्द्वः, स्थानम्–उत्कर्षापकर्षरूपम्, स्थितिम्–अवस्थानकालम्, गतिं च–नरकादिकां, यतो याऽनाप्यते आयुर्यावति च तत्राविशिष्यमाणे आगामिभवलेश्यापरिणामस्तदिह गृह्यते ॥ २ ॥ १२९३ ॥ नामान्याह—किण्हा० ॥ १२९४ ॥ आसां वर्णानाह —जीमू० ॥ १२९५ ॥ स्निग्धश्चासौ सजलत्वेन जीमूतश्च स्निग्धजीमूतस्तद्वत् सम्यक्काशते–वर्णतः प्रकाशत इति स्निग्धजीमूतस ङ्काशा, गवलं–महिषशृङ्गः, रिष्ठकः–फलविशेषस्तत्सन्निभा, 'खंजण'त्ति खञ्जन–अञ्जनं–कज्जलं नयनं चोपचारात्तदेकदेशस्तन्मध्यवर्ती कृष्णसारस्तत्सन्निभा, वर्णत एव–वर्णमेवाश्रित्य न तु रसादीन् ॥ ४ ॥ १२९५ ॥

नील० ॥ १२९६ ॥ स्निग्धवैडूर्यसंकाशा ॥ ५ ॥ १२९६ ॥ अय० ॥ १२९७ ॥ अतसी–धान्यविशेषः तत्पुष्पसङ्काशा, कोकि-लच्छदः–तैलकण्टकः, तत्संनिभा, कापोतलेश्या तु वर्णतः किञ्चित्कृष्णा किञ्चिच्च लोहितेति भावः ॥ ६ ॥ १२९७ ॥ हिंगु० ॥ १२९८ ॥ हिङ्गुलकः–धातुश्च पाषाणधातादिस्तत्संकाशा ॥ ७ ॥ १२९८ ॥ हरि० ॥ १२९९ ॥ हरितालभेदसंकाशा, भिन्नस्य हि वर्णप्रकर्षः स्यादिति भेदग्रहः, सणो–धान्यविशेषोऽसनो–बीयकस्तत्कुसुमनिभा पीतवर्णेत्यर्थः ॥ ८ ॥ १२९९ ॥ संखं० ॥१३००॥ अङ्को–मणिविशेषः ॥ ९ ॥ १३०० ॥ रसमाह—

जह० ॥ १३०१॥ यथेति याद्दक्कटुकतुम्बकरसः कटुका चासौ रोहिणी च त्वग्विशेषः कटुकरोहिणी तद्रसो वा ॥१०॥१३०१॥ जह० ॥ १३०२ ॥ तीक्ष्णो यथा हस्ति०–गजपिप्पल्या वाऽनन्तगुणोऽतिशयतीक्ष्णः ॥ ११ ॥ १३०२ ॥ जह० १३०३ ॥

तरुण अपक्व तच्च तदाम्रक चाम्रफल तद्रस तुवर-सकषाय चार्थादयस्त्वे तच्च तत्कपित्थ कपित्थफल तस्य, वा-विकल्पे अपि-पूर्णे यादृशको रस इति कापोताया लेश्या कषाय इत्यर्थ ॥ १२ ॥ १३०३ ॥ जह० ॥ १३०४ ॥ परिणत-परिपक्व यदाम्रक तद्रस, ततस्या आम्ल किञ्चि मधुरश्च ॥ १३ ॥ १३०४ ॥ वरवारुणी-प्रधानसुरा तस्य वा रसो यादृशक इति योग' विविधाना वा आसवाना-पुष्पप्रसवमद्याना वा रस इति, मधुमयवि० मेरेय-सरकस्तयो समाहारे मधुमेरेय तस्य वा रसो याद शकोऽतो रसात् पद्माया प्रक्रमाद्रस परकेण-अनन्तगुणत्वात्तदतिक्रमेण वर्त्तत इति शेष, अय च किञ्चिदम्लकषायो माधुर्यवाश्च ॥ १४ ॥ १३०५ ॥

खज्जू० ॥ १३०६ ॥ शर्करासमो यादृश इति शेष ॥ १५ ॥ १३०६ ॥ गन्धमाह—जह० ॥ १३०७ ॥ सूत्रत्वात्कलोपः, गोमृतकस्य नीलाकापोताना गन्ध इति प्रक्रम, लेश्यानामप्रशस्ता विशेषादनुक्तोऽपि गन्धस्य विशेषो ज्ञेय' ॥ १६ ॥ १३०७ ॥ गन्धाश्च-कोष्ठपुटपाकनिष्पन्ना वासाश्च इतरे गन्धवासा, इह चैतदङ्गा येवोपचारादेवमुक्तानि, तेषा पिष्यमाणाना-सचूर्ण्यमानाना यथा गन्ध इति प्रक्रम ॥ १७ ॥ १३०८ ॥ स्पर्शमाह—जह० ॥ १३०९ ॥ ककचस्य शाको-वृक्षवि० तत्पत्राणा स्पर्श इति प्र०, यथाक्रम लेश्यानामप्रशस्याना प्रक्रमात्स्पर्श ॥ १८ ॥ १३०९ ॥ जह० ॥ १३१० ॥ यथाक्रम प्रशस्तलेश्याना स्पर्श ॥१९॥१३१०॥ परिणाममाह—

तिविहो० ॥ १३११ ॥ परिणाम'-तद्रूपगमनात्मक, त्रिविधो-जघन्यमध्यमोत्कृष्टभेदेन नवविधो यदैषामपि जघन्यादीना स्वस्थानतारतम्यचिन्तायां प्रत्येक जघन्यादित्रयेण गुणना, एव पुन २ त्रिगुणने २७विधत्व८१विधत्व२४३विधत्व च भाव

नीयम्, उपल० एनं तारतम्यचिन्तायां संख्यानियमाभावात् ॥ २० ॥ १३११ ॥ लक्षणमाह—पंचा० ॥ १३१२ ॥ त्रिभिः प्रस्तावान्मनोवाक्कार्यः पृथ्वीकायिकादिष्वविरतस्तदुपमर्दकत्वादेरिति ग०, क्षुद्रः सर्वस्याहितैषी साहसिकः, चौर्यादिकृदित्यर्थो नर उपल० क्षयादिर्वा ॥ २१ ॥ १३१२ ॥ 'निद्धंधस'त्ति-अत्यन्तमैहिकामुष्मिकापायशङ्काविकलः परिणामो यस्य स तथा, नृशंसो-निस्त्रिंशः ॥ १३१३ ॥ एतद्योगाः-पञ्चाश्रवप्रवृत्तत्वादयस्तैः समायुक्तः कृष्णलेश्यामेव परिणमेत् तद्द्रव्यसाचिव्येन तदुपरञ्जनात्त द्रूपतां भजेत् ॥ २२ ॥ १३१३ ॥ इस्सा० ॥ १३१४ ॥ इर्ष्या-परगुणासहनममर्षोऽत्यन्ताभिनिवेशोऽतस्तद्विपर्ययो, अविद्या-कुशास्त्ररूपा माया-वञ्चनात्मिका अह्रीकता-निर्लज्जता गृद्धि-विंषयेष्विति ग०, प्रदोश्च-प्रद्वेषो मतुल्लोपात् सर्वत्र तद्वान् जन्तुरुच्य-तेऽत एव शठोऽलीकभाषणात्, प्रमत्तः प्रकर्षेण जात्यादिमदासेवनात् ॥ २३ ॥ १३१४ ॥ आ० ॥ २४ ॥ १३१५ ॥

वंके ॥१३१६॥ वक्रो-वचसा व० क्रियया विकृतिमान् मनसा अनृजुकः-कथंचिदृजूकर्तुमशक्यतया प्रतिकुञ्चक'-स्वदोषप्रच्छादकतया उपधिः छद्म तेन चरत्यौपधिकः, सर्वत्र व्याजतः प्रवृत्तेः ॥ २५ ॥ १२१६ ॥ उ० ॥ १३१७ ॥ उ०-उत्प्रासकं यथा पर उत्प्रास्यते दुष्टं च रागादिदोषवद्यथा स्यादेवंवदनशील उत्प्रासक दुष्टवादी स्तेनश्चौरोऽपि चेति पूरणे मत्सरः-परसम्पदसहनं, तद्वान् मत्सरी ॥२६॥१३१७॥ नीआ० ॥ १२१८ ॥ नीचैर्वृत्तिः-कायमनोवाग्भिरनुसिक्तः योगः-स्वाध्यायादिव्यापारस्तद्वान् उपधानवान्-विहितशास्त्रोपचारः ॥ २७ ॥ १३१८ ॥ पिय० ॥ १३१९ ॥ प्राकृतत्वात् अलोगेऽनद्यं भीरुः हितैषकः-मुक्तिगवेषकः ॥ २८ ॥ १३१९ ॥ माया लोभश्च प्रतनुको यस्येति शेषः, ॥२९॥ १३२० ॥ तथा 'प्रत:०' स्वल्पभाषकः उपशान्तः अउद्भटतयोपशान्ताकृतिः ॥ ३० ॥ १३२० ॥

अट्ठ० ॥ १३२१ ॥ धर्मशुक्ले ध्यायति य कीदृग् स नित्याह–प्रशान्तचित्त ॥३१॥ १३२१ ॥ स विशिष्टलेश्या वाऽपेक्ष्येव लक्षणाभिधानमिति न देवादिभिर्व्यभिचार ॥ ३२ ॥ १३२२ ॥ स्थानद्वारमाह—अस्स० ॥१३२४॥ असङ्ख्येयावसर्पिण्युत्सर्पिणीना ये समया , कियन्त इत्याह–सङ्ख्यातीता लोका', कोऽर्थ –असङ्ख्येयलोकाकाशप्रदेशपरिमाणानि लेश्याना भवन्ति स्थानानि प्रकर्षाप कर्षकृतानि, अशुभाना सङ्क्लेशरूपाणि तत्परिमाणानीति शेष ॥ ३३ ॥ १३२४ ॥ स्थितिमाह—मुहु० ॥ १३२५ ॥ मुहूर्तस्यार्द्धो मुहूर्तार्द्ध , तत्कालात्यन्तसयोगे द्वितीया, अन्तर्मुहूर्तमित्यर्थ , तुरेवार्थे, त्रयस्त्रिंशत्सागरोपमाणि, इहोत्तरत्र च मुहूर्तशब्देन मुहूर्तैकदेश एवोक्त , ततश्चान्तर्मुहूर्ताधिकानि, इह चान्तर्मुहूर्तशब्देन पूर्वोत्तरभवसम्बन्ध्यन्तर्मुहूर्तद्वयमुक्तम् , एवमुत्तरत्रापि ॥ ३५ ॥ १३२५ ॥ मु० ॥ १३२६ ॥ उदधय–उदध्युपमानि, पल्योपमाऽसख्यभागाधिकानि उत्कृष्टा स्थिति ॥ ३६ ॥ १३२६–२९ ॥ प्रकृतमुपसंह रन्नुत्तरसम्बन्धमाह—एसा० ॥ १३३० ॥ चतुर्ष्वपि गतिषु प्रत्येकमिति शेष ॥ ४० ॥ १३३० ॥

दस० ॥ १३३२ ॥ (गाथा १५) सागरोपमपल्योपमाऽसङ्ख्येयभाग चोत्कृष्टा, इय च जघन्या रत्नप्रभायाम् , उत्कृष्टा च वालुका प्रभायाम् , तत्राप्युपरितनप्रस्तटनारकाणामेवैतावत्स्थितिकानाम् ॥४१ ॥ १३३२ ॥ ति० ॥ १३३३ ॥ इह जघन्या वालुकायामेता वत्स्थितिकानामेव, उत्कृष्टा च धूमायामुपरितनप्रस्तटनारकाणा, तत्रापि येषामेतावती स्थिति ॥ ४२ ॥ १३३३ ॥ द० ॥ १३३४ ॥ जघन्यिका धूमायामेतावत्स्थितिष्वेव नारकेषु उत्कृष्टा महातम प्रभायाम् , इह च नारकाणामुत्तरत्र च देवाना द्रव्यलेश्यास्थितिरेवै चिन्त्यते, तद्भावलेश्याना परिवर्त्तमानतयाऽपि स्थिते सम्भवात् ॥ ४३ ॥ १३३४ ॥ ए० ॥ १३३५ ॥ 'तेण त्ति सूत्रत्वात् तत परम् इत्यग्रतो वक्ष्यामि, प्रक्रमाल्लेश्याना स्थिति ॥ ४४ ॥ १३३५ ॥

अंतो० ॥ १३३६ ॥ अन्तर्मुहूर्त्तार्द्धम्-अन्तर्मुहूर्त्तकालं लेश्यानां स्थितिर्जघन्योत्कृष्टा चेति शेषः, कतराऽऽसामित्याह-यस्मिन् इति पृथ्वीकायादौ संमूर्च्छिममनुष्यादौ च याः कृष्णाद्याः, 'तुः' पू० तिरश्चां मनुष्याणां च मध्ये सम्भवन्ति, तासां एता हि क्वचित्का-श्चित्सम्भवन्ति, केवलां शुद्धां लेश्यां-शुक्ललेश्यामित्यर्थः ॥ ४५ ॥ १३३६ ॥ अस्याः स्थितिमाह—मु० ॥१३३७॥ शुक्लेश्यायाः स्थितिरिति प्रक्रमः, इह च यद्यपि कश्चित्पूर्वकोटयायुरष्टवार्षिक एव व्रतपरिणाममाप्नोति तथापि नैतावद्वयःस्थस्य वर्षपर्यायादर्वाक् शुक्ललेश्यायाः संभव इति नवभिर्वर्षैर्न्यूना पूर्वकोटिरुच्यते ॥ ४६ ॥ १३३७ ॥ ए० ॥ १३३८ ॥ दस० ॥ १३३९ ॥ पल्योपमा-संख्येयतमः प्र० भागः, इयं च कृष्णाया स्थितिरेतावदायुषामेव भवनपतिव्यन्तराणां द्रष्टव्या ॥ ४८ ॥ १३३९ ॥ जा० ॥ १३४० ॥ समयाभ्यधिका, पल्योपमासंख्येयश्च भाग उत्कृष्टास्थितिर्बृहत्तरभाग इयं ज्ञेयः ॥ ४९ ॥ १३४० ॥

जा० ॥ १३४१ ॥ एतावदायुषामेव भवनपतिव्यंतराणामिमे ज्ञेये, इहापि पूर्वस्मात् बृहत्तरोऽसंख्येयभागो गृ० ॥ ५० ॥ १३४१ ॥ इत्थं निकायद्वयभाविनीमाद्यलेश्यात्रयस्थितिमुक्त्वा सर्वनिकायभाविनीं तेजोलेश्यास्थितिमभिधातुं प्रतिज्ञामाह—ते० ॥ १३४२ ॥ यथा-येनैवावस्थानप्रकारेण सुरगणानां तथेति ॥ ५१ ॥ १३४२ ॥ प० ॥ १३४३ ॥ इयं वैमानिकविषयैव नेया, तत्र च सौधर्मैशानदेवानां द्विधाप्येतावदायुषः संभवात्, उपल० चैतच्छेषनिकायतेजो० स्थितिः ॥५२ ॥ १३४३ ॥ द० ॥ १३४४ ॥ अनेन निकायभेदमङ्गीकृत्यैव लेश्यास्थितिरुक्ता ॥ ५३ ॥ १३४४ ॥ जा० ॥ १३४५ ॥ दश तु-दशैव प्रस्तावात्सागराणि मुहूर्त्ता-धिकानि, इयं च जघन्या सनत्कुमारे उत्कृष्टा च ब्रह्मलोके, आह-यदीहान्तर्मुहूर्त्तमधिकमुच्यते ततः पूर्वत्रापि किं न तदधिकमुच्यते ? देवभवलेश्याया एव तत्र विवक्षितत्वाद्। अत्र हि प्रागुत्तरभवलेश्याऽपि 'अंतोमुहुत्तंमि एग' त्ति वचनाद्देवभवसम्बन्धिन्येवेति

प्रदर्शनार्थमित्थमुक्तम् ॥ ५४ ॥ १३४५ ॥

जा० ॥ १३४६ ॥ अस्याश्च लान्तकात्प्रभृति यावत्सर्वार्थसिद्धिस्तावत्सम्भव ॥ ५५ ॥ १३४६ ॥ गतिद्वारमाह—किण्हा० ॥ १३४७ ॥ अधमलेश्या पापोपादानहेतुत्वात् दुर्गतिं—नरकतिर्यग्गतिरूपा उपपद्यते-प्राप्नोति ॥ ५६ ॥ १३४७ ॥ ते० ॥ १३४८ ॥ सुगतिं—देवमनुष्यगतिरूपाम् ॥ ५७ ॥ १३४८ ॥ साम्प्रतमायुर्द्वारावसर, तत्र च यस्या लेश्याया यदायुषो मान तत्स्थितिद्वारे एवार्थत उक्तम्, इह त्विदमुच्यते—अवश्य हि जन्तुर्यल्लेश्यपुत्पत्स्यते तल्लेश्य एव म्रियते, तत्र जन्मान्तरभाविलेश्याया किमाद्यसमये परभवायुष उदय आहोस्विच्चरमसमयेऽन्यथा वेत्यत आह—ले० ॥१३४९॥ प्रथमे समये तत्प्रतिपत्तिकालापेक्षया परिणताभिरात्मस्वरूपतामापन्नाभि ॥ ५८ ॥ १३४९ ॥ ले० ॥ १३५० ॥ अतो० ॥ १३५१ ॥ अन्तर्मुहूर्त्ते गते एव, तथान्तर्मुहूर्त्त एव शेषके चैव, इत्थं चैतन्मृतिकाल भाविभवलेश्याया उत्पत्तिकाले चातीतभवलेश्याया अन्तर्मुहूर्त्तमवश्य भावात् ॥ ६० ॥ १३५१ ॥ उपसंहरन्नुपदेशमाह—त० ॥ १३५२ ॥ यस्मादेता अप्रशस्ता दुर्गतिहेतवः प्रशस्ताश्च सुगतिहेतवस्तस्मात्, अधितिष्ठेद् मुनिरिति शेष ॥ ६१ ॥ १३५२ ॥ इति अध्ययनम् ३४ ॥

अप्रशस्तलेश्यास्त्यागत प्रशस्ता एव ता अधिष्ठातव्या इति अनन्तरमुक्तम्, एतच्च भिक्षुगुणव्यवस्थितेन कर्तु शक्यम्, तदवस्थान च तत्परिज्ञानत इति तदर्थमिदमारभ्यते, अनगारमार्गगतिरितिनामास्य—

सुणेह० ॥ १३५३ ॥ मम कथयत इति शेष, मार्ग प्रक्रमा मुक्त, अनेन सैन्यसेवकसम्बन्धेनानगारसम्बन्धित्व मार्गस्य तत्फल, च ॥ १ ॥ १३५३ ॥ सम्भाष्यन्ते कर्म्माणीति गम्यते, मानवा उपल० अन्येऽपि जन्तव ॥ २ ॥ १३५४ ॥ तथा समुच्चये एव पू० चौर्यं,

इच्छारूपः कामः इच्छाकामस्तं वा-अप्राप्ता वस्तुकाङ्क्षा रूपं लोहं च लब्धवस्तुगृद्धयात्मकम्, अनेनोभयेनापि परिग्रह उक्तस्ततः परिग्रहं च ॥ ३ ॥ १३५५ ॥ अनेन मूलगुणा उक्ताः, आश्रयचिन्तामाह—

मणो० ॥ १३५६ ॥ चित्रप्रधानं गृहं चित्रगृहं, माल्यैः-ग्रथितपुष्पैः धूपनैर्वासितं माल्यधूपनवासितम् ॥ ४ ॥ १३५६ ॥ किमेवमुपदिश्यते—इंदि० ॥ १३५७ ॥ चक्षुरादीनि तुः-यस्माद्दुष्कराणि निवारयितुं स्वस्वविषयप्रवृत्तेरिति गम्यते, कामा-मनोज्ञा इन्द्रियविषयास्तेषु रागः-अभिष्वङ्गस्तस्य विवर्द्धने ॥ ५ ॥ १३५७ ॥ क्व स्थेयमित्याह—सुसाणे० ॥ १३५८ ॥ एकको द्विधापि रागादिवियुतोऽसहायो वा, 'पइरिक्के' देश्या एकान्ते-स्त्र्याद्यसंकुले परैः कृते स्वार्थमिति ग०, तत्र श्मशानादौ अभिरोचयेदात्मने भिक्षुरिति योगः ॥ ६ ॥ १३५८ ॥ फासु० ॥ १३५९ ॥ सम्कल्पयेत्-कुर्यात् ॥ ७ ॥ १३५९ ॥ नन्विह किं परकृत इत्युक्त-मित्याशङ्क्याह—न सयं० ॥ १३६० ॥ उपल० नापि कुर्वन्तमनुमन्येत, यतो गृहकर्म-इष्टकामृदानयनादि तस्य समारम्भः-प्रवर्त्तनं तस्मिन् ॥ ८ ॥ १३६० ॥

तमाणं० ॥ १३६१ ॥ सूक्ष्माणां देहापेक्षया ॥ ९ ॥ १३६१ ॥ आहारचिन्तामाह-पचनपाचनेषु भूतवधो दृश्यते इति प्रक्रमः, प्राणा-द्वीन्द्रियादयो भूतानि-पृथिव्यादयो, भूतानां दयार्थं न पचेत्स्वतो भक्तादीति ॥ १० ॥ १३६२ ॥ अमुमेवार्थं स्पष्टमेवाह—जल० ॥ १३६३ ॥ उपल० तद्रूपाश्च, हन्यन्ते भक्तपानेषु प्रक्रमात्पच्यमानादिषु, अपिर्गम्यः, पाचयेदपि न किं पुनः स्वयं पचेद्, अनुमतिनिषेधोपल० ॥ ११ ॥ १३६३ ॥ अन्यच्च—विसप्पे० ॥ १३६४ ॥ विसर्पति-स्वल्पमपि बहूभवतीति विसर्पं सर्वतो धारं-सर्वदिग्स्थजन्तूपघातकत्वात् शस्त्रमन्यदिति ग० ॥ १२ ॥ १३६४ ॥ क्रयविक्रयार्थं हिरण्यादिपरिग्रहनिषेधमाह—हिरण्णं०॥१३६५॥

चोऽनुक्ताऽपधनधान्यादिसमुच्चये समलोष्टुकाञ्चन सन् भिक्षुर्विरत स्यादिति शेष ॥ १३ ॥ १३६५ ॥ किमित्येवमत आह–

क्रिणतो० ॥ १३६६ ॥ क्रीणन्–क्रयकस्तथाविधेतरलोकसदृश एव भवति, विक्रीणानश्च–वणिग् वाणिज्यप्रवृत्तत्वादिति भाव, न तादृशो, यादृशो भावभिक्षुरिति ग० ॥ १४ ॥ १३६६ ॥ तत किमित्याह—भिक्ख० ॥ १३६७ ॥ भिक्षितव्य–याचितव्य तथाविध वस्त्विति ग०, नैव क्रेतव्यम् ॥ १५ ॥ १३६७ ॥ भिक्षितव्यमेकत्रैव स्यादित्याह—समु० ॥ १३६८ ॥ पिण्डपात–भिक्षाटन चरेत्–आसेवेत ॥ १६ ॥ १३६८ ॥ इत्थ पिण्डमवाप्य यथा भुञ्जीत तथाह—अलो० ॥ १३६९ ॥ अलोल –न सरसाप्राप्ते लाम्पट्यवान्, न रसे स्निग्धादौ गृध्र , प्राप्तावभिकाङ्क्षावान्, यतो दान्तजिह्वोऽत एवामूर्च्छित सन्निधेरकरणेन, यापनार्थनिर्वाह स चार्थात्संयमस्य तदर्थम् ॥ १७ ॥ १३६९ ॥ अच्च० ॥ १३७० ॥ अर्चना–पुष्पादिभि पूजा, रचना निषद्यादिविषया, पूजन वस्त्रादिभि प्रतिलाभन, ऋद्धि –श्राद्धोपकरणादि सत्कारोऽर्घदानादि , सम्मानोऽभ्युत्थानादि ॥ १८ ॥ १३७० ॥

किं पुन कुर्यादि—सुक्क० ॥ १३७१ ॥ शुक्लध्यान यथा स्यादेव ध्यायेत् विहरेदप्रतिबद्धविहारेणेति ग० यावत्कालस्य मृत्यो पर्याय –प्रस्ताव इत्यर्थ ॥ १९ ॥ १३७१ ॥ ततश्च निज्ज० ॥ १३७२ ॥–परित्यज्य मानुषीं बुन्दि–तनु प्रभु वीर्यान्तरायक्षयतो दु विमुच्यते ॥ २० ॥ १३७२ ॥ किंदृश सन्नित्याह–नि० ॥ १३७३ ॥ परिनिर्वृत –अस्वास्थ्यहेतुकर्माभावत सर्वथा स्वस्थोभूत ॥ २१ ॥ १३७३ ॥

॥ इति ३५ अध्ययनम् ॥

अनन्तर हिंसापरिवर्जनादयो भिक्षुगुणा उक्ता , ते च जीवाजीवस्वरूपपरिज्ञान एवासेवितु शक्यन्त इति ज्ञापनार्थमिदमारभ्यते—

जीवा० ॥ १३७४ ॥ जीवानां विभजनं–विभक्तिरतत्त्वेदादिदर्शनतो विभागेनावस्थापन जीवाजीवविभक्तिरतां मे कथयत इति गम्यते, एकमनसः–इहैव श्रद्धानवन्त इत्यर्थः, इतः–अस्मादनन्तराध्ययनादनन्तरम् ॥ १ ॥ १३७४ ॥ जीवाजीवविभक्तिज्ञानमिन लोकालोकविभक्तिज्ञानमपि संयमविषयतयोपयुज्यते एवाह—

जीवा० ॥ १३७५ ॥ 'अजीव' इत्यनेनाजीवसमुदाय उपलक्ष्यते तस्य देशोऽजीवदेशः आकाशमालोकः ॥ २ ॥ १३७५ ॥ जीवानां विभक्तिः प्ररूपणाद्वारेणैवेति तां विधित्सुर्यथाऽसौ स्यात्तथाह—दव्वओ० ॥ १३७६ ॥ द्रव्यत–इदमियच्चेदं द्रव्यं, क्षेत्रत–इदमियति क्षेत्रे, कालत–इदमियत्स्थितिकं, भावत–इमेऽस्य पर्यायाः ॥ ३ ॥ १३७६ ॥ स्वल्पवक्तव्यत्वाद्द्रव्यतोऽजीवप्ररूपणामाह —रूवि० ॥ १३७७ ॥ रूपिणो दशविधानाह—धम्म० ॥ १३७८ ॥ तस्य धर्मास्तिकायस्य देशः त्रिभागचतुर्भागादिस्तद्देशः, तथा तस्य प्रदेशो–निरंशो भागस्तत्प्रदेशः ॥ ५ ॥ १३७८ ॥ आगासे० ॥ १३७९ ॥ अद्धा–कालस्तद्रूपः समयोऽद्धासमयो निर्विभागत्वाच्चास्य न देशप्रदेशसम्भवः ॥ ६ ॥ १३७९ ॥ एतानेव क्षेत्रत आह—धमा० ॥ १३८० ॥ समयः–इत्यद्धासमयः समयक्षेत्र विषयभूतमस्यास्तीति समयक्षेत्रिकः ॥ ७ ॥ १३८० ॥ एतानेव कालत आह—

ध० ॥ १३८१ ॥ सम० ॥ १३८२ ॥ सर्वाद्धामेव–सर्वदा स्वस्वरूपापरित्यागतो नित्यानित्यार्थौ व्याख्यातानि–कथितानि सन्तति–अपरापरोत्पत्तिरूपप्रवाहात्मिकां प्राप्य–आश्रित्य एवमेवानाद्यपर्यवसितलक्षणेनैव प्रकारेण, आदेशं विशेष प्रतिनियतव्यवस्थात्मकम् ॥ ८–९ ॥ १३८१–८२ ॥ संप्रति भावप्ररूपणावसरः. तत्र चामूर्त्तत्वेन नामीषां पर्याया इव वर्णादयः प्ररूप्यमाणा अपि संवित्तिमानेतुं शक्याः, अनुमानतस्तितरथाऽपि द्रव्यस्य पर्यायविकलस्यासम्भवाद्गम्यन्त एवेति तत्प्ररूपणामनादृत्य द्रव्यत रूपिणः

पत्नोदेशो द्वावेव रूपिद्रव्यभेदौ ... परमाणवश्चेति समासतो द्वावेव रूपिद्रव्यभेदौ
प्ररूपयति—खं० ॥ १३८३ ॥ इह देशप्रदेशाना स्कन्धेष्वेवा तर्भावात्स्क धा परमाणवश्चेति समासतो द्वावेव रूपिद्रव्यभेदौ
॥ १० ॥ १३८३ ॥ तयोश्च किंलक्षणमित्याह—एग० । सूत्रार्द्धमेकत्वेन-समानपरिणतिरूपेण रक्ष्य त इति शेष , स्क धा हि सहता-
नेकपरमाणुरूपा , परमाणवश्च परमाण्वन्तरैरसहतिभाज । एतानेव क्षेत्रत आह—लोए० ॥ १३८४ ॥ सूत्रार्द्ध लोकस्यैकदेश -एक-
द्व्यादिसङ्ख्यातासङ्ख्यातप्रदेशात्मक प्रतिनियतो भागो लोकैकदेशस्तस्मिन् लोके च, भक्तव्या -भजनया दर्शनीया 'ते' स्क धा
परमाणवश्च तु -पू० अत्र चाविशेषोक्तावपि परमाणूनामेकप्रदेश एवावस्थानात् स्क धविषयैव भजना , ते हि विचित्रत्वात्परिणतेर्बहु-
तरप्रदेशोपचिता अपि केचिदेकप्रदेशे तिष्ठन्ति, अ ये तु सङ्ख्येयेषु प्रदेशेषु यावत्सकललोकेऽपि तथाविधाचित्तमहास्क धवद् भज-
नीया उच्यन्ते, अतोऽनन्तरमिति गम्य, कालविभाग तु काल भेद, पुनस्तेषा-स्क धादीनाम् , इद सूत्र पट्पाद गाथेति॥११॥१३८४॥
म० ॥ ३ ॥ १३८५-८६-८७ ॥ स्थिर्ति-प्रतिनियतक्षेत्रावस्थानरूपा प्रतीत्याङ्गीकृत्य ॥ १२ ॥ १३८५ ॥ सादिसपर्यवसितत्वेन
कियत्कालमेषामवस्थितिरित्याह—अस० ॥ १३८६ ॥ अजीवाना रूपिणा पुद्गलानामित्यर्थ', जघ यतस्त्वेकसमयादुत्कृष्टतस्त्वसङ्ख्ये
यकालात्परतोऽवश्यमेव विघटनात् ॥ १३ ॥ १३८६ ॥ सम्प्रति कालद्वारा तर्गतमेवा तरमाह—अण० ॥ १३८७ ॥ अन तर विव
क्षितक्षेत्रावस्थिते प्रच्युताना पुनस्तत्प्राप्ते , व्यवधानमेतदुक्तरूप व्याख्यातम् ॥ १४ ॥ १३८७ ॥ एतानेव भावत आह—वण्ण०
॥ १३८८ ॥ स्पर्शपरिणता एते-स्क धादय पूरणगलनधर्माण पुद्गला समुदाहृता । अत्र च ग धौ द्वौ रसा ५ स्पर्शा ८ सस्थानानि
५ एते च मीलिता २०, एतावतो भङ्गान् प्रत्येक पञ्चापि वर्णा लभ त जात १०० रसादय १८, ते च पञ्चभिर्वर्णैर्मीलित २३
ततश्च ग धद्वयेन लब्धा ४६ एव रसपञ्चकसयोगे १०० । स्पर्शाष्टस० १३६ । परिमण्डलस्थाने यो वर्त्तत इति शेष , भाज्य., स तु

